वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजाया (२) अप क्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजां

---

वायवे। नियुत्वत इति नि-युत्वते। एति। लभेत। प्रजाकाम इति प्रजा-काम। प्राण इति प्र-अन। वै। वायु। अपान इत्यप-अन। नियुदिति नि-युत्। प्राणापानाविति प्राण-अपानौ। खलु। वै। एतस्य। प्रजाया इति प्र-जायाः (२)। अपेति। क्रामत। य। अलम्। प्रजाया इति प्र-जायै। सन्। प्रजामिति प्र-जाम्। न। विन्दते। वायुम्। एव। नियुत्वन्तमिति नि-युत्वन्तम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मै। प्राणापानाभ्यामिति प्राण-अपानाभ्याम्। प्रजामिति प्र-जाम्। प्रेति। जनयति। विन्दते। प्रजामिति प्र-जाम्।

---

प्रजाकाम इति ॥ प्रजां पुत्रादिकां कामयमान। प्राण इति। उपर्यधोभागाभ्यां प्राणापानगमनयो। प्राणापानौ खल्विति। अनयोरपक्रमणात् प्रजा नोपद्यते। [27]योऽलमिति। [28]सत्यामेव प्रजननशक्तौ प्रजां न लभते, प्राणापानानुग्रहात्। स एवेति। नियुत्वान् वायु प्राणापानरूपत्वेन[29] [30]प्रजां [31]जनयति ॥

---

वायव इति ॥ पुनरपि फलान्तराय विधत्ते– 'वायवे नियुत्वत आ लभेत प्रजाकाम प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजाया अप क्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजाम्' इति। प्रकर्षेणानितीति मुखबिलाद्बहिश्चेष्टत इति [31]प्राणवायुश्च तथाविध। अपकर्षेण मुखादधस्तादुदरस्थाने अनितीति[32] चेष्टत इति [33]अपान। [33]नियुत्कल्पो नितरां यौति मिश्रीभवतीति व्युत्पत्त्या तथाविधमर्थमाचष्टे। [4]य पुरुष प्रजार्थम् [5]अलम् [6]सन्[32] अनुकूलस्त्रीयुक्त सन्[32] युवा च सन् अपत्यं न लभते [7]एतस्य पुरुषस्य [8]प्रजाया सकाशात् [9]प्राणापानौ अपक्रान्तौ भवत। अपत्यलाभायानेन[33] पुरुषेण गर्भाशये निषिक्ते रेतसि नियुत्पत्यो वायोरनुग्रहाभावात् प्राणापानयुक्त जीवान्तरं न प्रविशति। एतदेवाभिप्रेत्यैतरेयोपनिषदि श्रूयते– 'न ह वा अस्य प्राणादृते सिच्यते यद्वा ऋते प्राणादृते सिच्यते पूयेत न सम्भवेत्' (ऐआ ३ २ २) इति। नियुत्वान् वायु [1]भागधेयेन[34] तुष्ट[35] यजमानार्थं मदीयरेतसि [2]प्राणापानाभ्यां युक्त जीवं प्रवेश्य प्रजां [3]प्र जनयति। तथा यजमान पुत्रं लभते ॥

२७ १९–नाट्यमिति। २८. तैर ११२–मत्यामेव। २९. मैऽ–°रूपद्वयो।

२९. आ इ क द द १ ग ग १९–प्रा वायुभ। ३० अ उ पा–°धमादिति। ३१. अ उ पा– '[illegible]' नास्ति, द दा हा–नियुत्कल्पोऽपि। ३०–३२. ह हा–ध्यानुकूलस्त्रीयुक्त, अ उ पा– [illegible] पुत्र। ३३ ह क ग–अपत्यलाभार्थेन। ३४ द दा हो [illegible]।

वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्त९ स्वेन भागधेयेनोप (३) धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव

प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति

---

वायवे। नियुत्वत इति नि-युत्वते। एति। लभेत। ज्योगामयावीति ज्योक्-आमयावी। प्राण इति प्र-अन। वै। वायु। अपान इत्यप-अन। नियुदिति नि-युत्। प्राणापानाविति प्राण-अपानौ। खलु। वै। एतस्मात्। अपेति। क्रामत। यस्य। ज्योक्। आमयति। वायुम्। एव। नियुत्वन्तमिति नि-युत्वन्तम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति (३)। धावति। स। एव। अस्मिन्। प्राणापानाविति प्राण-अपानौ। दधाति। उत। यदि। इतासुरितीत-असु। भवति। जीवति। एव। प्रजापतिरिति प्रजा-पति। वै। इदम्। एक। आसीत्। स। अकामयत। प्रजा इति प्र-जा। पशून्। सृजेय। इति।

---

Vज्योगामयावी दीर्घरोग। प्राणापानावित्यादि गतम्। यस्येति। "रुजार्थानाम्०" (पा २ ३ ५४) इति षष्ठी। उतेति। Vयदि अपि Vइतासु गतासु Vभवति, तथाऽप्यनेन कर्मणा Vजीवति Vएव [३०] इति स्तुति [३०]॥

प्रजापतिर्वा इत्यादि। Vइद परिदृश्यमान स्थावरजङ्गमात्मक सर्वं जगत् Vप्रजापति Vएक एव प्रयस्तमितसमस्तविकार Vआसीत्। Vस प्रजापति Vप्रजा Vपशून् च Vसृजेय Vइति Vअकामयत।

---

वायवे नियुत्वत इति॥ पुनरपि फलान्तराय विधत्ते–'वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादप क्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्त९ स्वेन भागधेयेनोप धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव' इति। Sज्योगामयावी दीर्घरोगयुक्त। Sयस्य Sज्योक् Sआमयति यं पुरुष चिरमामयो बाधत एतस्मात् [३६] Sप्राणापानौ अति क्रान्तुमुद्यतौ [३६]। Sअस्मिन् Sप्राणापानौ Sदधाति [३७]चिर स्थापयति। अपि च Sयदि कथचिद्भूमौ [३८]शयान [३९]प्राणा [४०] मुहूर्तमात्र याममात्र वा परेतो [४०] भवेत्तथाऽपि वायोरनुग्रहादागतप्राण [४१] Sजीवति Sएव [४२]॥

प्रजापतिर्वेति॥ कर्मान्तर विधातु प्रस्तौति–'प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजा पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपर समभवत्त९ स्वायै देवताया आऽलभत

---

३०–३० मै४–'इति स्तुति' नास्ति।

---

३६–३६. ड१–प्राणावपक्रान्तु°, हो१–प्राणावतिक्रान्तु°। ३७ ड ड१ हो१–स्थिरम्। ३८. अ उ पा–शयानात्। ३९ अ उ पा–प्राण। ४०–४० इ मुहूर्त गतप्राण, ड ड१ हो१–मुहूर्त याममात्र गतो। ४१. ड ड१ हो१–°दागतो प्राणे। ४२ इ क हा–स जीवति।

स आत्मनो वपामुदक्खिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत् तं स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत

सः। आत्मनः। वपाम्। उदिति। अक्खिदत्। ताम्। अग्नौ। प्रेति। अगृह्णात्। ततः। अजः। तूपरः। समिति। अभवत्। तम्। स्वायै। देवतायै। एति। अलभत। ततः। वै। सः। प्रजा इति प्र-जाः। पशून्। असृजत।

व्यत्ययेनात्मनेपदम् (पा.३.१.८५)। उत् अक्खिदत् उद्धृतवान्। खिद परिघाते, [31]छान्दसो वर्णोपजनः। व्यञ्जनद्वयादिरित्येके। ता वपामग्नेरुपरि होतुं प्र अगृह्णात् अधारयत्। ततः प्रगृहीताया वपायाः अजः तूपरः [32]शृङ्गविहीनः समभवत्। [33]पुच्छविहीन इत्येके। अथ प्रजापतिः तम् अजम् स्वायै देवतायै आत्मानमेव देवतां कृत्वा तस्यै आ अलभत। ततो वा इत्यादि। गतम्॥

'ततो वै स प्रजाः पशूनसृजत' इति। यत् इदम् प्रजापशुरूपं जगदिदानीं दृश्यते तदिदं सृष्टेः [42]पूर्वं प्रजापतिः एकः आसीत् प्रजापतिरेव स्थितो नान्यत् किंचिदित्यर्थः। सः च [44]प्रजापशुसृष्टिकामस्तत्साधनत्वेन स्वशरीरादुदरमध्यवर्तिनीं पटसदृशीं वपाम् उत् अक्खिदत् [45]उत्खिद्योद्धृतवान्। तां च वपाम् अग्नौ प्रक्षिप्तवान्। ततः दग्धायाः वपायाः अजः तूपरः शृङ्गरहितः समुत्पन्नः। तं चाजं स्वात्मरूपां देवतामुद्दिश्य आऽलभत[46]। तत्कर्मसामर्थ्यात् प्रजाः पशून् असृजत। ननु स्वयमेव स्ववपामुत्खिद्याजं तत उत्पाद्य तं च स्वार्थमालभ्य जगत् [47]सर्वमप्यसृजतेति [48]महदेवैतदिन्द्रजालम्। बाढमिन्द्रजालमेवैतत्। अत एवान्यत्राऽऽम्नातम्—" इन्द्रो मायाभिः पुरुरूप ईयते " (ऋसं. ६.४७.१८ बृउ. २.५.१९) इति, " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " (श्वेउ ४.१०) इति च[49]। न [50]खल्विन्द्रजालविषये विस्मेतुं च भवानीच्छति[50]। यथा तु लौकिकेऽपीन्द्रजाले न काऽप्यनुपपत्तिः [51]तदानीमचिन्त्यमहिम्नि सर्ववेदसिद्धे परमेश्वरे का [52]नाम तवानुपपत्तिः। अन्यथा क वीर्यं क वा पुरुषः, क बीजं क वा [53]वृक्ष इत्यादिकं [54]मथानुपपादकं मन्य. कथं [55]युक्तिभिरुपपादयति। संकल्पसिद्धे जगदीश्वरे को नाम विस्मय इति चेत् [56]तर्ह्येतत् प्रकृतेऽपि [57]न विस्मयः[57]। संकल्पसिद्धस्य किमेतावता प्रयासेनेति चेत्[58]। नानाविधभोगैः[59] तृप्तस्य[60] राजादेः किं पुत्रमृगयादिव्यापारेणेति त्वया[61] वक्तव्यम्। लीलेति चेत्। [62]तद्वत्राप्यनुसंधेहि। तथा च स्मृतिः[63]—

३१. मै१–तौदादिकश्छान्दसः। ३२. तै२–शृङ्गहीनः। ३३. तै२,लं–पुच्छहीनः।

४२. इ–आदौ। ४४. इ. द. दा१. हो१–'प्रजापशु°' नास्ति। ४५. दा१–उत्खिद्योद्धृत°। ४६. इ–आऽलभत। ४७. द. दा१. हो१–सर्वमपि। ४८. दा१–महदेतदि°। ४९. आ–'च' नास्ति। ५०–५०. अ.उ.पा–न खल्विन्द्रजालविषये विस्मितुं च भवानीच्छति, इ–च लौकिके इन्द्रजाले विस्मातुं च भवानीच्छति, दा–न खल्विन्द्रजालविषये विस्मातुं च भवानीच्छति, हो१–न खल्विन्द्रजाले विस्मितुं भवानपि नेच्छति, द१–न खल्विन्द्रजाले विस्मितुं च भवानीच्छति। ५१. इ–तदाचिन्त्य°; हो१–°चिन्त्यमहिम्ना। ५२. इ–'नाम' नास्ति। ५३. इ पदद्वयम्। ५४. हो१–यथानुपपादकंमन्यः। ५५. इ–युक्तिमनुप°। ५६. दा१–तर्हि। ५७–५७. इ हो१–का विस्मयः। ५८. इ. दा–चेत् सत्यम्। ५९. द.दा१–°विधभोगैः। ६०. हो–तृप्तस्य। ६१. अ.उ.पा–'त्वया' नास्ति। ६२. द.हो१–तदत्रा°। ६३. आ.क–श्रुतिः।

यः प्रजाकामः (४) पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां पशून् प्र जनयति यच्छ्मश्रुणस्तत् पुरुषाणाᳲ रूपं यत् तूपरस्तदश्वानां यदन्यतोदन् तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानामेतावन्तो वै ग्राम्याः पशवस्तान् (५) रूपेणैवाव रुन्द्धे

य । प्रजाकाम इति प्रजा-काम. (४)। पशुकाम इति पशु-काम । स्यात् । स । एतम् । प्राजापत्यमिति प्राजा-पत्यम् । अजम् । तूपरम् । एति । लभेत । प्रजापतिमिति प्रजा पतिम् । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । स । एव । अस्मै । प्रजामिति प्र-जाम् । पशून् । प्रेति । जनयति । यत् । श्मश्रुण । तत् । पुरुषाणाम् । रूपम् । यत् । तूपर । तत् । अश्वानाम् । यत् । अन्यतोदन्नित्यन्यत -दन् । तत् । गवाम् । यत् । अव्या । इव । शफा । तत् । अवीनाम् । यत् । अज । तत् । अजानाम् । एतावन्त । वै । ग्राम्या । पशव । तान् (५)। रूपेण । एव । अवेति । रुन्द्धे ।

यदित्यादि ॥ [34]पशुगणा स्तूयन्ते[34]। श्मश्रुणत्व [35]श्मश्रुमत्त्व [v]पुरुषाणा [v]रूपम् । पामादित्वान्नप्रत्यय (पा ५ २·१००)। तूपरत्वम् [v]अश्वाना रूपम् । अन्यतोदत्त्वम् अन्यतरपार्श्वस्थितदन्तवत्त्व [v]गवा रूपम् । "छन्दसि च" (पा ५ ४ १४२) इति दतृभाव । यत [v]अव्या [v]इव अस्य [v]शफा [36]सन्ति [v]तत् [v]अवीना रूपम् । अजत्वमेव [v]अजाना रूपम् । [v]एतावन्त [v]वै [v]ग्राम्या [v]पशव प्रधाना, उष्ट्रगर्दभयोरसप्रायत्वात् । तानिति । [v]तान् सर्वान् पशून् यथोक्तगुणलक्षण[37] पशुमालभमान रूपद्वारेण [v]अव [v]रुन्द्धे ॥

"भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे" (द्र मांड ६–गौका ९)। विष्णुपुराणमपि[64]—"क्रीडतो बालकस्येव चेष्टा तस्य निशामय" इति । व्याससूत्रमपि–"लोकवत्तु लीलाकैवल्यम्" (ब्रसू २ १ ३३) इति अलमतिप्रसङ्गेन ॥

य· प्रजाकाम इति ॥ विधत्ते–'य प्रजाकाम पशुकाम स्यात् स एतं प्राजापत्यमज तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजा पशून् प्र जनयति' इति ॥

यदिति ॥ पशु प्रशसति–'यच्छ्मश्रुणस्तत्पुरुषाणाᳲ रूप यत्तूपरस्तदश्वाना यदन्यतोदन् तद्गवा यदव्या इव शफास्तदवीना यदजस्तदजानामेतावन्तो वै ग्राम्या पशवस्तान् रूपेणैवाव रुन्द्धे' इति ॥ [65]पुरुषावजे श्मश्रूणि विद्यन्ते । तूपरत्व सर्वेष्वजेष्वभावेऽपि प्रकृते विद्यते । [66]अन्यतोऽध एव दन्ता इति

३४–३४ मै४–पशुगण स्तूयते । ३५ मै४–'श्मश्रुमत्व' नास्ति । ३६ ल–भवन्ति । ३७ तंर,मै–यस्योक्तगुणम्, पर–यथोक्तगुणम् ।

६४. अ उ क पा हा–°पुराणेऽपि । ६५ इ–पुरुषवदजे । ६६ हो१–अधस्तात्, ड१–अधस्था, क हा–अन्यतोऽधस्ते ।

सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभि जायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः

सोमापौष्णमिति सोमा-पौष्णम्। त्रैतम्। एति। लभेत। पशुकाम इति पशु–कामः। द्वौ। वै। अजायै। स्तनौ। नाना। एव। द्वौ। अभीति। जायेते इति। ऊर्जम्। पुष्टिम्। तृतीयः। सोमापूषणाविति सोमा-पूषणौ। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। तौ। एव। अस्मै। पशून्। प्रेति। जनयतः।

त्रैतमिति। त्रयाणां वत्सानां युगपज्जातानां [३८]समुदायस्थितम्[३८], तत्र भवस्त्रैत.। [३९]मध्यम एवेति केचित्। त्रयोऽप्यालभ्या इत्यपरे। यस्त्रिस्त्रः पिबति स त्रैत इति केचित्। इदानीं [४०]त्रैतस्य [४१]सोमापूषसंबन्धं प्रतिपादयति–द्वौ वा इति। [४२]Vअजायै Vद्वौ Vस्तनौ [४३]क्षीरप्रस्राविणौ। तयो [४४]द्वयो. Vऊर्जं रसं [४५]क्षीरलक्षणम् Vअभि अभिलक्ष्य Vद्वौ वत्सौ Vजायेते Vनाना Vएव पृथक्स्वभावावेव[४६] [४७]अनियतस्तनपायिनौ जायेते। Vतृतीयं तु वत्सं Vपुष्टिम् अभि जायते पुष्ट्यतिशयनिर्दिष्टत्वात्[४८] तस्य। एवं रसपुष्टिप्रसक्तत्वात् सोमापूष्णो. [४९]स्वो भागः[४९] त्रैतः। गतमन्यत्॥

[६७]Vअन्यतोदन् अन्यतोदत्त्वम्[६७]। अविखुरसदृशा. Vशफा.[६८] दृश्यन्त एव। [६९]अजत्वजातिश्चास्ति। [७०]तस्मात् पुरुषादिरूपत्वम् अजत्वम्[७१]। यद्यपि ग्राम्येषु पशुषु गर्दभोष्ट्रावपि सप्तसंख्यासिद्ध्यै[७२] तत्र तत्र ( द्र. श्रौश्रौ २४.५ ) गृह्येते तथाऽपि पुरुषादयः पञ्चैव प्रशस्ता विप्रराजादिभिरत्यन्तमादृतत्वात्। अत एव तदीयेन [७३]रूपेण[७३] सर्वरूपसदृशेन Vतान् पुरुषादीन् सर्वानधीनान् करोति॥

सोमापौष्णमिति॥ पश्वन्तरं विधत्ते–'सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभिजायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधा. पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनयति' इति। त्रयाणां वत्सानां युगपज्जातानां समुदायस्थितं तत्र भवस्त्रैतस्तेषामन्यतम इत्यर्थः। त्रयाणामुत्पत्तौ प्रयोजनमेवमुन्नेयम्, अजायास्तावत् [७४]Vद्वौ Vस्तनौ प्रसिद्धौ, तौ Vनाना Vएव पृथगेव पातुं Vद्वौ वत्सौ Vजायेते। मातृरूपायामजायां [७५]यच्छरीरमार [७६]या च तच्छरीरगता[७६] पुष्टिस्तदुभयं [७७]व्यापयितुं Vतृतीयः वत्सः

३८–३८. लं–यस्त्रित., तै.मैर–य. स नितः। ३९. मै४–तेषामन्यतम. मध्यमः। ४०. मै४–तस्य। ४१. लं–सोमपूरुकर्मरूपम्। ४२. अ१ तै.२ मै.लं–अजायाः। ४३. तैर.मै.लं–क्षीरस्रवणौ। ४४. मै४–'द्वयोः' नास्ति। ४५. तैर–क्षीरस्तरणम्। ४६. तैर.मै–'एव' नास्ति। ४७. अ१.मै४–नियत°। ४८. मै४–°निमित्तत्वात्। ४९.–४९. तैर–'स्वो भाग.' नास्ति।

६७–६७. इ क.द.ट१.हो१–अन्यतोदत्त्वम्। ६८. द.ट१. हो१–खुराः। ६९. इ–आसजा°। ७०. क–तत्। ७१. अ.इ.उ.क.द.ट१.पा.हा.हो–'अजत्वम्' नास्ति। ७२. इ. ट१. हो१–गर्दभोष्ट्रयोः सिद्ध्ये। ७३. इ–स्वरूपेण। ७४. हो१–यौ। ७५. आ–येषमूर्धगः शरम्; ट१–यच्च शरीर। ७६–७६. अ. उ. पा–पायच्छरीर°; आ.क.हा– या च शरीर°। ७७. अ.उ.पा.हा–व्यापयितुम्।

काम्या पशव ]

सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनयत्यौदुम्बरो यूपो ( ६ ) भवत्यूर्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्द्धे ॥

[ एत्र प्रजाया उप प्रजाकामस्तान् यूपस्त्रयोदश च ]

सोमः । वै । रेतोधा इति रेत–धा । पूषा । पशूनाम् । प्रजनयितेति प्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । पूषा । पशून् । प्रेति । जनयति । औदुम्बर । यूपः ( ६ ) । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति । रुन्द्धे ॥ १ ॥

[ मैस २ ५ १, कासं १२ १३, १३ १ ]

किञ्चेत्याह- सोमो वा इति ॥ सिक्तस्य रेतसो धाता रेतोधा । "आतो मनिन्" ( पा ३ २ ७४ ) इति विच् । पूषा तु सिक्तस्य रेतस पशुत्वेन परिणमयिता ॥

औदुम्बर इति "अनुदात्तादेश्च" ( पा४ ३ १४० ) इयञ् । ऊर्जा इति । अन्नस्य क्षीरादित्वात् ताच्छब्द्यमुभयत्र । गतमन्यत् ॥

इति द्वितीयकाण्डे प्रथमप्रश्ने प्रथमोऽनुवाक ॥

उत्पन्न[७८] । द्वावेव हि[७९] सर्वत्र जायेते, तृतीयस्तु क्वचिदेव । तथा सति यस्या तृतीयो जातस्तस्या शरीरे वीर्याधिक्य [८०]पुष्टयाधिक्य चास्तीति लक्षयितु शक्यते । किं बहुना त्रैत प्रशस्त इति द्रष्टव्यम् । गर्भाशये रेतो यथा न स्रवति तथा सोम धारयति । पूषा[८१] भूमिरूपत्वात् स्वकीयौषधिरसेन पोषयित्वा प्र जनयति ॥

औदुम्बर इति ॥ चोदकप्राप्त खादिर बाधितु विधत्ते–'औदुम्बरो यूपो भवत्यूर्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्ज पशूनव रुन्द्धे' इति ॥ फलाना [८२]यथा [८३]बहुत्वादुदुम्बरस्योर्क्रूपत्व क्षीरद्वारेण पशुरपि तथाविध । अत ऊर्जा एव उदुम्बररूपया यजमानार्थम् ऊर्क्रूपान् [८४]पशून् संपादयति ॥

अत्र मीमासा ॥ [८५]यत् पूर्वमग्निहोत्रादीना मूलप्रकृतित्वमुक्त[८६] [८७]तदष्टमाध्यायस्य प्रथमपाद चिन्तितम्—

"इष्टयग्निहोत्रसोमाना मूलप्रकृतिता न हि ।
अस्ति वा नालौकिकत्वादियत्ताऽनवधारणात् ॥
लोकवत् सनिपत्यारादुपकारिद्वयश्रुते[८८] ।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥" ( जैन्या ८ १ ५ ६ ) ॥

७८. ड हो१–समुत्पन्न । ७९ ड१–'हि' नास्ति । ८०. इ–'पुष्टयाधिक्य' नास्ति । ८१ इ ड ड१ हो१–पूषा च । ८२. अ उ पा – च । ८३ अ उ पा–सत्वादु°, ड ड१–भक्ष्यत्वादु° । ८४ ड ड१– 'पशून्' नास्ति । ८५. आ–भदन, अ उ पा हा–यन । ८६ ड ड१ हो१–'उक्तम्' नास्ति । ८७ ड हो१–'तत्' नास्ति । ८८ अ उ क ड१ पा हो१–°द्वय श्रुते , इ–°द्वय श्रुति ।

अलौकिकत्वेन एतावद्भिरङ्गैः संपूर्ण उपकारः इति निश्चेतुमशक्यत्वादिष्ट्यादीनां नास्ति मूलप्रकृतित्वम् इति चेत्। मैवम्। लौकिकसदृशत्वात्। यथा लोके भुजिक्रियायामोदनः करणं तस्य संनिपत्योपकारिणः शाकसूपादय आरादुपकारिणः पीठप्रदीपादयस्तथा भावनायां यागः करणमवघातादयः संनिपातिन प्रयाजादय आरादुपकारिणोऽतो नात्यन्तमलौकिकत्वम्। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते [89]तथा श्रौते[89] श्रुत्या निश्चीयताम्। तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति ॥

[90]मासाग्निहोत्रस्य नित्याग्निहोत्राद्भेदो द्वितीयाध्यायस्य तृतीयपादे चिन्तितः —

"मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः।
अनूद्य [91]प्राप्तं कर्मात्र मासोऽप्राप्तो[91] विधीयते ॥
उपसद्भिश्चरित्वेति नित्ये तासामसंभवात्।
अनेकस्याविधेश्चान्यत् कर्म प्रकरणान्तरात् ॥" ( जैन्या २.३.२६-२७ ) ॥

कुण्डपायिनामयने श्रूयते— "मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजेत" ( द्र. तांब्रा २५.४.१ ) इति। अत्र प्राप्तं नित्याग्निहोत्रमनूद्य मासलक्षणो गुणोऽप्राप्तत्वाद्विधीयत इति चेत्। मैवम्। किं मास एव विधीयत [92]उत 'उपसद्भिश्चरित्वा' इत्युक्तत्वात्[92] उपसदोऽपि? नाऽऽद्यः। उपसदामपि नित्याग्निहोत्रे [94]प्राप्तिरहितानां त्वन्मते[94] विधातव्यत्वात्। न द्वितीयः। प्राप्ते कर्मण्यनेकगुणविधौ[95] वाक्यभेदापत्तेः। ननु मा भूत् तर्हि गुणविधिः कर्मान्तरत्वे किं प्रमाणम् इति चेत्। प्रकरणान्तरमिति ब्रूमः[96]। न ह्येतन्नित्याग्निहोत्रस्य प्रकरणम्, असंनिहितत्वात्। अयनस्य त्वेतत्प्रकरणम्, अयनमारभ्याधीतत्वात्। [97]का तर्हि नित्याग्निहोत्रे गुणविधिशङ्केति चेत्। प्रकरणस्यासमर्पकत्वेपि[98] अग्निहोत्रशब्देन [99]तत्समर्पणादेषा शङ्का भवति। सा च वाक्यभेदापत्त्या निराकृता। तथा सति स्वतःसिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन[100] गुणं विधापयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य[101] शक्तौ निरुद्धायां तदवस्थः प्रकरणभेदो [102]नित्याग्निहोत्रादिदं कर्म[102] भिनत्ति। अग्निहोत्रशब्दो धर्मातिदेशार्थ इति सप्तमे ( जैन्या ७.३.१-३ ) वक्ष्यते। ननूपसन्मासाभ्यां गुणाभ्यां विशिष्टं कर्म विधीयते, [103]ततो वाजिनन्यायेन गुणभेदात् कर्मभेदो न प्रकरणभेदादिति चेत्, न। वैषम्यात्। [104]उपादेयतया विधेयो गुणो वाजिनं, मासस्त्वनुपादेय इत्येकं वैषम्यम्; द्रव्यत्वेन [105]गुणान्तर्गतं वाजिनं, मासो न तथेत्यपरं वैषम्यम्। परमार्थतस्त्वत्र प्रथमतरप्रवर्तिना प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति[106]। ततः[107] प्रकरणान्तरमेवात्र भेदहेतुरिति[108] ॥

---

८९-८९. द.दा१.हो१–तथाश्रौ। ९०. अ.उ.हा–मासस्याग्नि°। ९१-९१. अ.पा–प्राप्तकर्मत्वमनाप्रात., हो१–नित्यं कर्मात्र मासं प्राप्त , द–नित्यं कर्मात्र मासो प्राप्ति°, दा१–कर्माग्निहोत्रं मासाप्राप्तः। ९२. अ.उ.क.पा–उत वा। ९३. द.दा१–इत्युक्ताः। ९४-९४. द.दा१.हो.१–°रहितत्वात् न तेषाम्। ९५. अ.उ.पा–°नेन गुणविधौ। ९६. आ.द.दा१–वदाम.। ९७. दा१–न। ९८. द–°समर्पकत्वेऽपि, ९९. हा–एतत्सम°; अ.उ.पा–°णादेषा। १००. अ.उ.प–°पादने। १०१. अ.उ.पा–°होत्रस्य शब्दस्य। १०२–१०२. अ. उ. प–नित्यकर्म। १०३. अ. उ.पा–तथा। १०४. अ.उ.पा–उपपादयति। १०५. द.दा१–रुपान्तर्गतम्। १०६. अ–उपोद्बोधयति, उ– उपोद्बोधयितुम्। १०७. द.हो१–अतः। १०८. दा१–'इति' नास्ति।

इदृशस्य कर्मणो धर्मापेक्षत्व [109]सप्तमाध्यायस्य चतुर्थपादे चिन्तितम्—

" सौर्ये चरौ[110] न धर्मा स्यु स्युर्वा मानविवर्जनात् ।
न स्यु, स्यु करण यागोऽपेक्षते ह्युपकारिण ॥ " ( जैन्या ७ ४ १ ) ॥

" सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकाम " (द्र तैस २ ३ २) इत्यत्रावघातादयो धर्मा न प्राप्यन्त । [111]कुत ? प्रापकप्रमाणाना श्रुतिलिङ्गादीनामभावादिति चेत् । मैवम् । [112] विमतो याग [112] उपकरणापेक्ष करणत्वात् । लौकिकवैदिककर्मोपनदर्शपूर्णमासादिवत् [113] इत्यनुमानेन तत्प्रापणात् [113] ॥

तत्रैवान्यच्चिन्तितम्—

" विध्यन्तोऽपेक्षितस्तत्र लौकिको वाऽथ वैदिक ।
आद्यो निबन्धराहित्यादन्त्यो धीसन्निकर्षत [114] ॥ ( जैन्या ७ ४ २ ) ॥

तत्र सौर्यचरावपेक्षित [115]प्रधानविधे शेषाङ्गकलाप [115] स्थालीपाकादिगतो लौकिको ग्रहीतव्य । कुत ? अनिबद्धत्वात् । वैदिकस्तु प्रकरणेन [116]कर्मविशेषे निबद्ध सन्न ततो वियोजयितु [117]शक्यत इति चेत् । मैवम् । वैदिके करणे वैदिकविध्यन्तस्य[118] बुद्धिसन्निकर्षात् । यथा प्रकरणेन क्वचिन्निबद्धस्तथा चोदकेनान्यत्रापि निबध्यताम् । किं च " प्रयाजे प्रयाजे कृष्णल जुहोति " (तैस २ ३ २) इति सौर्ययागविधिशेषे[119] कृष्णलहोमविधानाय सिद्धवत्प्रयाजोऽनूद्यते । तच्च वैदिकेतिकर्तव्यताया लिङ्गम् । तस्मात् वैदिको ग्राह्य ॥

स च [120] विध्यन्त ईदृशेषु [120] कर्मसूपदेशतो[121] न प्राप्नोतीति सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

" [122]सर्वार्थं प्रकृतार्थं [122] वा प्रयाजाद्युपदेशनम् ।
[123] यज्यन्वयेन सर्वार्थं [123] नातिदेशो विचार्यताम्[124] ॥
[125]अङ्गप्रधानयोर्मुख्यापूर्वभेदे[126] समन्वयात् ।
[127]प्रकृतार्थमत कार्यमतिदेशविचारणम् ॥ " ( जैन्या ७ १ २ ३ ) इति ॥

दर्शपूर्णमासप्रकरणे प्रयाजादय (द्र तैस २ ६ १) उपदिष्टा, ज्योतिष्टोमप्रकरणे दीक्षणीयादय (द्र तैस ५ ५ १, ६ १ २)। [128]तत्रैते सर्वे धर्मा [128] सर्वयागार्थत्वेनोपदिश्यन्ते। कुत ? यज्यन्वयात् । याग करण, प्रयाजादय [129]इतिकर्तव्यतेत्येतावदविवादम् । तत्र यदि प्रयाजादयो यागवदपूर्वेणान्विता स्यु तदानीमपूर्वनिष्पादकत्वमुभयत्र समानमिति कृत्वा करणोपकरणत्वलक्षण सर्वसमतमङ्गान्तरवैषम्यं बाध्येत । किं [130]चावघातपेषणादीना यागनिष्पादकत्वेन यज्यन्वयो दृष्टस्तद्वदङ्गत्वसामान्यात्[131] प्रयाजादीनामपि

---

१०९ अ उ पा हा–सप्तमस्य। ११० अ उ पा–चरौ । १११ आ–'कुत ' नास्ति। ११२–११२. हो१–विध्यन्तो युगपत् । ११३–११३ ड ड१ हो१–'इत्यनु णात्' नास्ति। ११४ अ उ पा–°ऽपि सन्निकर्षात हो–°ऽक्षिसन्निकर्षत । ११५–११५ आ क ड प्रधानविधिशेषा°, हा–विधान विशेषाङ्ग°,। ११६ ड–दात्तविशेषे। ११७ ड–शक्य । ११८ अ उ पा–°विध्यशस्य। ११९ अ उ क पा–°विधिविशेषे, हा–°विधिशेषेषु। १२०–१२० ड विध्यन्तरकृतेषु, हो१–विध्यन्तरधृतेषु। १२१ ड१–°सूपदेशेन। १२२–१२२ अ उ पा–सर्वार्थप्रकरणार्थम् । १२३–१२३. उ पा यज्युभयन सर्वार्थो, हा–यन्यन्वयेन सर्वार्थो ड–यज्यन्वयेन सर्वासाम् ड–यजे (?) न्वयेन सर्वार्थम्। १२४ उ पा–विचार्यते। १२५ ड ड१–स च प्रया°। १२६ अ उ ड पा–°मुख्यात्पूर्वभेदे, ड१–°मुख्यात् पूर्व भेदे। १२७ ड ड१–प्रकृतार्थं तत, हा प्रकृतार्थे तत । १२८–१२८ अ उ–तत्र ते पर्वधर्मा पा–तत्र ते सर्वधर्मा, क–तत्र ते सर्वे धर्मा ड१ हो१–त एते सर्वे धर्मा, ड–तत एते सर्वे धर्मा । १२९. पा–इत्यपकरोत्येतत्तावत । १३० ड हो१–चावघातादिपेषणादीनाम। १३१ ड ड१ हो१–°साम्यात।

यज्यन्वयो युक्तः। यजिधातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते। तथा सति सौर्यश्येनादिष्वप्युपदेशेनैव कृत्स्नधर्मप्राप्तेरतिदेशविचारो न कर्तव्य इति प्राप्ते ब्रूमः–अपूर्वं हि[132] मुख्यं फलवत्त्वात्। यजिर्न मुख्यः, फलरहितत्वात्। फलवति मुख्ये प्रयाजादिविधानं[133] युक्तम्। अतः करणेतिकर्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः। पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः। तथा सत्यपूर्वभेदस्य द्वितीयाध्याये (जैन्या ७.२.८-१०) निरूपितत्वादपूर्वविशेषेण तत्करणभूतयजिविशेषेण [134]वाऽन्विताः प्रयाजादिधर्मा ये यस्मिन् प्रकरण आम्नातास्ते तत्रैव व्यवतिष्ठन्ते। सत्येवं प्रकरणमर्थवद्भवति। सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात्। तस्मात् सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षां[135] पूरयितुमतिदेशविचारः कर्तव्यः॥

प्रत्यक्षवचनेन धर्मातिदेशस्तत्रैव चिन्तितः —

"इषौ"[136] समानमितरच्छ्येनेनेत्यनुवादकम्।
श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकम्[137]॥
ज्योतिष्टोमविकारत्वात् [138-]तद्धर्माश्चोदकात् समाः[-138]।
[139]श्येनेष्वोरितरस्योक्तिरिषुवैशेषिकं प्रति॥
इषुवैशेषिकादुक्तादितरच्छ्येनगं स्फुरेत्।
वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते॥" (जैन्या ७.१.४-६) इति॥

इषुनामकः श्येननामकश्च [140]द्वावप्येकाहौ ज्योतिष्टोमविकारौ[141], [142]तयोरुभयोर्ज्योतिष्टोमधर्माः चोदकेन प्राप्ताः। ते चोभयत्र समानाः। तच्च समानत्वम्[143] इषुप्रकरणेऽनेन[144] वाक्येनानूद्यते– "समानमितरच्छ्येनेन" (पञ्चा ४.३.७) इति। नन्वत्र इतरशब्दोक्तिरनुपपन्ना, तत्प्रतियोगिनः कस्यचिदनिर्दिष्टत्वादिति चेत्। न। पूर्ववाक्यविहितस्य विशेषधर्मस्य[145] प्रतियोगित्वात्। इषौ यो वैशेषिकधर्मो[146] विहितस्तं परित्यज्य इतरच्चोदकप्राप्तं [147]सर्वं श्येनेन समानमित्यर्थः। तस्मादनुवादकमिदं वाक्यमिति प्राप्ते ब्रूमः–इतरशब्दः प्रतियोगिसजातीयं ब्रूते। [148]तद्यथा–[149]एष देवदत्त एक एवाधीते नेतरः कश्चिदित्युक्ते अध्ययनप्रसक्तिमान्[150] यज्ञदत्तादिमाणवकः[151] प्रतीयते न तु गवाश्वघटपटादिः। एवमत्राऽपि इषुवैशेषिकस्य[152] पूर्ववाक्योक्तस्य [153-]प्रतियोगित्वात् तत्समानजातीयं[-153] श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकं धर्मजातम् इतरशब्देन प्रतिभाति। तच्च प्रकृतावभावान्न चोदकेन प्राप्तम्। तस्मात् [154]इषावनुष्ठेयत्वेन अतिदिश्यते[155]॥

---

१३२. आ–'हि' नास्ति। १३३. ड१.हो–प्रयाजाधानम्; अ.उ.पा–प्रयासवि°। १३४. ड.ड–चान्विताः। १३५. अ.उ.पा.हा–धर्म्याकाङ्क्षाम्। १३६. अ.उ.ड.ड१.पा–इषौ। १३७. अ.उ.पा–°नुवादनम्। १३८–१३८. अ.उ.पा–°श्चोदकात्मनः। १३९. अ.उ.ड.पा–श्येनेषोरि°। १४०. ड१–द्वावेकाहौ। १४१. ड१.हो१–°विकारयोः। १४२. ड१–'तयोः' नास्ति। १४३. अ.उ.पा–प्रकरणसमानत्वम्। १४४. अ.उ.क.पा–°प्रकरण°। १४५. अ.उ.पा–विशेषस्य धर्मस्य; हो१–विशेषादिधर्मत्व°। १४६. ड.ड१.हा–वैशेषिको धर्मः। १४७. अ.उ.पा–सर्वे प्रति। १४८. अ.उ.पा.हा–अयत्र। १४९. अ.आ.उ.क.पा.हा–'एषः' नास्ति। १५०. ड–°यने प्रसक्तिमान्। १५१. ड.ड१–°दत्तादिमाणवकः। १५२. अ.उ.ड१.पा–वैशेषिकस्य। १५३–१५३. अ.उ.पा–प्रतियोगित्वसमान°; क.ड.ड१–प्रतियोगित्वात् तत्सजातीयम्। १५४. अ.उ.पा–अत्रानु°; ड.हो१–इषावनु°। १५५. ड–अनुदिश्यते।

काम्या पशव ]

नाम्ना धर्मातिदेशस्तत्रैव तृतीयपादे चिन्तित —

" मास जुहोत्यग्निहोत्रमिति नामाऽग्निहोत्रत ।
नित्यान्मासाग्निहोत्रेऽस्मिन् धर्माणा नातिदेशकम् ॥
इतातिदेशक नैव [156] द्वयोर्नाम्न[157] समत्वत ।
अग्नये होत्रमित्यस्य[158] नित्ये सपादितत्त्वत ॥
तत्र मुख्य ततोऽन्यत्र गौणत्वस्य प्रसिद्धये ।
नित्याग्निहोत्रगान् धर्मास्तन्नामातिदिशेदिह[159] ॥ " (जैन्या ७ ३ १-३ ) इति ॥

कुण्डपायिनामयने श्रूयते—" [160] मासमग्निहोत्र जुहोति " ( ताण्ड्य २५ ४ १ ) इति । तत्र अग्निहोत्रम् इत्येतन्नाम नित्याग्निहोत्रादन्यस्मिन्[161] मासाग्निहोत्रे धर्मानतिदेष्टु नार्हति । कुत ? तस्य नाम्न उभयोरग्निहोत्रयोर्मुख्यवृत्त्या [162]समानत्वादिति प्राप्ते ब्रूम —अग्नये होत्र " यस्मिन् कर्मणि तत् अग्निहोत्रम् [163] इत्येतम्[164] अवयवार्थं नित्याग्निहोत्रे[165] सपाद्य तन्नामधेयत्व प्रथमाध्याये ( जैन्या १ ४ ८ १२ ) निर्णीतम् । अतस्तत्रैवाय शब्दो मुख्य । न चोभयत्र मुख्यत्व सभवति अनेकार्थत्वस्य[166] अन्याय्यत्वात् । मुख्यत्वासभवेन [167] मासाग्निहोत्रे गुणयोगाद्वर्तितु नित्याग्निहोत्रगुणानतिदिशति [167] ॥

[168] प्रत्यक्षवचने नाम्नोरभावेऽपि[169] नियतादेव कर्मणोऽतिदेशोऽष्टमाध्यायस्य प्रथमपादे चिन्तित —

" [170] कस्माचिदतिदिश्यन्ते नियतात् कर्मणोऽथ वा ।
[171] अविशेषादादिमोऽन्त्य शास्त्रार्थस्य व्यवस्थिते ॥ " ( जैन्या ८ १ २ ) इति ॥

विहितेतिकर्तव्यतारहिते सौर्यादौ कर्मणि तदुक्तात्[172] यत कुतश्चित् कर्मणो धर्मा अतिदिश्यन्ते । कुत ? नियामकस्य विशेषस्याभावात् । [173] अतो विशेषचिन्ता न [173] कार्येति चेत् । मैवम् । [174] शास्त्रार्थव्यवस्थाया नियामकत्वात् । [175]तस्मान्नियतादेकस्मात् कर्मणो धर्मातिदेश । तेन विशेषचिन्ता कर्तव्या ॥

तत्रैव विशेषनियामक चिन्तितम्—

" तद्धितोक्त्यादिलिङ्ग किं न विशेषनियामकम् ।
भवेन्न न [176] ह्यत्र शब्दत्वाच्चेच्छब्दे प्रवेशत [177] ॥ " ( जैन्या ८ १ ३ ) इति ॥

दर्शपूर्णमासयो " आग्नेयमष्टाकपाल निर्वपति " ( द्र तैस १ ८ २ ) इत्यत्र तद्धितोक्त्या देवता निर्देश एकदेवतायोगित्वम् औषधद्रव्यकत्व[178] निर्वाप [179]इत्येतान्याग्नेययागसबन्धितया श्रूयमाणत्वा दाग्नेयलिङ्गानि[180] । " सौर्यं चरु निर्वपेत् " ( तैस २ ३ २ ) इत्यत्रापि तान्युपलभ्यन्त । न

---

१५६ ड-नैवम् । १५७ हो१-°र्नाम्नो । १५८ अ उ पा-°मित्यत्र । १५९ क-°तन्नाम्नाति दिशेदिह । १६० अ उ पा मासाग्नि° । १६१ अ उ ड पा हा-°दस्मिन् । १६२ अ उ पा हा-समानत्वमिति । १६३-१६३ अ उ पा 'यस्मिन्कर्मणि तदग्निहोत्रम्' नास्ति । १६४ ड-त्येतदेवम् । १६५ पा-°ग्निहोत्रम् । १६६ अ उ पा-अनेकार्थस्य हा अनेकार्थत्वेऽस्य । १६७-१६७ हो१-मासाग्नि होत्रगुणानति° । १६८ आ क ड प्रत्यक्षवचन° । १६९. ड ड१-'अपि' नास्ति । १७० ड-कि कस्माच्चाति° । १७१ अ उ पा-अवशेषा° ड न विशेषा°, ड१-सविशेषा° । १७२ अ उ पा 'तदुक्तात्' नास्ति । १७३-१७३ अ उ पा-अविशेषचिन्ता केन ड-अतो विशेषेण चिन्ता न । १७४ क हो१ शास्त्रार्थस्य व्यव° । १७५ अ उ क पा-°आग्नेयलिङ्गानियता° । १७६ ड ड१- च शब्द° । १७७ अ उ पा हा प्रवेशक । १७८ क ड-ओषधिद्रव्य° अ उ पा-°द्रव्यकम् । १७९. अ उ पा-इत्येताभ्यामेव यथासबधि° । १८० अ उ पा-°त्वादग्नेर्लिङ्गानि ।

तेपामाग्नेयधर्मातिदेश नियन्तु सामर्थ्यमस्ति। कुत ? तेपामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्यायोगादिति प्राप्ते ब्रूम —लिङ्गसारितोपकारसहितमेव सौर्ययाग तच्छब्दो विदधाति। [181] तथा सति [181] प्रणाड्या लिङ्गस्य शब्दे प्रवेशादाग्नेयवत् सौर्योऽनुष्ठेय इत्येतादृश चोदकवाक्यमनुमापयता लिङ्गेन [182] धर्मविशेषा नियम्यन्ते [182] ॥

इष्टिपु सौमिकधर्मनिवारण तत्रैव चिन्तितम्—

"ऐन्द्राग्नादौ [183] सौमिक स्यादैष्टिको [183] वा द्वयोरिह।
[184]सभवादैच्छिकोऽन्योऽत्र स्यात् कपालादिलिङ्गत ॥" (जैन्या ८·१ ७)॥

"ऐन्द्राग्नमेकादशकपाल निर्वपेत् प्रजाकाम" (तैस २ २·१) इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया ग्राह्य। कुत ? उभयत्र विध्यन्तसभवेनातिदेष्टुमर्हत्वादिति चेत्। न। कपालनिर्वापादिभिर्लिङ्गविशेषैरैष्टिकस्यैवात्रोचितत्वात्[185] ॥

अग्नीपोमीयपशोरिष्टिविकृतित्व तत्रैव चिन्तितम्—

"न पशावैष्टिक स्याद्वा न कपालाद्यभावत ।
स्यात्[186] व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यत ॥" (जैन्या ८ १ ८)॥

[187]अग्नीषोमीयपशावैष्टिकविध्यन्तो नास्ति। कुत ? पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेत्। मैवम्। "आग्नेयमष्टाकपालम्" (द्र तैस १ ८ २) इत्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथा "अग्नीषोमीय पशुम्" (ऐब्रा २ ३) इत्यत्रापि। न तु "सोमेन यजेत" [188]इत्यत्रेव देवताया अव्यक्तत्वम्। [189]तदेतत् व्यक्तद्रव्यदेवतात्वमेक[189] लिङ्गम्। "एकादश प्रयाजान् यजति" (तैस ६ ३ ७) इति [191]प्रयाजबहुत्व द्वितीयम्। "स्रुच्यमाघार्य जुह्वा पशु समनक्ति" (द्र आपश्रौ ७ १४ १) इत्याघाराज्ये लिङ्गान्तरे[192]। आलम्भो लिङ्गान्तरम्, इष्टावपि "ईपामालभेत" (द्र आपश्रौ १ १७ ६) इति दर्शनात्। तस्मादस्ति पशावैष्टिक ॥

तस्यैव पशो पश्वन्तरप्रकृतित्वेनायान्तरप्रकृतित्व तत्रैव चिन्तितम्—

"सवनीयादिके दार्शी दैक्षो वा प्रकृतिर्भवेत् ।
आद्योऽन्त्यो लिङ्गतोऽन्यत्र विकृति प्रकृतिर्भवेत् ॥" (जैन्या ८ १ ९)॥

---

१८१–१८१. द हो १–'तथा सति' नास्ति।
१८२–१८२. अ उ पा–°विशेषो नियम्यते।
१८३–१८३ द–सौमिके स्यादैष्टिकम्।
१८४ आ क हा–सभवादैष्टिको°।
१८५. अ उ पा स्यैवात्रोचत्वात्।
१८६. अ उ पा हा–° देवत्वात् प्रयाज°।
१८७. अ उ क पा हा–अग्नीषोमीये पशा°।
१८८ अ उ पा–इतिवत्, द.ह१–हा–इत्यत्रैव।
१८९. अ उ पा तदेव।
१९०. आ क द ह१–° देवत्व°।
१९१. हा१–अप्रयाजत्वम्।
१९२. अ उ क पा हा–लिङ्गान्तरम्।

काम्याः पशवः ]

[193]सवनीयानुबन्ध्यानिरूढादिपशुषु [194]दर्शपूर्णमाससंबन्धिविष्वन्तः कार्यः। [195]कुतः? दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमीयपशुविष्वन्तः दीक्षितेनानुष्ठेयेषु [196]पशुविष्वन्तेषु प्रथमभावित्वात्। तस्य [197]चाग्नीषोमीयेष्टिविकृतित्वात् प्रकृतित्वमस्ति। अतो न तस्य विष्वन्तोऽतिदेशार्हः[198] इति प्राप्ते ब्रूमः— आलम्भोऽग्नीषोमीयपशौ[199] लिङ्गम्। [200]तच सवनीयादिष्वप्यस्ति[201]। तथा प्रातःसवनीयादिषु[202] यूपाप्रचारोऽपरं लिङ्गम्। इष्टिं प्रति विकृतेरप्यस्य सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मादग्नीषोमीयपशोः विष्वन्तं सवनीयादिपशूनामतिदिशेत्। [203]तदेवम् पूर्वोत्तराधिकरणयोः स्वरुयूपाश्रादिपशुन्वग्नीषोमीयविष्वन्तातिदेश इति सुस्थितम्[204] ॥

"वायव्यꣳ श्वेतमा लभेत" ( तैसं २.१.१ ) इत्यत्र यागविधित्वं द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

"वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा।
निर्वपेद् ब्रह्मतेजोऽर्थम् ईषामुष्टिनिरुप्तयोः ॥
[205]गुणौ श्वेतचरू[205] किं वा [206]यावत्कथितकर्मणी।
[207]फलार्थमथ वा यागौ[207] विशिष्टौ विहिताविह ॥
श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे।
[208]चरुर्गुणः चरुः स्थाली निर्वापस्तु तदाश्रितः ॥
फलहानेर्न तत्किं तु यागचोदितकर्म तत्।
द्रव्यादिरूपसंपत्तेरपार्थी यागताऽऽर्थिकी ॥" ( जैन्या २.३.१२-१५ ) ॥

अनारभ्येदमाम्नायते—"वायव्यꣳ श्वेतमा लभेत भूतिकामः" ( तैसं २.१.१ ) इति। "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" ( तैसं २.३.२ ) इति च। तथा च दर्शपूर्णमासयोरिदमाम्नातम्[209]—"ईषामालभेत" (द्र. आपश्रौ १.१७.६) इति, "चतुरो [210]मुष्टीन्निर्वपति" (द्र. आपश्रौ १.१८.२) इति च। ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषस्तस्या आलम्भः स्पर्शः। तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य[211] तस्यामालभ्यायामीषायां श्वेतगुणो विधीयते। [212]तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वात् वायव्यत्वं[213] संभवति। तथा चतुर्मुष्टिनिर्वापमनूद्य [214]चरुर्गुणत्वेन विधीयते। चरुः स्थाली। सा च निर्वापस्याऽऽश्रयः। निरुप्तस्य हविष आग्नेयतया सूर्यवत् प्रभासंबन्धात् सौर्यत्वम्। भूतिब्रह्मवर्चसफले [215]सार्वकालिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते। तस्मात् गुणविधिरित्येकः पूर्वपक्षः। न हि फलप्रदयोर्नित्यवत्क्रतुयोः

---

१९३. अ,उ,पा–तत्राद्यो निरूढपशुबन्ध्यादिषु; हा–°ढादिपशुबन्ध्यादिषु। १९४. ड१–°मासादिसंबं°। १९५. अ,उ,पा–'कुतः' नास्ति। १९६. अ,उ,पा–विष्वन्तेषु। १९७. अ,उ,ड,पा,हो१–°षोमीयस्य विकृ°; ड१–°षोमीयस्येष्टि°। १९८. आ–°अतिदेशार्थः। १९९. अ,ड,पा,हो१–°पशोः। २००. क,हा–'तच' नास्ति। २०१. ड–°दिष्वस्ति। २०२. क,ड,हा,हो१–°सवनादिषु। २०३. क,ड,ड१,हो१–तथैव। २०४. आ,क,–संस्थितम्। २०५–२०५. अ,उ,पा–गुणैः श्वेतचरुः। २०६. अ,उ,पा–या चतुर्थी न कर्मणा। २०७–२०७. हो१–फलार्थे अथवा योगो (?); ड१–फलार्थे ह्यथवा यागः। २०८. अ,उ,पा–चतुर्गुणः चतुःस्थाली; ड१–चतुर्गुणाः चरुस्थाली। २०९. ड–°योरेवमाम्नातम्। २१०. ड१–मुष्टीनि°। २११. ड१–°लम्भनमनूद्य। २१२. अ,उ,पा,हा–कस्यचित्। २१३. ड–वायव्यता। २१४. आ,ड१–चतुर्गुणत्वेन। २१५. ड,हो१–°कालीनयोर्दर्श°; अ,उ,पा–°कालिकविशिष्टकर्मान्तरयोः; हा–सार्वकालिकफलविशिष्टकर्मान्तरयोः।

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमाऽलभत स कृष्ण एकशितिपादभवद्-

प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र जा । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन् । ताः । वरुणम् । अगच्छन् । ताः । अन्विति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । वरम् । वृणीष्व । अथ । मे । पुनः । देहि । इति । तासाम् । वरम् । एति । अलभत । सः । कृष्णः । एकशितिपादित्येकं शितिपात् । अभवत् ।

प्रजापतिरित्यादि ॥ प्रजापतिना सृष्टाः प्रजाः पराचीः पराच्य अपरक्तचित्ताः सत्यः अस्मात् प्रजापतेः आयन् आगच्छन् । ताः वरुणम् अगच्छन् अभजन्त । अथ प्रजापतिः ताः प्रजाः पराचीर्याताः अनु ऐत् अन्वगच्छत् । ताः च वरुणम् अयाचत । वरुणश्च ताः पुनः पुनर्याचितोऽपि न अददात् न दत्तवान् । अथ अब्रवीत् प्रजापतिः । [2]वरम् अभिमतं मत्तो वृणीष्व । अथ अनन्तरमिमाः प्रजाः वरलाभतुष्टः मे देहि इति । अथ एवमुक्त्वा तासां प्रजानां मध्ये वरं वरिष्ठं पशुं वरणाय आ अलभत स्वयमेव वरदानमालम्भनेनाकरोत् । स च ततः प्रभृति कृष्णः एकशितिपात् अभवत् । एकः शितिः श्वेतः पादो यस्येति त्रिपदो बहुव्रीहिः । यद्वा शितिः पादो यस्येति शितिपात् । "पादस्य लोपः°" (पा ५ ४ १३८) इति समासान्तः । एकेन पादेन शितिपात् । तृतीयापूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २)॥

---

भूतिकामो ग्रामकामः प्रजार्थी दीर्घरोगवान् ।
प्रजापश्वर्थिनां चैषां [1]श्वेताद्याः पशवः श्रुताः[2] ॥

तानेतान् पशून् प्रथमानुवाके विधाय द्वितीये वरुणगृहीतादीनां पशव उच्यन्ते ।

प्रजापतिरिति ॥ तत्र वरुणगृहीतस्य पशुं विधातुं प्रस्तौति—'प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमाऽलभत स कृष्ण एकशितिपादभवत्' इति । प्रजापतिना सृष्टाः प्रजाः पराचीः [3]पराङ्मुख्यः अपरक्ताः[4] सत्योऽस्मात् प्रजापतेः आयन् अगच्छन् । गत्वा च वरुणं प्राप्ताः । स च

---

१ अ–'अस्मात्' नास्ति । २ तर–परम् । ३ ल–तथा । ४ तै१ मै–प्रमापितः ? 'प्रभृति' नास्ति । ५ तर–'श्वेत' नास्ति ।

---

१ ङ–'श्वेताद्या' नास्ति । २ अ उ जा ना पा हा–स्मृता ?–समदीरिता । ३ ङ१ हो१–पराङ्मुख्या । ४ ना–अनुपरक्ता ।

यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमा लभेत वरुण(१)मेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै

यः । वरुणगृहीत इति वरुण-गृहीतः । स्यात् । सः । एतम् । वारुणम् । कृष्णम् । एकशितिपादम् इत्येक शितिपादम् । एति । लभेत । वरुणम् (१) । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति । कृष्णः । एकशितिपादित्येक शितिपात् । भवति । वारुणः । हि । एषः । देवतया । समृद्ध्या इति सम् ऋद्ध्यै ।

वरुणगृहीत इति ॥ वरुणो महोदर इति व्याधिरित्येके । अज्ञातरोग इत्यन्ये । " तृतीया कर्मणि " ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । गतमन्यत् ॥

प्रजापतिः [५]ता प्रजा अनुगम्य [५]मे[५] मदीया प्रजा [६] [६]पुन अपि मह्यमेव [६]देहीति वरुणम् [७]अयाचत । वरुणस्तु [७]न ददौ[७] । ततः [८]स प्रजापतिर्वरुणमिदम् [८]अब्रवीत्, एतासां प्रजानां [९]मध्ये [१०]वरं श्रेष्ठं गृहीत्वाऽवशिष्टास्ता मह्य [१०]देहि [१०]इति । स च वरुणः [१०]तासां प्रजानां मध्ये [१०]परीक्ष्य [१०]वरं श्रेष्ठं [१०] कंचित् पशुं मदीयोऽयमिति हस्तेनास्पृशत्[११] । [११]स च [१२]परीक्ष्यमाणः कृष्णवर्णः सन्नेकेन [१३]श्वेतेन पादेन युक्तोऽभूत् ॥

य इति ॥ [१४]विधत्ते– 'यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमा लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति' इति । [१४]वरुणगृहीत जलजन्येन महोदरव्याधिना गृहीत ॥

कृष्ण इति ॥ पशुविशेषणं प्रशंसति – ' कृष्ण एकशितिपाद्भवति वारुणो ह्येष देवतया समृद्ध्यै ' इति ॥ ईदृश पशुं वरुण [१५] प्रीत्या वृतवानिति [१५] तस्य वरुणदेवतात्वम्[१६] । स च यजमानस्य धारोग्यसमृद्ध्यै सम्पद्यते ॥

६–६ मै–°गृहीत स्यात् ।

५. [illegible] जो डर ना पा हा हो१–'मे' नास्ति । ६–६. ड ड१ हो१–मह्यमेव पुन । ७ ड ड१ हा१– ददात् । ८ न–°मिमम्, ड उ–'इदम्' नास्ति । ९. अ उ पा–'मध्ये' नास्ति । १०–१० [illegible] उ पा–परीक्ष्य ना–वरं श्रेष्ठम्, ड१ हो–श्रेष्ठ ड२–परिरक्ष्य वरं श्रेष्ठम् । ११. अ उ पा–°नाप्रत् । १२. ड१–पारक्ष्यमाण । १३ ड–शितिना । १४ हो१–'विधत्ते' इत्यस्यानन्तरं– 'या गाश्रामयत्र य काऽपि भाग एव ना निरेपानुक्लित कोऽपि भाग एव अस्त्यसाधनात् । वायव्य [illegible] इत्यत्र [illegible] धन्वादि [illegible] अतिनिरेपगागुणवाचित्राभावात् यं क्वचिदपि पन्नु' इति । १५–१५. अ न क जा ना पा हा हा१–प्रत्याहृतवानिति । १६. अ उ –°देवतात्वम् ।

वास्या पशव ]

**सुर्वर्भानुरासुरः सूर्यं तमसाऽविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद्द्वितीयं सा फल्गुनी यत् तृतीयं सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽविर्वशा (२) समभवत्**

सुर्वर्भानुरिति सुवः – भानुः । आसुरः । सूर्यम् । तमसा । अविध्यत् । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्य । यत् । प्रथमम् । तमः । अपाघ्नन्नित्यप-अघ्नन् । सा । कृष्णा । अविः । अभवत् । यत् । द्वितीयम् । सा । फल्गुनी । यत् । तृतीयम् । सा । बलक्षी । यत् । अध्यस्थादित्यधि-अस्थात् । अपाकृन्तन्नित्यप-अकृन्तन् । सा । अविः । वशा ( २ ) । समिति । अभवत् ।

सुवर्भानुरिति ॥ सुवर्भानुः नाम आसुरः असुरस्यापत्यम् । शिवादित्वादण् (पा ४ १ ११२) । तमसा अविध्यत् अबाधत । प्रायश्चित्ति दोषनिर्घातार्थो यत्नः । अथ [८]तस्य प्रथमं यत् तमः अप अघ्नन् सा कृष्णवर्णा अविः अजायत । द्वितीयं यत् अपाघ्नन् सा फल्गुनी [९]नीलवर्णा । यत् तृतीयम् अपाघ्नन् सा बलक्षी शुक्लवर्णा । "अन्यतो ङीष्" (पा ४ १ ४०) । [१०]वर्णयोरेकत्वमिच्छन्ति । अथ अध्यस्थात् अस्थिभ्यो यत् तमोऽपाघ्नन्[११] अपाच्छिदन् सा वशा वन्ध्या अविः अजायत । अध्यस्थादिति विभक्त्यर्थेऽव्ययीभावः (पा २ १ ६) । "छन्दस्यपि

**सुवर्भानुरिति** ॥ पशुप्रतिपादिकामात्यायिका[१७] वशा[१८] विधातुं प्रस्तौति – 'सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत् तस्मै देवा प्रायश्चित्तिमैच्छन् तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा कृष्णाऽविरभवद्यद् द्वितीयं सा फल्गुनी यत्तृतीयं सा बलक्षी यदध्यस्थादपाकृन्तन्त्साऽविर्वशा समभवत् ते देवा अब्रुवन् देवपशुर्वा अयं समभूत् कस्मा इममा लप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्य कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधय ' इति ॥ सुवर्भानु इत्यासुरस्य कस्यचिन्नामधेयं, [१९]स्वर्लोकगतां प्रभां नुदतीति सुवर्भानुः । स च पृथिव्या रूपं धृत्वा [२०]कृष्णवर्णं । [२१]तमःपुञ्जरूपत्वं "[२२]यत्त्वा सूर्य[२२] स्वर्भानुस्तमसाऽविध्यदासुर[२३]" (ऋस ५ ४० ५)[२४] इत्येतस्यामृचि स्पष्टमाम्नातम्[२५] । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते । छन्दोगाश्च "यत्कृष्णं तदन्नस्य" (छाउ ६ ४ १) इत्यन्नकारणभूताया पृथिव्या[२५] कृष्णरूपत्वमामनन्ति । अत तमःपुञ्जरूप[२६] स आसुरः स्वकीयेन तमसा सूर्यम् आच्छाद्य जगदान्ध्यं कृतवान् । तस्मै तस्य सूर्यप्रभाच्छादकस्य[२७] तमस प्रायश्चित्तिं परिहारं विचार्य नानाविधैः प्रकाशरूपैर्मण्यादिद्रव्यैस्तम अपाघ्नन् चतुर्भिः पर्यायै रपसारितवन्तः । प्रथमपर्याये अपसृत[२८] तमः कृष्णवर्णा काचिद् अविः अभूत् । द्वितीयपर्याये फल्गुनी

७ मै४ ल–शिवाद्यणन्त । ८ मै–'तस्य' नास्ति । ९ मै४–लवणवर्णा । १० मै मै४–वर्णयो° । ११ मै४–°पाकृन्तन् ।

१७ ड ड१ हो१–पशुप्रजादिकामिन इ–पशुप्रथनादिकामिन । १८ ड हो१–पशुम् । १९ हो१–स्वर्लोक° । २० इ–कृष्णरूप । २१ ड१–तम स्वरूपत्वम च–तम पुञ्जरूपत्वम् २२–२२ अ इ उ ना पा–इय वै सूर्यं ड१–इय वै सूर्य हा–इय सूर्य । २३ ड१–°ध्यद् तथाऽसुर । २४–२४ अ उ ना पा हा–इत्येतस्यामपिस्पष्टमाम्नातम । २५ अ उ पा–'पृथिव्या' नास्ति । २६ ड ड१–तम स्वरूप । २७ ड१–°प्रच्छादकस्य । २८ ड१ हो१–प्रसृतम ।

ते देवा अब्रुवन् देवपशुर्वा अयꣳ समभूत् कस्मा इममा लप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामविं वशामादित्येभ्यः कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयो यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामाया( ३ )ऽऽ लभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया

ते । देवा । अब्रुवन् । देवपशुरिति देव-पशुः । वै । अयम् । समिति । अभूत् । कस्मै । इमम् । एति । लप्स्यामहे । इति । अथ । वै । तर्हि । अल्पा । पृथिवी । आसीत् । अजाता । ओषधयः । ताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय । एति । अलभन्त । ततः । वै । अप्रथत । पृथिवी । अजायन्त । ओषधयः । यः । कामयेत । प्रथेय । पशुभिरिति पशु-भिः । प्रेति । प्रजयेति प्र-जया । जायेय । इति । सः । एताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय ( ३ ) । एति । लभेत । आदित्यान् । एव । कामम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । एनम् । प्रथयन्ति । पशुभिरिति पशु-भिः । प्रेति । प्रजयेति प्र-जया ।

दृश्यते " (पा ७·१·७६) इत्यनङादेशः । " नपुंसकादन्यतरस्याम् " ( पा ५·४·१०९ ) इति टच् समासान्तः । अथ [१२]ते देवाः अब्रुवन् । [१३]देवानां पशुः देवपशुः-[१३], देवास्थिसंभूतत्वात् । [१४]एवं महानुभावः अयं पशुः वशात्मा तम्-[१४] इमम् कस्मै कामाय आ लप्स्यामहे इति । [१५]अथ तर्हि तस्मिन् काले । " अनद्यतने र्हिलन्यतरस्याम् " ( पा ५·३·२१ ) इति । पृथिवी अल्पा

[२८]-लोहितवर्णा काचिदविरभूत्-[२८] । तृतीयपर्याये वलक्षी श्वेता काचिदविरभूत् । अस्थ्नोऽप्युपरि वर्तमानप्रकाशोऽप्यस्थः । कस्यचिन्मृतदेहस्य दीप्यमानमस्थि [३०]समादाय तदीयात् प्रकाशाच्चतुर्थपर्याये तमः अपाघ्नन् अपनीतवन्तः । तच्च तमः वशा वन्ध्या काचित् अविः अभूत् । ततः देवाः विचार्य परस्परमिदम् अब्रुवन्–दैव्यादस्थ्नो जातत्वादयमुत्तमः देवपशुः । तमेतं कस्मै कामायोत्तमप्रयोजनायाऽऽलब्धं करिष्यामः इति । अथ विचारादूर्ध्वं तर्हि तदानीमेव पृथिव्या अल्पत्वमोषधीनाम् [३१]-अनुत्पत्तिः इति-[३१] दोषद्वयमवेक्ष्य तत्परिहारस्पाय कामाय समर्थेभ्यः [३२]आदित्येभ्यः तां वशाम् आलभ्य पृथिवीविस्तारमोषध्युत्पत्तिं च [३३]संपादितवन्तः ॥

य इति ॥ विधत्ते—' यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्य कामायाऽऽ लभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावति त एवैनं प्रथयन्ति पशुभिः प्र

१२. मै८–तम् । १३–१३. अ मै८–देवमयः पशुः । १४. मै४–महानुभावं पशुं वशात्मानम् । १५. मै८–अथ वै ।

२८–२९. द१.हो१–' लोहित...रभूत ' नास्ति । ३०. ह.द.द१.हो–समानीय । ३१–३१. आ–अनुत्पत्तिर्न । ३२. द१ हो१–' आदित्येभ्यः ' नास्ति । ३३. द.द१.हो१–उत्पादितवन्तः ।

**जनयन्त्यसावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आ लभेता(४)–**

जनयन्ति । असौ । आदित्य । न । वीति । अरोचत । तस्मै । देवा । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एता । मल्हा । एति । अलभन्त । आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण-ग्रीवीम् । सꣳहितामिति सं-हिताम् । ऐन्द्रीम् । श्वेताम् । बार्हस्पत्याम् । ताभि । एव । अस्मिन् । रुचम् । अदधु । य । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-काम । स्यात् । तस्मै । एता । मल्हा । एति । लभेत (४) ।

समुचिता आसीत्, ओषधयश्च अजाता आसन् । अथ देवा ता [16]वशाम् आदित्येभ्य कामाय च आ अलभन्त आदित्येभ्य कामाय त्वा जुष्टमुपाकरोमीति । कस्मै कामाय ? 'प्रथतां पृथिवी, जायन्तामोषधय ' इत्येवंरूपाय कामाय । सपादित्वात्ताच्छब्ध्यम्* । ततो वा इत्यादि । गतम् ॥

असावादित्य इत्यादि ॥ मल्हा [17]कण्ठावलम्बितस्तनयुग्मा । [18]कृष्णग्रीवी कृष्णबिन्दु-लाञ्छितग्रीवा[19] शुक्ला[20] । " स्वाङ्गाच्चोपसर्जनात् " (पा ४ १ ५४) इति ङीष् । सतिशिष्टसमासान्तस्वर[21] (पा ६ १ २२३) । संहिता कृष्णश्वेतमिश्रदेहा ॥

प्रजया जनयन्ति ' इति । पशुभि प्रथेय पशुबाहुल्यलक्षण विस्तार प्राप्नुया प्रजया पुत्रपौत्रादिरूपया प्रकृष्ट जायेय भवेयम् । [34]कामाय कामप्रापकेभ्य इत्यर्थ ॥

असाविति ॥ ब्रह्मवर्चसकामस्य पशुविधानाय प्रस्तौति–' असावादित्यो न व्यरोचत तस्मै देवा प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्या ताभिरेवास्मिन् रुचमदधु ' इति ॥ पूर्ववत्तमोवेधरहितोऽपि आदित्य कदाचित् [35]प्रकाशमान्द्यात् विशेषेण न दीप्तवान् । तस्मै [36]आदित्यदीप्त्यर्थमेव एता वक्ष्यमाणा मल्हा [37]मणिला गलल्म्बित-स्तनान्विता अजा [38]तिस्र आऽलभन्त । कृष्णा ग्रीवा यस्या सा कृष्णग्रीवा ग्रीवाव्यतिरिक्तप्रदेशेषु वर्णान्तरोपेतेत्यर्थ । कृत्स्नेऽपि शरीरप्रदेशे भेदस्थितैर्लोहितशुक्लकृष्णवर्णैर्युक्ता संहिता ॥

य इति ॥ विधत्ते–' यो ब्रह्मवर्चसकाम स्यात् तस्मा एता मल्हा आ लभेताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेता बार्हस्पत्यामेता एव देवता स्वेन भागधेयेनोप धावति ता एवास्मिन् ब्रह्मवर्चस दधति ब्रह्मवर्चस्येव भवति ' इति । [39]श्रुताध्ययनसंपत्तिरूप तेज ब्रह्मवर्चसम् ॥

१६. अ मै४–वशाम् अविम् । *[ 'कामसम्पत्तिहेतुत्वात् कामशब्द आदित्येष्वित्यर्थ.' इति मै मुद्रित-पुस्तक-टिप्पणी ] । १७. अ मै४–मणिला कर्णाव° । १८. मै४–कृष्णग्रीवा । १९ मै४–°ग्रीवा । २० मै४–शुक्ला । २१ अ मै४–°समासान्त स्वर ।

३४. हा–उभयकामाय । ३५ इ हा–प्रकाशमान्द्य° । ३६ आ–तदर्थमेव, इ ड–°दीप्त्यर्थम् । ३७–३७ आ–गलल्म्बितस्तनान्विला , इ ड ड१ हो–मणिला गलस्तनोपेता । ३८. आ क–श्वेतातिस्र । ३९. अ जो ना पा हा–वृत्ताध्य° ।

-ऽऽग्नेयी कृष्णग्रीवीᳪ संᳪहितामैन्द्रीᳪ श्वेता बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन् ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यंदिने संᳪहितामैन्द्रीᳪ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजाᳪसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाᳪसि तान्येवा (५)ऽव रुन्द्धे

आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण ग्रीवाम् । सᳪहितामिति स हिताम् । ऐन्द्रीम् । श्वेताम् । बार्हस्पत्याम् । एता । एव । देवता । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ता । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । दधति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । वसन्ता । प्रात । आग्नेयाम् । कृष्णग्रीवीमिति कृष्ण ग्रीवीम् । एति । लभेत । ग्रीष्मे । मध्यंदिने । सᳪहितामिति स हिताम् । ऐन्द्राम । शरदि । अपराह्ण इत्यपर-अह्ने । श्वेताम् । बार्हस्पत्याम् । त्रीणि । वै । आदित्यस्य । तेजाᳪसि । वसन्ता । प्रात । ग्रीष्मे । मध्यंदिने । शरदि । अपराह्ण इत्यपर अह्ने । यावन्ति । एव । तेजाᳪसि । तानि । एव (५) । अवेति । रुन्द्धे ।

वसन्तेति ॥ "सुपा सुलुक्" (पा ७ १ ३९) [22]इति वसन्तशब्दात् सप्तम्या आकार । अत्र ब्रह्मचर्यादिक आरम्भप्रभृति यावत्संवत्सर यजमानस्य केचित् इच्छन्ति । उपाकरण वपाहोमो वा यथा प्रातरादिष्वेव [23] भवति । सर्वत्र मल्हा एव [24]गतिकम्[25] ।

वसन्ता इति ॥ उक्तस्य पशुत्रयस्य प्रयोगार्थं पशुविशेष [40]कालर्तुविशेष च विधत्ते– 'वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यन्दिने सᳪहितामैन्द्रीᳪ शरद्यपराह्णे श्वेता बार्हस्पत्या त्रीणि वा आदित्यस्य तेजाᳪसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाᳪसि तान्येवाव रुन्द्धे' इति ॥ प्रातरादिकालेषूपाकरण वपायागो वा यथा भवति तथा प्रारभेत । वसन्ततौ प्रात काले वर्षास्विव [41]मेघावरणाभावात् हेम तशिशिरयोरिव नीहारावरणाभावाच्च [42] आदित्यस्य तेज [43] स्पष्ट प्रकाशते । ग्रीष्मर्तौ मध्याह्ने प्रतापाधिक्यमानस्पष्टम् । शरदृतौ [44]अपराह्णे सूर्यतेज सेव्य भवति । [45]प्रातर्मध्याह्नयो बालातपस्य तीव्रातपस्य च न(ज्व)रादिहेतु पादसेव्यत्वम् । तान्येतानि यथोक्तानि [46]आदित्यस्य [47]त्रीणि [48]तेजांसि प्रशस्तानि । [49]अत [50]तत्कालानुष्ठानेन प्रशस्ततेज संपत्तिर्भवति ॥

२२. मै-'इति' नास्ति । २३ त१ त२ मै-'एव' नास्ति । २४ ट-गतिक्रम (?)। २५ ०[ पाठोऽत्र त्रुटित आभाति । 'त्रीणि वा इति । गतम्' इति मै-मुद्रितपुस्तके संभावित पाठ ]।

४० अ आ क-'कालर्तु' इत्यत्र ऋतुविशेषम् । ४१ आ क-तीव्रमेघा° । ४२-४२ क-आभाव । ४३. आ क- °मध्याह्ने । ४४ ट ट१ हा१-तस्मात् । ४५, अ पा-°कालानुमानन ।

संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति गर्भिणयो भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवास्मिन् दधाति सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन् (६) वाचं दधाति

संवत्सरमिति सम्-वत्सरम्। पर्यालभ्यन्त इति परि-आलभ्यन्ते। संवत्सर इति सम्-वत्सरः। वै। ब्रह्मवर्चसस्येति ब्रह्म-वर्चसस्य। प्रदातेति प्र-दाता। संवत्सर इति सम्-वत्सरः। एव। अस्मै। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। प्रेति। यच्छति। ब्रह्मवर्चसीति ब्रह्म-वर्चसी। एव। भवति। गर्भिणयः। भवन्ति। इन्द्रियम्। वै। गर्भः। इन्द्रियम्। एव। अस्मिन्। दधाति। सारस्वतीम्। मेषीम्। एति। लभेत। यः। ईश्वरः। वाचः। वदितोः। सन्। वाचम्। न। वदेत्। वाक्। वै। सरस्वती। सरस्वतीम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सा। एव। अस्मिन् (६)। वाचम्। दधाति।

पर्यालभ्यन्त इति। परितः सर्वत्र संवत्सरे। यद्वा—संवत्सरसमाप्तेः प्राक्। गर्भिणय इति। वर्णव्यत्ययेन जसि ह्रस्वत्वम्॥

मेषीमिति॥ "जातेरस्त्रीविषयात्" (पा. ४.१.६३) इति ङीष्। य ईश्वर इत्यादि॥ वाचः वदितोः। वाचं वदितुमीश्वरः सम्पन्नसामग्रीकोऽपि वाचं न विन्देत् वाग्मित्वम् न लभेत। "ईश्वरे तोसुन्कसुनौ" (पा. ३.४.१३) इति तोसुन्। प्रवदिता प्रवक्ता। यद्वा—

संवत्सरमिति॥ व्रतोपक्रममारभ्य संवत्सरपर्यन्तं ब्रह्मचर्यादिनियमं विधत्ते—'संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति' इति॥ एकस्मिन् संवत्सरे निरन्तरं नियमं परिगृह्य सादरेण पुरुषेण एताः सर्वदेवताः आलभ्यन्ते। उपनीतस्य माणवकस्य संध्यावन्दनाद्याचारशिक्षा संवत्सरेण सम्यक् संपद्यते इति संवत्सरस्य ब्रह्मवर्चसप्रदातृत्वम्॥

गर्भिण्य इति॥

मेवास्मिन् दधति' इति।

सारस्वतीमिति॥ विद्वत्सभादौ वाग्मित्वकामिनः पशुं विधत्ते—'सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन् वाचं दधाति प्रवदिता वाचो भवति' इति। वेदशास्त्राद्यभ्यासपाटवेन वाचः वदितुं समर्थोऽपि सभाकम्पादिना यः न वदेत् तस्यायं पशुः॥

२५. मै–'इति' नास्ति। २६. क–'जसि' नास्ति। २७. कं लं–'ताम्' नास्ति। २८. मै–वदेत्; लं– लभेत। २९. तं१ तं२–मै–वादित्वम्। ३०. पं२–लभते।

४६. आ–ता.। ४७–४७. आ–विद्वत्सभाजयार्थित्व°। ४८. अ आ. उ क ङ१. हो–पशुं।

प्रवदिता वाचो भवत्यपन्नदती भवति तस्मान्मनुष्याः सर्वां वाचं वदन्त्याग्नेयं कृष्ण-ग्रीवमा लभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव

---

प्रवदितेति प्र-वदिता । वाच । भवति । अपन्नदती यपन्न-दती । भवति । तस्मात् । मनुष्याः । सर्वाम् । वाचम् । वदन्ति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । ज्योगामयावीति ज्योक-आमयावी । अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । यस्य । ज्योक् । आमयति । अग्नेः । एव । अस्य । शरीरम् । निष्क्रीणातीति निः-क्रीणाति । सोमात् । रसम् । उत । यदि । इतासुरितीत-असुः । भवति । जीवति । एव ।

---

"वाक्प्रसारणसमर्थोऽपि निरोधाद्वाच वदितुं बिभेति स यजेत । "अपन्नदती "अनिपन्नदन्ता । "छन्दसि च" ( पा ५ ४ १४२ ) इति ददृभाव । तस्मादिति । "तस्मात् दन्तनिपत्तौ सर्वेषा वाचोऽप्रवृत्ते, दन्ताना वाक्प्रवृत्तिहेतुत्वाच्च ॥

आग्नेयमित्यादि ॥ बभ्रु "कपिलश्याम । "ज्योगामयावी दीर्घरोग । यस्येति । "रुजार्थानाम्°" (पा २ ३ ५४) इति षष्ठी । अग्नेरेवेत्यादि । अग्निना गृहीतमस्य "शरीरम् "अग्ने "निष्क्रीणाति । "सोमगृहीतरस "सोमात् निष्क्रीणातीत्येव । एव च कृते "यदि अपि गतासु "जीवति "एव ।

अपन्नदतीति ॥ तस्मिन् पशौ कश्चिद्गुण विधत्ते— अपन्नदती भवति तस्मान्मनुष्या सर्वां वाच वदन्ति' इति । 'अपन्नदती "दन्तपातरहिता । लोकेऽपि सदन्ता पुरुषा वर्णलोपमन्तरेण सम्पूर्णां 'वाच 'वदन्ति ॥

आग्नेयमिति ॥ कामरोगग्रस्तस्य" पशुद्वयोपेत कर्म विधत्ते–' आग्नेय कृष्णग्रीवमा लभेत सौम्यं बभ्रु ज्योगामयाव्यग्निर्वा एतस्य शरीरं गच्छति सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीर निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव' इति । बभ्रु पिङ्गल । शरीर प्राणस्य "स्थूलक सूक्ष्मो "योऽस्य रस स 'सोम प्राप्नोति । "भोजनरुचौ व्याधिनाऽभिभूताया" भुक्तान्नरस शरीर न प्रविशति, किं तु सोमाधिष्ठितौषधिकार्यं प्रत्याशेऽवतिष्ठत । सय "रसस्य सोमप्राप्ति "। "ततोऽपि सोमादिष्ट नोत्सर्पति । "सय शरीरस्याग्निप्राप्ति ॥

३१ मै–°प्रगण । ३२ मै४–भस्या । ३३ मै४–कपिर । ३४ ऋ–सामगृहीत रस°, ए–°रस ।

४९ द१–दन्तपातवर्णहिता । ५० भा–°रोगग्रहीतस्य । ५१ क–चर्षक । ५२ द१–सूक्ष्म° । ५३–५३ भ पा–भजने तु पाक्यादिना भिभाय । ५४–५५ भ उ पा–तस्य सोमाप्ति । ५६ द१–सारोऽग्निमन्तरणादिक । ५७ क भा रा हा–रसय ।

सौम्यं बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः सोमो (७) वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजामाग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो

सौम्यम्। बभ्रुम्। एति। लभेत। आग्नेयम्। कृष्णग्रीवमिति कृष्ण-ग्रीवम्। प्रजाकाम इति प्रजा-कामः। सोमः (७)। वै। रेतोधा इति रेतः-धाः। अग्निः। प्रजानामिति प्र-जानाम्। प्रजनयितेति प्र-जनयिता। सोमः। एव। अस्मै। रेतः। दधाति। अग्निः। प्रजामिति प्र-जाम्। प्रेति। जनयति। विन्दते। प्रजामिति प्र-जाम्। आग्नेयम्। कृष्णग्रीवमिति कृष्ण-ग्रीवम्। एति। लभेत। सौम्यम्। बभ्रुम्। यः। ब्राह्मणः। विद्याम्। अनूच्येत्यनु-उच्य। न। विरोचेतेति वि-रोचेत। यत्। आग्नेयः। भवति। तेजः। एव। अस्मिन्। तेन। दधाति। यत्। सौम्यः।

सौम्यमित्यादि। गतम्॥ विद्यामनूच्येति॥ विद्यामर्जयित्वाऽपि तदनुरूपं न [35]विरोचते। यद्वा—अनुवचनम् [36]अध्ययनं, तत्कृत्वाऽपि यो न विरोचेत विद्याऽनुरूपां कीर्तिं [37]न लभते[37]। ब्रह्मवर्चसं तेनेति। अस्मिन् दधातीत्येव[38]। आग्नेयत्वात् तमोपघातहेतुभूतं[39]। श्वेत इति। [40]ग्रीवाकाष्ण्यं मुक्त्वा[40]। ब्रह्मवर्चसं [41]ब्राह्मण्यम्। त्विषिर्दीप्तिः॥

सौम्यमिति॥ प्रजाकामस्य द्विपशुकं कर्म विधत्ते—'सौम्यं बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजाम्' इति॥

आग्नेयमिति॥ विरूपो [57]अनानुरागाय द्विपशुकं कर्म विधत्ते—'आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधाति' इति॥ पूर्वं सभायां मूकीभूतस्य कर्मोक्तम्। इदानीं प्रवदतोऽपि पारुष्यवचनेनाप्रस्तुतप्रसङ्गेन वा [58]सभास्थितेभ्यो रुच्यभावे सति रुचिं कामयमानस्येदं कर्मेति विशेषः। तेन आग्नेयत्वेन तेजः प्रतिवादिभिरप्रधृष्यत्वम्[59] अस्मिन् यजमाने स्थापयति। तेन [60]सौम्यत्वेन ब्रह्मवर्चसं [61]प्रसङ्गोचितवेदशास्त्रवचनस्फूर्तिरूपमस्मिन् दधाति। [62]कृष्णग्रीवत्वगुणकस्य आग्नेयत्वेन बुद्धिमान्द्यरूपं तमः अस्मात् अप हन्ति। [63]ग्रीवाव्यतिरिक्तप्रदेशे श्वैत्येन रुचम् एव

३५ मै४-विरोचेत। ३६. मै४-प्रवचन, मै ल-'अध्ययन' नास्ति। ३७-३७ त र मै ल-आरभेन। ३८ लं-°त्येवम्। ३९. प र ल-°हेतु, मै४-तेजोपघातहेतु। ४०-४० मै-°र्ण्यमुक्त्वा, लं-ग्रीवाकार्ष्ण्यं इति मुक्त्वा।

५७ हा-अनुरागाय। ५८ उ-सभास्तेभ्य। ५९ ड-°प्रतिधृष्यत्वम्। ६० अ उ पा-सौम्येन। ६१ अ-प्रसङ्गेन च दित° उ पा-प्रसङ्गेन वादितवेद°। ६२ आ ड क जो द हा गो-कृष्णग्रीवगुणकस्य। ६३ आ-ग्रीवातिरिक्त°।

ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति (८) रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधात्याग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णात्येकधा समावृङ्क्ते पुर एनं दधते ॥ २ ॥

[ लभेत वरुण वशैतामवि वशामादित्येभ्यः कामाय मल्हा आ लभेत तान्येव सैवास्मिन् सोमः श्वेतो भवति त्रिचत्वारिꣳशच्च । ]

ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । तेन । कृष्णग्रीव इति कृष्ण-ग्रीवः । आग्नेयः । भवति । तमः । एव । अस्मात् । अपेति । हन्ति । श्वेतः । भवति (८) । रुचम् । एव । अस्मिन् । दधाति । बभ्रुः । सौम्यः । भवति । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । एव । अस्मिन् । त्विषिम् । दधाति । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । पुरोधायामिति पुरः-धायाम् । स्पर्धमानः । आग्नेयः । वै । ब्राह्मणः । सौम्यः । राजन्यः । अभितः । सौम्यम् । आग्नेयौ । भवतः । तेजसा । एव । ब्रह्मणा । उभयतः । राष्ट्रम् । परीति । गृह्णाति । एकधेत्येक-धा । समावृङ्क्त इति सम्-आवृङ्क्ते । पुरः । एनम् । दधते ॥ २ ॥

[illegible] आग्नेयमित्यादि ॥ आग्नेययोर्मध्ये सौम्यम् । पुरोधायामिति । पुरोधानं प्राधान्यं पौरोहित्यम् । तत्र स्पर्धमानः "अहमिव भूयासमन्यो मा भूत्" इति । अभितः सौम्यमिति । [illegible] इति द्वितीया [illegible]

[illegible] एवास्मिन् दधाति । बभ्रुर्भवति [illegible] त्रिचत्वारिꣳशत्सङ्ख्याकानि भवति [illegible]

आग्नेयमिति ॥ पौरोहित्यस्पर्धिनो [illegible] विधत्ते— आग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णात्येकधा समावृङ्क्ते पुर एनं दधते [illegible] इति ॥ ब्राह्मणस्याग्निना [illegible] सोम राजन् (तैसं १.३.१३) इत्यादिषु मन्त्रेषु सोमस्य राजन्यत्वेन व्यवहारात् राजन्यः सौम्यः । सौम्यस्य अभितः पुरस्तादुपरिष्टाच्चाऽऽग्नेयानुष्ठाने सति राष्ट्रम् उभयतः ब्रह्मणा तेजसैव परि गृह्णाति, येन राष्ट्रमयुक्तेन पौरोहित्यलक्षणेन ब्राह्मणोचितेन [illegible]

[illegible] ४१-४२. मै(—)सौम्यः । पुरोधाः । ४२-४२. मै(—)भूयासं समाय भूयात् । [illegible]

[illegible] ६४. भा—नैमित्त [illegible] इत्यादि [illegible]
६६. म.भा.उ.क.ख.घ.च.छ.—लाभेन । [illegible]

काम्याः पशवः ]

तेजसेत्यादि। अग्निब्राह्मणाभ्यामुभयतोऽवस्थिताभ्या[४३] मध्यस्थ [४४-]राष्ट्रं विषय[-४४] परि गृह्णाति सर्वतो गृह्णाति। [४५]ततश्चैकधा अद्वितीय सम् आवृङ्क्ते समावर्जयति। ततश्च एनम् एव पुरः दधते [४६]प्राधान्ये स्थापयन्ति प्रजाः॥

इति द्वितीये प्रथमे द्वितीयोऽनुवाकः॥

---

तेजसैव सर्वतो राष्ट्रं वशीकरोतीत्यर्थः। तदानीं प्रतिस्पर्धिनम् एकधा क्षणमात्रेण समावृङ्क्ते [६७-]सम्यक् वर्जयति[-६७]। ततो राजामात्यादयः एनं पुरः दधते [६८-]पुरः अग्रे[-६८] पौरोहित्यपदे[६९] स्थापयन्ति॥

अत्र मीमांसा॥ एकादशाध्यायस्य प्रथमपादे चिन्तितम्—

" कृष्णग्रीवद्वये तन्त्रं पृथग्वा, देवतैक्यतः।
तन्त्रं, सौम्यव्यवायेन कालभेदात् पृथक् भवेत् "॥ ( जैन्या ११·१·१४ ) इति॥

काम्यपशुकाण्डे श्रूयते– " आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः " ( तैसं २·१·२ ) इति। अयमर्थः– ममैव पौरोहित्यमस्तु [७०-]नान्यस्यैवेत्येवं स्पर्धोपेतो[-७०] यथोक्तवर्णोपेतं पशुत्रयमालभेतेति। तत्राऽऽद्यन्तयोः कृष्णग्रीवयोः पश्वोर्देवतैक्यात्[७१] तन्त्रेणानुष्ठानमिति चेत्। नैवम्। सौम्यपशुना व्यवधाने सति कालैक्याभावेन तन्त्रासंभवात्। [७२]तस्मादानायः।

प्रथमाध्यायस्य चतुर्थे पादे चिन्तितम्—

" आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः।
द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे[७३] "॥ ( जैन्या १·४·२९ ) इति॥

इदमाम्नायते–"आग्नेयो वै ब्राह्मणः" ( तैसं ५·६·४ ) इति। [७४]अत्राप्यत्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न [७५]ब्राह्मणस्य नामधेयं, नाप्यग्निदेवतारूपो गुणो विधीयते। 'आग्नेयं सूक्तम्, आग्नेयं हविः' इत्येवं [७६]देवतातद्धितस्य सूक्तहविर्विषयत्वात्। न हि ब्राह्मणः सूक्तं नापि हविः। [७७]अतः संबन्धवाचितद्धितान्तेनाऽऽग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि [७८]ब्राह्मणे [७९]नाग्निसंबन्धः [८०]तथाऽप्यग्निसंबद्धो[८१] मुखजन्यत्वगुणो ब्राह्मणे विद्यते। तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं कस्मिंश्चिदर्थवादे समाम्नायते– " प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त " ( तैसं ७·१·१ ) इति। तस्मादाग्नेयशब्दः स्तावकः। एवमैन्द्रो राजन्यो वैश्यो वैश्वदेव इत्यादिषु द्रष्टव्यम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

४३. तं२.मै.लं–°वसिताभ्याम्. ४४–४४. मै४–स राजविषयं। ४५. मै.लं–'ततश्च' नास्ति। ४६. मै४–प्राधान्येन

---

६७–६७. अ.उ.क.जो.ना.पा.हा–सम्यग्जयति, इ–अभिभवति। ६८–६८. अ.आ.उ.क.ड.ड१.पा.हो१–' पुरः अग्रे ' नास्ति। ६९. उ.पा–पौरोहित्यत्वेन, अ–' पौरोहित्यपदे ' नास्ति। ७०–७०. अ.उ.पा–राज्यस्येत्येवं प्रार्थयतः; उ–नान्यस्यैवेत्येवं स्पर्धोपेतः। ७१. अ–°दैवतैक्यत्वात्। ७२. जो.ना.हा–तस्मादपवादः। ७३. क–संस्तवः। ७४. अ.उ.जो.ना.पा.हा–°प्रसिद्धार्थशब्दभेदा°। ७५. ड.हो१–ब्राह्मणशब्दस्य। ७६. अ.पा–देवताद्वयस्य, उ–देवताद्वय°। ७७. आ.हा–ततः। ७८. अ.उ.जो.ड.ना.पा.हा.हो१–ब्राह्मण.। ७९. ड–°संबद्धः। ८०. ड१–तदाऽप्य° ८१. आ.ड१–°संबन्धो।

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवताया आऽलभत ततो वै स इमाꣳल्लोकानभ्यजयद्वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाꣳल्लोकानभि जयति विषम आ लभेत विषमा इव हीमे लोकाः समृद्ध्यै

देवासुरा इति देव-असुराः । एषु । लोकेषु । अस्पर्धन्त । सः । एतम् । विष्णुः । वामनम् । अपश्यत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । इमान् । लोकान् । अभीति । अजयत् । वैष्णवम् । वामनम् । एति । लभेत । स्पर्धमानः । विष्णुः । एव । भूत्वा । इमान् । लोकान् । अभीति । जयति । विषम इति वि-समे । एति । लभेत । विषमा इति वि-समाः । इव । हि । इमे । लोकाः । समृद्ध्या इति सम्-ऋद्ध्यै ।

देवासुरा इत्यादि ॥ स्पर्धा लोकविषये परस्परमैश्वर्यासहनम् । वामनो ह्रस्वाङ्गः । स्वायै देवतायै आत्मानमेव देवतां कृत्वा । तस्यै वामनम् आऽलभत । ततो वा इत्यादि । गतम् । स्पर्धमान इति । स्पर्धाविषयसिद्ध्यै । विषम इति । निम्नोन्नतस्थले देवयजनभूते । विषमा इवेति । भोक्तृभोग्यादिवैलक्षण्याद्वैषम्यं लोकानाम् ॥

'जलोदरगृहीतो यो ये वाञ्छन्ति पशुप्रथाम् ।
ब्रह्मवर्चसकामो यो यो विद्वान् वक्तुमक्षमः ॥
दीर्घरोगी प्रजाकामः सभारञ्जनवर्जितः ।
पौरोहित्ये स्पर्धमानश्चैतेषां पशवः श्रुताः ॥

देवासुरा इति ॥ तानेवान् पशून् द्वितीयानुवाके विधाय तृतीयानुवाके जयादिहेतून् पशून् विधित्सन्नादौ लोकत्रयजयहेतुं पशुं विधातुं प्रस्तौति— 'देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवताया आऽलभत ततो वै स इमाꣳल्लोकानभ्यजयत्' इति ॥ लोकेषु विषयभूतेषु वामन ह्रस्व पशुः स्वायै विष्णुरूपायै देवतायै ॥

वैष्णवमिति ॥ अथ विधत्ते— 'वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाꣳल्लोकानभि जयति' इति ॥ स्पर्धमानः गृहक्षेत्रादिविषये विवादवान् । विष्णुप्रियद्रव्यदानादस्योपचरितं विष्णुत्वम् ॥

विषम इति ॥ चोदकप्राप्तसमदेशमपवदितुं विधत्ते— 'विषम आ लभेत विषमा इव हीमे लोकाः समृद्ध्यै' इति । पृथिव्यादिलोकानामुत्तरोत्तरं विस्तृतत्वात् भोगाधिक्याद्वा विषमत्वम् । सोऽयं विषमदेशः समृद्ध्यै कल्पते ॥

इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत संग्रामे (१) संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ संग्राममिन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति

इन्द्राय। मन्युमत इति मन्यु मते। मनस्वते। ललामम्। प्राशृङ्गम्। एति। लभेत। सग्राम इति स-ग्रामे (१)। सयत्त इति स-यत्ते। इन्द्रियेण। वै। मन्युना। मनसा। सग्राममिति स ग्रामम्। जयति। इन्द्रम्। एव। मन्युमन्तमिति मन्यु-मन्तम्। मनस्वन्तम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मिन्। इन्द्रियम्। मन्युम्। मन। दधाति। जयति। तम। सग्राममिति स ग्रामम्। इन्द्राय। मरुत्वते। पृश्निसक्थमिति पृश्नि सक्थम्। एति। लभेत। ग्रामकाम इति ग्राम काम। इन्द्रम्। एव। मरुत्व-तम्। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। स। एव। अस्मै। सजातानिति स-जातान्। प्रेति। यच्छति। ग्रामी। एव। भवति।

इन्द्रायेत्यादि॥ ललाम श्वेतपुण्ड्लाञ्छितललाट। मत्वर्थीयो लुप्यते। प्राशृङ्गो [4]लम्बितशृङ्ग पुगव[4]। 'प्राशृङ्गो गौ' इति भरद्वाजवचनात्। इन्द्रियेणेत्यादि। [5]इन्द्रिय वीर्यम्। इन्द्रियादित्रय [5]सग्रामजयश्रीहेतु॥

मरुत्वत इति॥ "तसौ मत्वर्थे" (पा १ ४ १९) इति भत्वम्। पृश्निसक्थ श्वेतजानु, [6]श्वेतोररित्येके, 'श्वेतकटिप्रदेश इत्यपरे[6]। "बहुव्रीहौ सक्थ्यक्ष्णो" (पा ५ ४ ११३) इति षच्॥

इन्द्रायेति॥ सग्रामार्थिन पशु विधत्ते–'इन्द्राय मन्युमते मनस्वते ललाम प्राशृङ्गमा लभेत सग्रामे सयत्त इन्द्रियेण वै मन्युना मनसा सग्राम जयतीन्द्रमेव मन्युमन्त मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रिय मन्यु मनो दधाति जयति तꣳ सग्रामम्' इति॥ [7]मनस्वते धैर्यवते। ललामशब्द [10]श्वेतपुण्ड्रवाराङ्कितललाटोपेत ब्रूते। प्राशृङ्गो मुख प्रत्यासन्नशृङ्ग पुगव, 'प्राशृङ्ग [11]गौ' इति भरद्वाजवचनात्। "प्राशृङ्गोऽवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान् पुमरुत्सृष्टो गोमृग इति गव्या" (आपश्रौ १९ १६ १६) इत्यापस्तम्बवचनात्। [8]सयत्ते प्राप्ते सति। इन्द्रिय शारीर बलम्। मन्यु शत्रुविषय कोप। मन धैर्यम्॥

इन्द्रायेति॥ ग्रामार्थिन पशु विधत्ते–'इन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति' इति॥ मरुद्भिर्युक्तो मरुत्वान्। पृश्निसक्थ श्वेतोर। [9]सजातान् सहोत्पन्नान् भ्रात्रादीन् सहवासिनो भृत्यादींश्च॥

४-४ तर,मै ल–लम्बितशृङ्ग पिङ्गल मै४–लङ्गिन(?)शृङ्ग पुंगव। ५ मै४–°जयहेतु।
६–६. ल–'इत्यपरे' नास्ति तैर,मै–'अपरे' नास्ति, अ मै४–'श्वेत°' नास्ति।

१० पुण्ड्रलाञ्छित°। ११. ऊ–अनुसप्रत्याऽऽनतशृङ्गो गौ।

यदृ॑षभस्तेनै॒(२)न्द्रो यत् पृश्नि॒स्तेन॑ मारु॒तः समृ॑द्ध्यै प॒श्चात् पृ॑श्निस॒क्थो भ॑वति प॒श्चाद॒न्ववसा॒यिनी॑मे॒वास्मै॒ वि॑शं॑ करोति सौ॒म्यं ब॒भ्रुमा ल॑भेता॒न्नका॑मः सौ॒म्यं वा अन्न॑ꣳ सोम॑मे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॒ अन्नं॒ प्र य॑च्छत्यन्ना॒द ए॒व भ॑वति ब॒भ्रुर्भ॑वत्ये॒तद्वा अन्न॑स्य रू॒पꣳ समृ॑द्ध्यै

यत्। ऋ॒ष॒भ । तेन॑ (२)। ऐन्द्र । यत्। पृश्नि॑ । तेन॑। मा॒रु॒त । समृ॑द्ध्या इ॒ति॒ सम् ऋ॒द्ध्यै॒। प॒श्चात्। पृ॒श्नि॒स॒क्थ इति॑ पृश्नि स॒क्थ । भ॒व॒ति॒। प॒श्चा॒द॒न्व॒व॒सा॒यिनी॒मिति॑ प॒श्चात् अ॒न्व॒व॒सा॒यिनी॑म्। ए॒व। अ॒स्मै॒। विश॑म्। क॒रो॒ति॒। सौ॒म्यम्। ब॒भ्रुम्। एति॑। ल॒भे॒त॒। अन्न॑काम॒ इत्यन्न॑-का॒म। सौ॒म्यम्। वै। अन्न॑म्। सोम॑म्। ए॒व। स्वेन॑। भा॒ग॒धेये॒नेति॑ भाग धेये॑न। उपेति॑। धा॒व॒ति॒। स। ए॒व। अ॒स्मै॒। अन्न॑म्। प्रेति॑। य॒च्छ॒ति॒। अ॒न्ना॒द इत्य॑न्न-अ॒द। ए॒व। भ॒व॒ति॒। ब॒भ्रुः। भ॒व॒ति॒। ए॒तत्। वै। अन्न॑स्य। रू॒पम्। समृ॑द्ध्या इ॒ति॒ सम् ऋ॒द्ध्यै॒।

यदपभ इत्यादि। ऋषभस्य सेक्तृत्वादैन्द्रत्वम्। श्वेतस्य वायव्यत्वात् पृश्नेर्मारुतत्वम्। समृद्धया इति। सदृश सबध समृद्धि। पश्चादिति। [a]सक्थ्न पश्चाद्भागे पृश्नित्व यस्य स तयोक्त। [v]पश्चादन्ववसायिनी पश्चादनुसृत्यावस्थानशीला [v]विश [e]प्रजा [v]करोति ॥

सौम्यमित्यादि॥ बभ्रु [e]कपिलश्याम। [v]सौम्यम् अन्नम्, [e]तस्यौपधीशत्वात् ॥

यदिति॥ पुगवत्व सक्थिश्वैत्य च प्रशसति– 'यदृपभस्तेनैन्द्रो यत्पृश्निस्तेन मारुत समृद्ध्यै' इति॥ [11]सेक्तृत्वसामान्येनेन्द्रसबन्धित्व, "वायव्य श्वेतम्" (तैस २ १·१) इत्युक्तत्वात् पृश्निवर्णस्य मारुतत्वं तदुभयं समृद्ध्यै भवति॥

पश्चादिति॥ पुरोवर्तिनोरस्य [12]पृश्निसक्थित्व वारयितु विधत्ते– 'पश्चात् पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विश करोति' इति॥ यजमानो ग्रामस्वामी प्रथम यत्कार्यं यथाऽध्यवस्यति तद्ग्रामनिवासिनी प्रजा पश्चात् यजमानानुसारेणैव तत्कार्यमध्यवस्यति, न तु प्रातिकूल्य चिन्तयतीति पश्चादन्ववसायिनी॥

सौम्यमिति॥ अन्नार्थिन पशु विधत्ते– 'सौम्य बभ्रुमा लभेतान्नकाम सौम्य वा अन्न सोममेव स्वेन भागधेयेनोप धावति स एवास्मा अन्न प्र यच्छत्यन्नाद एव भवति' इति। "सोमो वा ओषधीनाꣳ राजा" (तैब्रा ३ ९ १७) इति श्रुतत्वादन्नस्य सौम्यत्वम्। [e]अन्नाद [14]व्याधिराहित्येन दीप्ताग्नि॥

बभ्रुरिति॥ पशुवर्णं प्रशसति– 'बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै' इति। विदलित पक्वकायान्नस्य प्रियङ्ग्वादेर्वा [e]रूप पिङ्गलम्॥

७. [पुरोदाशेन पाठ ।], मै–साय (?), मै–गाये (?)। ८. ल–प्रजा बभ्रुम्। ९. अमै–वर्णि श्याम। १०. मै–तस्योदयवीत्वात्, प२७ तस्योभयवीत्वात्।
१२. इ–°ग्रामीद्रं। १३ इ–पृश्निमाद्काम्। १४. ट१–°राहित्ये।

सौम्यं बभ्रुमा लभेत यमलꣳ (३) राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्यं प्र यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्रतुरे ललाममा प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठा गच्छतीन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा (४) लभेत यः पाप्मना गृहीतः स्यात् पाप्मा वा

सौम्यम्। बभ्रुम्। एति। लभेत। यम्। अलम् (३)। राज्याय। सन्तम्। राज्यम्। न। उपनमेदित्युप नमेत्। सौम्यम्। वै। राज्यम्। सोमम्। एव। स्वेन। भागधेयेनेति भाग धेयेन। उपेति। धावति। सः। एव। अस्मै। राज्यम्। प्रेति। यच्छति। उपेति। एनम्। राज्यम्। नमति। बभ्रुः। भवति। एतत्। वै। सोमस्य। रूपम्। समृद्ध्या इति सम् ऋद्ध्यै। इन्द्राय। वृत्रतुर इति वृत्र तुरे। ललामम्। प्राशृङ्गम्। एति। लभेत। गतश्रीरिति गत - श्रीः। प्रतिष्ठाकाम इति प्रतिष्ठा-कामः। पाप्मानम्। एव। वृत्रम्। तीर्त्वा। प्रतिष्ठामिति प्रति स्थाम्। गच्छति। इन्द्राय। अभिमातिघ्न इत्यभिमाति घ्ने। ललामम्। प्राशृङ्गम्। एति (४)। लभेत। यः। पाप्मना। गृहीतः। स्यात्। पाप्मा। वै।

यमिति॥ राज्य प्राप्तु योग्यमपि [११] राज्य राजन्य वा य न उप नमेत् [११] नोपगच्छेत्। राज्ञः कर्म राज्यम्। [१२] पुरोहितादित्वात् (पा ५ १ १२८) यक् [१२]॥

वृत्रतुर इति॥ [१३] वृत्रस्य वा पापादेर्वा [१३] हिंसिता वृत्रतूः। तुर्वी हिंसायाम्, क्विप्। ललाम प्राशृङ्गमिति व्याख्यातम्। गतश्री। केचिदाहुः शुश्रुवान् ग्रामणी राजन्यो वेति (द्र. बोश्रौ १७ ४९)। पाप्मानमिति। येन प्रतिष्ठा निरुध्यते। वृत्र वारकम्॥

सौम्यमिति॥ राज्यप्राप्तिकामिनः पशुं विधत्ते– ' सौम्यं बभ्रुमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्यं प्र यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्यै ' इति। राज्ञो ज्येष्ठपुत्रत्वाच्छौर्यादिगुणसम्पन्नत्वाच्च [१५] राज्याय अलं सन्तं सम्यग्योग्यं [१६] सन्तं [१७] यं पुरुषं प्रति राज्यं न प्राप्नुयात् तस्यायं पशुः। " सोमोऽस्माकं ब्राह्मणानाꣳ राजा " ( तैस १ ८ १०, १२ ) इति श्रुतत्वाद्राज्यं सौम्यम्। चन्द्रमण्डलस्य सुवर्णवर्णत्वात् बभ्रुत्वं सोमस्य रूपम्॥

इन्द्रायेति॥ शत्रुबाधेन भ्रष्टश्रियः प्रतिष्ठार्थं पशुं विधत्ते– ' इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छति ' इति॥ वृत्रतूर्वैरिहिंसकः। पाप्मानम् एव नरकप्रदपापवद्बाधकमेव वृत्रं वैरिणम्॥

११–११ मै४–राष्ट्रमाधिपत्यं वा य नोपनमेत्। १२–१२ अ ल–पुरोहितत्वादित्यादिकम्। १३–१३ अ तं२ मै४–वृत्रस्य पापादे।

१५ आ–' च ' नास्ति। १६ ङ ङ१ हो१–सम्यक् ख्यात। १७. ङ ङ१–' सन्त ' नास्ति।

अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति स एवास्मात् पाप्मानमभिमातिं प्र णुदत इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति स एनं (५) वज्रो भूत्या इन्द्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥ ३ ॥

[ सुग्रामे तेनालमभिमातिघ्ने ललामं प्राशृङ्गमेनं पञ्चदश च । ]

अभिमातिरित्यभि मातिः । इन्द्रम् । एव । अभिमातिहनमित्यभिमाति हनम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । पाप्मानम् । अभिमातिमित्यभि मातिम् । प्रेति । नुदते । इन्द्राय । वज्रिणे । ललामम् । प्राशृङ्गम् । एति । लभेत । यम् । अलम् । राज्याय । सन्तम् । राज्यम् । न । उपनमेदित्युप नमेत् । इन्द्रम् । एव । वज्रिणम् । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सः । एव । अस्मै । वज्रम् । प्रेति । यच्छति । सः । एनम् (५) । वज्रः । भूत्यै । इन्द्धे । उपेति । एनम् । राज्यम् । नमति । ललामः । प्राशृङ्गः । भवति । एतत् । वै । वज्रस्य । रूपम् । समृद्ध्या इति सम् ऋद्ध्यै ॥ ३ ॥

[ मैम २ ७ ३, ४, ८, ९ कास १३ ३-४ ]

अभिमातिघ्न इति ॥ अभिमाति पाप्मा, [17]तस्य हन्त्रे । क्विप् ( पा ३ २ ७६ ) । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम । गतमन्यत् ॥ इन्द्धे इति । राज्यप्राप्तियोग्या दीप्तिं करोति इति । ञि इन्धी दीप्तौ । "श्नान्नलोपः" ( पा ६ ४ २३ ) ॥

इति द्वितीये प्रथमे तृतीयोऽनुवाक ॥

इन्द्रायेति ॥ पापक्षयार्थिनं पशुं विधत्ते– 'इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा लभेत यः पाप्मना गृहीतः स्यात् पाप्मा वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति स एवास्मात् पाप्मानमभिमातिं प्र णुदते' इति ॥ [17]पाप्मना रोगधातुपपातकादिना ॥

इन्द्रायेति ॥ राज्यार्थिनं पश्वन्तरं विधत्ते– 'इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति स एनं वज्रो भूत्या इन्द्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै' इति ॥ [18]वज्रं वज्रवत्प्रहरणसमर्थमायुधम् । [18]स चाऽऽयुधविशेषो वज्रमस्य [18-19]भूत्यै [18]इन्द्धे[18] यजमानं वैरिसंतापाय दीप्तं करोति । ललामस्य शृङ्गस्य तीक्ष्णाग्रत्वात् तीक्ष्णधारायुक्तवज्ररूपत्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१४ [illegible]–सन्ता ।

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतां दर्शर्षभामालभन्त तयैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतां दर्शर्षभामालभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति

असौ। आदित्य । न। वीति। अरोचत। तस्मै। देवा। प्रायश्चित्तिम्। ऐच्छन्। तस्मै। एताम्। दर्शर्षभामिति दश-ऋषभाम्। एति। अलभन्त। तया। एव। अस्मिन्। रुचम्। अदधु । य । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-काम । स्यात्। तस्मै। एताम्। दर्शर्षभामिति दश-ऋषभाम्। एति। लभेत। अमुम्। एव। आदित्यम्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एव। अस्मिन्। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। दधाति। ब्रह्मवर्चसीति ब्रह्म वर्चसी। एव। भवति।

असावादित्य इत्यादि॥ दशानामृषभाना समाहारो दशर्षभा। "[1]अकारान्तोत्तरपदो द्विगु स्त्रियामिष्यते" (द्र पाभा २ ४ ३० वा २) इति [2]त्रिफलादिवत् (द्र पा ४ १ ६४ वा ३) अजादित्वात्[2] (पा ४ १ ४) "द्विगो" (पा ४ १ २१) [3]इति ङीबभाव। "इगन्तकाल" (पा ६ २ २९) इति पूर्वपदप्रकृतिस्वरत्वम् अनिगन्तेऽपि व्यत्ययेन प्रवर्तते। बहुव्रीहिर्वा। समष्टिर्वोच्या। दशर्षभेति कर्मनाम, जातिरिति केचित्॥

[1]स्पर्धाकामो युद्धकामो ग्रामकामोऽन्नकामवान्।
राज्यकाम प्रतिष्ठार्थी य पापक्षयमिच्छति॥
राज्यार्थी च पुमासो ये तेषा पशव ईरिता॥

असाविति॥ [2]तृतीयेऽनुवाके जयकामादीना पशून् विधाय चतुर्थे [3]ब्रह्मवर्चसकामादीना [4]पशून् विधित्सुरादौ ब्रह्मवर्चसकामाय विधातु प्रस्तौति—'असावादित्यो न व्यरोचत तस्मै देवा प्रायश्चित्तिमैच्छन् तस्मा एता दशर्षभामाऽलभन्त तयैवास्मिन् रुचमदधु' इति। [5]पूर्वमेवोक्ततोऽप्यादित्यस्य दीप्त्यभाव कालविशेषणात्रापि प्रतीकारान्तर [6]दर्शयितु पुनरुच्यते। दशानामृषभाणा [7]समाहारो दशर्षभा। [8]कर्मनामधेयमिति केचित्, तत्तु [9]नात्यन्तयुक्तिसहम्। 'आऽलभन्त' [10]इत्यस्यानन्वयप्रसङ्गात्॥

य इति॥ विधत्ते—'यो ब्रह्मवर्चसकाम स्यात् तस्मा एता दशर्षभामालभेतामुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चस दधाति ब्रह्मवर्चस्येव भवति' इति। 'अमुमेवाऽऽदित्यम्' इत्यर्थवादे श्रुतत्वादादित्योऽस्मिन् कर्मणि देवता॥

१ मै-आकारा°।[3] २-२ मै४-त्रिफलादित्वात्। ३ ल-'इति' नास्ति।

१ क ड१ स्पर्धमान। २ आ-तृतीयानु°। ३ ड हो१-°कामार्थिना। ४ ड१-'पशून्' नास्ति। ५ हो१-पूर्वमुक्तरीत्याप्य° ड१-पूर्वमुक्तो°। ६ अ उ पा-'दर्शयितुम्' नास्ति। ७ इ क जो ना हा-समाहारोऽस्यामिति। ८ ड ड१-कर्मनामेति। ९ ड ड१-नात्यन्त युक्ति°। १० इ क-त्यस्यानन्वयात्।

वसन्ता प्रातस्त्रीन् ललामाना लभेत ग्रीष्मे मध्यंदिने ( १ ) त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान् त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्द्धे त्रयस्त्रय आ लभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति

वसन्ता। प्रात। त्रीन्। ललामान्। एति। लभेत। ग्रीष्मे। मध्यंदिने ( १ )। त्रीन्। शितिपृष्ठानिति शिति-पृष्ठान्। शरदि। अपराह्ण इत्यपर अह्णे। त्रीन्। शितिवारानिति शिति-वारान्। त्रीणि। वै। आदित्यस्य। तेजाꣳसि। वसन्ता। प्रात। ग्रीष्मे। मध्यंदिने। शरदि। अपराह्ण इत्यपर-अह्णे। यावन्ति। एव। तेजाꣳसि। तानि। एव। अवेति। रुन्द्धे। त्रयस्त्रय इति त्रय–त्रय। एति। लभ्यन्ते। अभिपूर्वमित्यभि-पूर्वम्। एव। अस्मिन्। तेज। दधाति।

वसन्तेति॥ पूर्ववत् सप्तम्या डादेश (पा ७ १ ३९)। वसन्ते चतुर्दश्या प्रक्रम। प्रात काले उपाकरण वपाहोम इत्युभय यथा स्यात्तथोपक्रम। ग्रीष्मशरदोर्मध्याह्नापराह्णयोरेवोपक्रम। सर्वत्र सवत्सरे ब्रह्मचर्यादि यजमानस्य केचिदिच्छन्ति[४]। ललामा उक्ता (द्र तैस २ १ ३)। [५]शितिपृष्ठा श्वेतपृष्ठा [५]शितिवारा श्वेतवाला। उभयत्रापि "शितेर्नित्याबह्वच्" (पा ६ २ १३८) इत्युत्तरपदप्रकृतिस्वरत्वम्। अभिपूर्वमिति। अनुक्रमेण त्रिभि पशुभि त्रीणि तेजासि [४]अस्मिन् [४]दधाति।

वसन्तेति॥ तत्रैव [११]"कालविशेषसहित पशुगुणविशेषं"[११] विधत्ते–'वसन्ता प्रातस्त्रीन् ललामाना लभेत ग्रीष्मे मध्यंदिने त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान्' इति। शितिपृष्ठा श्वेतपृष्ठा। [११]शितिवारा श्वेतवाला[११]॥

त्रीणीति॥ पूर्ववत् कालविशेष प्रशसति–'त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यंदिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्द्धे' इति॥

त्रयस्त्रय इति॥ विहितानेव त्रित्वोपेतान् सर्वान् प्रशसति–'त्रयस्त्रय आ लभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति' इति। पूर्वं वसन्ते यथा त्रित्वोपेतास्तथा ग्रीष्मशरदोरपि त्रित्वोपेतत्वे सति पूर्वस्मादस्य सपद्यते। [११]तद्वदस्मिन् यजमानेऽपि 'अभिपूर्वं पूर्वपूर्वस्मादस्येनैव'[११] [११]उत्तरोत्तरकालेऽपि 'तेज निधत्त, न तु कदाचिदपि तेजो हीयत इत्यर्थ॥

४. ट–'इच्छन्ति' नास्ति। ५–५. मे–'श्वेतपृष्ठा' नास्ति, ल–'शितिपृष्ठा' नास्ति।

संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति संवत्सरस्य परस्तात् प्राजापत्यं कद्रु(२)मा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति यदि बिभीयाद्दुश्चर्मा भविष्यामीति

---

सम्वत्सरमिति स-वत्सरम्। पर्यालभ्यन्त इति परि आलभ्यन्ते। सम्वत्सर इति स-वत्सर । वै। ब्रह्मवर्चसस्येति ब्रह्म वर्चसस्य। प्रदातेति प्र-दाता। सम्वत्सर इति स-वत्सर । एव। अस्मै। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। प्रेति। यच्छति। ब्रह्मवर्चसीति ब्रह्म-वर्चसी। एव । भवति। सम्वत्सरस्येति स-वत्सरस्य। परस्तात्। प्राजापत्यमिति प्राजा पत्यम्। कद्रुम् ( २ )। एति। लभेत। प्रजापतिरिति प्रजा-पति । सर्वाः । देवताः । देवतासु। एव। प्रतीति। तिष्ठति। यदि। बिभीयात्। दुश्चर्मेति दु चर्मा। भविष्यामि। इति।

---

सम्वत्सरमित्यादि। गतम् ( द्र. तस २ १ २ )॥

सम्वत्सरस्येति॥ यस्मिन्नारभ्यते पर्वणि दर्शपूर्णमासौ तत प्रभृति [6]द्वादशासु द्वादशासु[6] पौर्णमासीषु द्वादशामावास्यासु [7]चातीतासु त्रयोदशे पर्वणि सकल्प। [8]कद्रु पक्वबदरवर्णम्[8]॥

यदीत्यादि॥ दुश्चर्मा कुष्ठी। "परादिश्छन्दसि" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। कुष्ठादित्वग्दोषो मे भविष्यतीति यदि [9]कुतश्चित् लिङ्गात् बिभीयादिति। स्वयेति। स्वया[10] देवतया पशुभि च सहकारिभि त्वच शोभना करोति॥

---

**संवत्सरमिति॥** आश्रयकृष्णग्रीवादिद्विव [15]ब्रह्मचर्यादिनियमकाल विधत्ते – 'संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति' इति॥

**संवत्सरस्येति॥** दशमस्यपशोरस्य [16]देवताकालवर्णविशेषान् विधत्ते – 'संवत्सरस्य परस्तात् प्राजापत्यं कद्रुमा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति' इति। कद्रु पिङ्गल। प्रजापते उत्पादकत्वेन [17]सर्वदेवता[त्म]कत्वम्॥

**यदीति॥** त्वग्दोषनिवारणाय पशु विधत्ते– 'यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापाष्ण[18] श्यामम् आ लभेत सौम्यो वै देवतया पुरुषः पौष्णा पशव स्वयैवास्मै देवतया पशुभिस्त्वच करोति न

---

६–६ मै४–दशसु तर–द्वादशसु। ७ अ मै४–च व्यतीतासु। ८–८ अ पर ल–कद्रु पक्वबदरवर्ण, गै४–कद्रु बदरवर्ण, तर–कद्रु पक्व बदरवर्णम्। ९ मै–ल–कथंचित्। १० मै–'स्वया'नास्ति।

---

१५ इ–ब्रह्मचर्यादिकाल। १६ ड हो१–देवताकर्मनिर्णयवर्ण°। १७ ड ड१ हो१–सर्वदेवतात्वम्।

सोमापौष्णꣳ श्याममा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य (३) यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत

सोमापौष्णमिति सोमा पौष्णम्। श्यामम्। एति। लभेत। सौम्य। वै। देवतया। पुरुष। पौष्णा। पशव। स्वया। एव। अस्मै। देवतया। पशुभिरिति पशु भि। त्वचम्। करोति। न। दुश्चर्मेति दु चर्मा। भवति। देवा। च। वै। यम। च। अस्मिन्। लोके। अस्पर्धन्त। स। यम। देवानाम्। इन्द्रियम्। वीर्यम्। अयुवत। तत्। यमस्य (३)। यमत्वमिति यम त्वम्। ते। देवा। अमन्यन्त। यम। वै। इदम्। अभूत्। यत्। वयम्। स्म। इति। ते। प्रजापतिमिति प्रजा पतिम्। उपेति। अधावन्। स। एतौ। प्रजापतिरिति प्रजा पति। आत्मन। उक्षवशावित्युक्ष वशौ। निरिति। अमिमीत।

देवाश्चेत्यादि॥ ᵛअस्मिन् ᵛलोके [11]एतल्लोकनिमित्तम् ᵛअस्पर्धन्त अस्माकमेवाय लोक इति ᵛदेवा, ममैवायमिति ᵛयम। [12]स इत्यादि। देवानाम् [13]ᵛइन्द्रिय ᵛवीर्यं च ᵛअयुवत देवेभ्य पृथक् कृतवान् अपहृतवान्। व्यत्ययेन शप् [पा ३ १ ८५], आत्मनेपदं च। तदिति। यमनाद्यम। यौति पचाद्यचि (पा ३ १ १३४) अन्त्यविकारश्छान्दस। यमो वा इति। ᵛयम ᵛवा ᵛइद विश्वम् ᵛअभूत् यमेश्वरमभूत ᵛयत ᵛवय ᵛस्म यदस्मदधीन पूर्वमासीत्। त इति। तथा मन्यमाना देवा ᵛप्रजापतिम उपसप्राप्ता, इय स्म अत्र प्रतिकर्तुमर्हसीति ᵛस च ᵛआत्मन शरीरात् ᵛउक्षवशौ ᵛनि ᵛअमिमीत निर्माय दत्तवान्। उक्षा च वशा चोक्षवशा, व्यत्ययेन पूर्वलिङ्गता। उक्षा सेक्ता, वशा वन्ध्या।

दुश्चर्मा भवति' इति। कण्डूत्यादिविशेषलिङ्गेन [18] भाविकुष्ठादिरोगमनुमाय भीतस्याय [18] पश। पुरुषस्य सामदेवत्वात्त्य पशूना पौष्णत्व च[19] सोमापूषविषययाज्यानुवाक्याप्रसङ्गेन दर्शितम्* ॥

देवा इति॥ भ्रातृव्यवतो द्विपशुक कर्म विधातु प्रस्तौति– 'देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रिय वीर्यमयुवत तद्यमस्य यमत्व ते देवा अमन्यन्त यमो वा इदमभूद्यद्वय स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामालभन्तेन्द्रमुक्षाण

[11] मे१–लोक°। [12] मे१–यम। [13] ल–इन्द्रिय च।

[18–18] अ आ उ क खो द ड२ मा पा हा हो१–भाविकुष्ठरोग°, अ उ पा–भाविकुष्ठरोगमनुमापयति ष्यायं। *['सोमापूष्णा जनना रयीणां' (तैसं १ ८ २२) इत्यत्र सायणीयं भाष्यं द्रष्टव्यम्।]
[19] अ इ उ जा मा पा हा–'च' नास्ति।

ते देवा वैष्णावरुणीं वशामालभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं (४) वशामालभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन्त वृत्रो हतः षोडशभिर्भोगैरसिनात्तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्योऽभवन्

ते । देवाः । वैष्णावरुणीमिति वैष्णा वरुणाम् । वशाम् । एति । अलभन्त । ऐन्द्रम् । उक्षाणम् । तम् । वरुणेन । एव । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । अनुदन्त । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । अवृञ्जत । यः । भ्रातृव्यवानिति भ्रातृव्य वान् । स्यात् । सः । स्पर्धमानः । वैष्णावरुणीमिति वैष्णा वरुणाम् (४) । वशाम् । एति । लभेत । ऐन्द्रम् । उक्षाणम् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । नुदते । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । इन्द्रः । वृत्रम् । अहन् । तम् । वृत्रः । हतः । षोडशभिरिति षोडश भिः । भोगैः । असिनात् । तस्य । वृत्रस्य । शीर्षतः । गावः । उदिति । आयन् । ताः । वैदेह्यः । अभवन् ।

ते इत्यादि । गतम् ॥

इन्द्रो वृत्रमहन्नित्यादि ॥ षोडशभिः भोगैः शरीरदेशैः इन्द्रम् असिनात् अबध्नात् । षिञ् बन्धने । वैदेह्यः गोविशेषाः । केचिदाहुः – विदेहा एव वैदेह्यः अशरीरा गावः अभवन् ।

तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत' इति । असुरान् देवेभ्यः पृथक् कृतवान् । अतो यजनामकोऽयं वर्णव्यत्ययेन यम सपत्नः । इन्द्रियगते वीर्येऽपगते सति देवाः परस्परमिदमब्रुवन् – पूर्वं यत् भूलोकाधिपत्यं प्राप्य वयं स्म तत् इदं प्राप्य यम एव अभूत् । उक्षा सेचनसमर्थो वत्सोत्पादकः, वशा वन्ध्या, लिङ्गव्यत्ययो द्रष्टव्यः । तं यमं वरुणपाशेन एव ग्राहयित्वा यज्ञरूपेण विष्णुना निष्कासितवन्तः । इन्द्रप्रसादेन अस्य यमस्य वीर्यं नाशितवन्तः ।

य इति ॥ विधत्ते– 'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं वशामालभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति । आत्मना स्वेन रूपेण यजमानो विजयी भवति । अस्य भ्रातृव्यः परा भवति ॥

इन्द्र इति ॥ पापविमुक्तिकामस्य द्विपद्युक्तं कर्म विधातुं प्रस्तौति– 'इन्द्रो वृत्रमहन् स वृत्रो हतः षोडशभिर्भोगैरसिनात् तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्योऽभवन् तासामृषभो

१४ भै४–शरीरे । १५ तर–गाव ।

२०–२० ना–न्द्रियवीर्ये एव हृत सति । २१ अ उ जा ना पा हा–आत्मत्वेन ।
२२ अ पा–रतिविमुक्ति°, उ–रति विमुक्ति° ।

तासामृषभो जघनेऽनूदैत् तमिन्द्रो(५)ऽचायत् सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेयं कृष्णग्रीवमाऽलभतैन्द्रमृषभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त

तासाम् । ऋषभ । जघने । अनु । उदिति । ऐत् । तम् । इन्द्र (५) । अचायत् । स । अमन्यत । य । वै । इमम् । आलभेतेत्या लभेत । मुच्येत । अस्मात् । पाप्मन । इति । स आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । अलभत । ऐन्द्रम् । ऋषभम् । तस्य । अग्नि एव । स्वेन । भागधेयेनेति भाग धेयेन । उपसृत इत्युप-सृत । षोडशधेति षोडश धा । वृत्रस्य भोगान् । अपीति । अदहत् । ऐन्द्रेण । इन्द्रियम् । आत्मन् । अधत्त ।

"उदात्तस्वरितयो°" (पा ८ २ ४) इति विभक्ति स्वर्यते । अथ तासा गवा [16]जघने पश्चा ऋषभ अनु उत् ऐत् अनूद्गत, तम् इन्द्र श्रुतवान् । अस्मादिति । [17]सर्वलोकाप्रसिद्धात् न तु [18]प्राकृतात्, अत एवान्वादेशाभावान्निघाताभाव । "ऊडिदम्°" (पा ६ १ १७१) इति विभक्तेरुदात्तत्वम् । अथैव जानन्निन्द्र स्वय तानस् आग्नेय कृष्णग्रीवम् आ अलभत ऐन्द्र ऋषभम् । पृथक् स्वेन भागधेयेन उपसृत अग्नि अस्य इन्द्रस्य बाधकान् वृत्रभोगा षोडशधा स्थितान् अपि अदहत् यथाकाममदहत् । [19]यद्वा—षोडशधा स्थितान् सर्वानप्यदहत् ऐन्द्रेण आत्मनि इन्द्रियम् अधत्त इन्द्र ।

जघनेऽनूदैत् तमिन्द्रोऽचायत् सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेय कृष्णग्रीवमाऽलभतैन्द्रमृषभ तस्याग्निरेव स्वेन भागधेयेनोपसृत षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त' इति । तम् इन्द्र भोगै शरीरै असिनात् [23]अबध्नात्, वृत्रादुत्पन्नानि क्रोधाविष्टानि [24]षोडश शरीराणि परितो वेष्टयित्वा स्थितानि, स च वृत्र सर्पाकारै [25]तै [26]शरीरै तमिन्द्र रज्जुभिरिव [27]बबन्ध । तत तस्य वृत्रस्य शीर्षत काश्चित् गाव उत्पन्ना । ता च गावो विशिष्टदेहसबन्धिन्य अभवन् । तासा गवा जघने पृष्ठभागे कश्चित् ऋषभ अनुगम्य उदगच्छत्[28] । तम् ऋषभमुद्दिश्य इन्द्र अचायत् [29]स्वामान पूजितवान् । [30]अहो मदीय कार्यं सपन्नमिति । तत स इन्द्रो मनसा व्यचारयत् किमिति ? य कोऽपि इमम् ऋषभम् आलभेत देवतोद्देशेन हिंस्यात् स ईदृशाद्बन्धनादिरूपात् पाप्मन मुच्येत इति । एव विचार्य द्विपशुक कर्म कृतवान् । तस्य इन्द्रस्य सबन्धिना स्वभागेन तुष्ट अग्नि सर्पाकाराणि षोडश शरीराणि त वृत्रम् अपि अदहत् । तत ऐन्द्रयागेन सामर्थ्यमिन्द्र स्वात्मनि अधत्त ॥

16 अ मै४-जघोन । 17. त१ त२ मै-°लोकप्रसिद्धात् । 18 अ त१ त२ मै मै४ ऋ- प्रकृतात् । ०(द्र पा २ ४ ३२) । 19. ल-यथा ।

23 अ इ को ना हा अबाबध्नात्, इ ह१ हो१-अविध्यत् । 24 अ उ पा- 'षोडश' नास्ति । 25. ह१- 'तै' नास्ति । 26 इ जो ना हा-स्वशरीरै । 27. इ हो१-आबध्नात् । 28. इ आदगच्छत् । 29. इ ह१ म चायामास । 30. जो ना हा-सोऽमन्यत अहो, इ-सोऽमन्यत ।

यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः ( ६ ) पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन् धत्ते मुच्यते पाप्मनो भवत्येव द्यावापृथिव्यां धेनुमा लभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै

यः । पाप्मना । गृहीतः । स्यात् । सः । आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । ऐन्द्रम् । ऋषभम् । अग्निः । एव । अस्य । स्वेन । भागधेयेनेति भाग-धेयेन । उपसृत इत्युप-सृतः ( ६ )। पाप्मानम् । अपीति । दहति । ऐन्द्रेण । इन्द्रियम् । आत्मन् । धत्ते । मुच्यते । पाप्मनः । भवति । एव । द्यावापृथिव्यामिति द्यावा-पृथिव्याम् । धेनुम् । एति । लभेत । ज्योगपरुद्ध इति ज्योक्-अपरुद्धः । अनयोः । हि । वै । एषः । अप्रतिष्ठित इत्यप्रति-स्थितः । अथ । एषः । ज्योक् । अपरुद्ध इत्यप-रुद्धः । द्यावापृथिवी इति द्यावा-पृथिवी । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते इति । एव । एनम् । प्रतिष्ठामिति प्रति-स्थाम् । गमयतः । प्रतीति । एव । तिष्ठति । पर्यारिणी । भवति । पर्यारि । इव । हि । एतस्य । राष्ट्रम् । यः । ज्योगपरुद्ध इति ज्योक्-अपरुद्धः । समृद्ध्या इति सम्-ऋद्ध्यै ।

द्यावापृथिव्यामित्यादि[२०] । “ द्यावापृथिवीशुनासीरा ” (पा ४.२.३२) इति यत् । [v]ज्योगपरुद्धः दीर्घकालं दुर्गतः । [२१]चिरं राष्ट्रात् निर्वासित इत्येके । द्यावापृथिव्योरप्रतिष्ठितत्वात् [v]एषः [v]ज्योक् [v]अपरुद्धः भवति । [v]पर्यारिणी प्रसवकालमतीत्य कृतप्रसवा । केचिदाहुः प्रजननकालमतीत्य

य इति ॥ अथ विधत्ते– ‘यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमा लभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन् धत्ते मुच्यते पाप्मनो भवत्येव’ इति ॥

द्यावापृथिव्यामिति ॥ चिरं राज्यभ्रष्टस्य पशुं विधत्ते–‘द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति’ इति । [v]ज्योगपरुद्धः चिरं राज्यभ्रष्टः । यस्तु प्रजापालनस्याभावादस्मिँल्लोके न प्रतितिष्ठति, वैदिककर्मानुष्ठानाभावात् स्वर्गेऽपि न प्रतितिष्ठति, तदानीम् [३१][v]एषः [v]ज्योक् [v]अपरुद्धः इत्युच्यते । तस्य द्यावापृथिव्योः परितोषादुभयत्र प्रतिष्ठा सपद्यते ॥

पर्यारिणीति ॥ धेनोः कंचिद्गुणं विधत्ते– ‘पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै’ इति । या गौर्गर्भिणी सती [३२]प्राप्तं प्रसवकालं परित्यज्य चिरं गर्भं धृत्वा पश्चात्

२०. तै१.तै२.मै.लं–°व्यामिति । २१. अ.तै१.तै२.लं–‘चिरं’ नास्ति।

३१. अ.आ.उ.क.को.ना पा–सोऽत्र; द.हो१–एव । ३२. क.जो.ना.हा–प्राप्त° ।

वायुव्यं ( ७ ) वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँल्लोकान् विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप तिष्ठते ॥४॥

[ मध्यंदिने कद्रु यमस्य स्पर्धमानो वैष्णावरुणीं तमिन्द्रोऽस्य स्वेन भागधेयेनोपसतो वायव्यं द्विचत्वारिꣳशच्च ] ॥

वायव्यम् ( ७ )। वत्सम्। एति। लभेत। वायुः। वै। अनयोः। वत्सः। इमे। वै। एतस्मै। लोकाः। अपशुष्का इत्यप-शुष्काः। विट्। अपशुष्केत्यप-शुष्का। अथ। एषः। ज्योक्। अपरुद्ध इत्यप-रुद्धः। वायुम्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। सः। एव। अस्मै। इमान्। लोकान्। विशम्। प्रेति। दापयति। प्रेति। अस्मै। इमे। लोकाः। स्नुवन्ति। भुञ्जती। एनम्। विट्। उपेति। तिष्ठते ॥ ४ ॥

[ मैस २.५.८, कास १३.७, ८, ५ ]

"प्रजायते। ज्योगपरुद्धस्य 'हि 'राष्ट्रं 'पर्यारि भवति दीर्घकालातिक्रमेण प्राप्तत्वात्। तस्मात् सद्यायोग 'समृद्धये भवति ॥

अथ वायव्यो वत्सोऽपरुद्धस्य" विधीयते तस्या एव धेनोर्द्यावापृथिव्यो. हि 'वत्स 'वायुः। 'इमे च द्युप्रभृतय 'लोका 'एतस्मै पुरुषाय 'अपशुष्का. अपरक्ता अस्मिन् भवन्ति। 'विट् च प्रजा च 'अपशुष्का भवति। 'अथ 'एष 'ज्योक् 'अपरुद्धः भवति। प्र दापयतीति। "अपराग "हित्वा यथार्थं वसूनि ""ददति लोका "" विट् च तथा करोति वायुः। ततश्च 'अस्मै 'इमे 'लोका 'प्र 'स्नुवन्ति "सन्नेता "दुहन्ति वसूनि, 'विट् च 'एनम् 'उप 'तिष्ठते सगच्छते इति। समवतिरग्णे (पा १.३.२५ वा १) आत्मनेपदम् "कीर्णी भूत्वा 'भुञ्जती" सर्वदा एव 'परिपालयन्ता। "भुजोऽनवने" (पा १.३.६६) इत्यात्मनेपदाभावात्" "शतुरनुम" (पा ६.१.१७३) इति नद्या उदात्तत्वम् ॥

द्वितीये प्रथमे चतुर्थ ॥

द्युमूर्ते मा 'पर्यारि"। तथा च सूत्रकार –"पर्यारिणीति परिहारमुपैवति" (आपश्रौ १२.१६.११) इति। 'ज्योगपरुद्धः 'अस्य 'राष्ट्रं 'पर्यारि 'इव भवति, भोगार्थं चिरकालीन पश्चात् "प्राप्तत्वात्। अत सद्यायोग 'समृद्धये भवति" ॥

काम्याः पशवः ]

वायव्यमिति ॥ ज्योगपरुद्धस्यैव धेनुप्रयोगादूर्ध्वं वत्सप्रयोगं विधत्ते – ‘वायव्यं वत्समालभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँल्लोकान् विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप तिष्ठते’ इति। यथा वत्सो धेनोः समीप एव संचरति तथा वायुरपि द्यावापृथिव्योः प्रचरतीति तद्वत्सत्वम्। अत एव द्यावापृथिव्यधेनुप्रयोगसमीपे[35] [36]एव तदीयवत्सप्रयोगो युज्यते। यदा लोकाः प्रजा च एतस्मै राज्ञे अपशुष्का अपरक्ता भवन्ति तदानीमेव एषः ज्योगपरुद्धः भवति। लोकशब्देन तत्र तत्र प्रभुत्वेन स्थिता [37]ग्रामण्यादयः मुख्यपुरुषा उच्यन्ते, अवशिष्टा सर्वा प्रजा विट्शब्देन। वत्सेन तुष्टो वायुः लोकान् प्रजां च प्र दापयति अनुरक्तान् करोति। ते च लोकाः अस्मै स्नुवन्ति मणिमुक्तादिधनं प्रस्रावयन्ति बाहुल्येन प्रयच्छन्तीत्यर्थः। प्रजा च एनं भुञ्जती पालयन्ती सेवते ॥

अत्र मीमांसा ॥ अष्टमाध्यायस्य प्रथमपादे चिन्तितम् –

“ललामादिगणे दैक्षादैकादशिनतोऽथ वा।

[38]आद्यो विशेषराहित्यान्न गणत्वविशेषतः” ॥ (जैन्या ८·१·११) इति ॥

काम्यपशुकाण्डे पशुगणः श्रूयते– “वसन्ते ललामांस्त्रीन् वृषभानालभेत” (द्र. काम १·२·७) इति। तत्र रशनाद्वयादिविशेषलिङ्गाभावात् दैक्षाग्नीषोमीयाद्धर्मातिदेश इति चेत्। न। गणत्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात्। ऐकादशिनानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते। तथा हि सौत्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते– “यत् त्रिषु यूपेष्वालभेत। बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्। भ्रातृव्यमस्मै जनयेत्। एकयूप आलभते” (तैब्रा १·८·६)) इति। यद्यत्राग्नीषोमीयः प्रकृतिः स्यात्तदा[39] चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रयप्रसक्त्यभावात् तदुपन्यासेन दोषाभिधानं [40]पुनरेकयूपविधानं च व्यर्थं स्यात्। ऐकादशिनानां प्रकृतित्वे तु अतिपशु पृथग्यूपातिदेशेन प्रसक्तिसद्भावात् तदुपपद्यते। तस्मात् पशुगणेष्वैकादशिनेभ्योऽतिदेशः ॥

दशमाध्यायस्य द्वितीयपादे चिन्तितम् –

“धेनुवत्सर्षभाद्रव्यो गवि वा गुणकीर्तनात्।

अजेऽतिदिष्टे स्युर्मैवं गोजात्यैकगुणोक्तितः” ॥ (जैन्या १०·२·३५) ॥

पशुविकृतिषु श्रूयते– ‘द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रमृषभम्’ (द्र. काम १३·५) इति। तत्र धेनुशब्दो नवसूतिकामाचष्टे। वत्सशब्दो बालम्। ऋषभशब्दः पुमांसम्। तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यम्[41] अबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति। गौस्तु न प्रत्यक्षमिह श्रूयते नाप्यतिदिश्यते प्रकृतावनुपदिष्टत्वात्। अतो न गां विशिषन्तीति [42]पूर्वपक्षः। [43]न गत्वेन[43] यथोक्तगुणसामान्यवाचिनः, किं तर्हि, [44]तान् गोगतानेव गुणानाहुः। अतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि[45] गां मुख्यवृत्त्या विशिंषन्तश्छागं बाधन्त इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

३५. ह–°पृथिव्यप्रयोग°। ३६. अ.आ.उ.जो. ड१.ना.हा – ‘एव’ नास्ति। ३७. ह–मन्वादयः। ३८. अ.उ.पा–अथो। ३९. अ.उ.पा– ‘तदा’ नास्ति। ४०. अ.उ.पा–°यूपप्रतिविधानम्। ४१. ह–°मजम्। ४२. ड१–पूर्वः प१.। ४३–४३. अ.उ.जो.ना.पा.हा–अमदेलो.। ४४. ह.ड१– ‘तान्’ नास्ति। ४५. ह–°ऽनुपदिष्टमपि।

इन्द्रो॑ वलस्य॑ बिलमपौर्णो॒त् स य उ॑त्त॒मः प॒शुरासी॒त् तं पृ॒ष्ठं प्रति॑ संगृ॒ह्योद॑क्खिदत् त॒ꣳ स॒हस्रं॑ प॒शवोऽनूदा॑यन्त्स उ॒न्नतो॑ऽभव॒द्यः प॒शुका॑मः स्यात् स ए॒तमै॒न्द्रमु॑न्न॒तमा

इन्द्रः॑ । व॒लस्य॑ । बिल॑म् । अपेति॑ । औ॒र्णो॒त् । सः । यः । उ॒त्त॒म इत्यु॑त्-त॒मः । प॒शुः । आसी॑त् । तम् । पृ॒ष्ठम् । प्रतीति॑ । सं॒गृ॒ह्येति॑ सं-गृ॒ह्य॑ । उदिति॑ । अ॒क्खि॒द॒त् । तम् । स॒हस्र॑म् । प॒शवः॑ । अनु॑ । उदिति॑ । आ॒य॒न् । सः । उ॒न्न॒त इत्यु॑त्-न॒तः । अ॒भ॒व॒त् । यः । प॒शुका॑म॒ इति॑ प॒शु-का॒मः । स्यात् । सः । ए॒तम् । ऐ॒न्द्रम् । उ॒न्न॒तमित्यु॑त्-न॒तम् । एति॑ ।

इन्द्रो वलस्येत्यादि॥ ᵛअप ᵛऔर्णोत् 'अपावृतद्वारमकरोत्। स इति²। "सुपां सुलुक्°" (पा ७ १ ३९) इति सप्तम्याः स्वादेशः। तत्र बिले वसतां पशूनां मध्ये ᵛय ᵛउत्तमः ᵛपशुः ᵛआसीत्, ᵛतं ᵛपृष्ठं ᵛप्रति ᵛसंगृह्य पृष्ठे गृहीत्वा ᵛउत् ᵛअक्खिदत् उत्क्षिप्तवान्। छान्दसो वर्णोपजनः। ³उत्तमशब्द उञ्छादिषु (पा ६ १ १६०) ᵛपठ्यते, तेनान्तोदात्तः। लक्षणे प्रते कर्मप्रवचनीयत्वम् (पा १ ४ ८३, ८४)। ᵛतम् ᵛअनु ᵛसहस्रं ᵛपशवः ᵛउत् ᵛआयन् उदगच्छन्। ᵛस उत्तमः पशुः ᵛउन्नतः ᵛअभवत्। उन्नतः पृष्ठभागेऽस्यास्तीति⁵ लक्षणया तद्वानुच्यते। मत्वर्थीयो लुप्यते। यत्र ⁶गृहीतस्य उपयत ककुदाख्य⁶ उन्नतोऽभवत्॥

ब्रह्मवर्चसकामो यश्चर्मदोषाद्बिभेति यः ।
भ्रातृव्यवान् पापभीरुश्चैश्वर्यश्च यो भवेत् ॥
अनुवाके चतुर्थेऽस्मिन्नेतेषां पशवः श्रुताः¹ ॥

अथ पञ्चमे पशुकामादीनां पशवो वक्तव्याः ।

इन्द्र इति॥ ¹तत्रैकं विधातुं प्रस्तौति— 'इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत् तं पृष्ठं प्रति संगृह्योदक्खिदत् तꣳ सहस्रं पशवोऽनूदायन्त्स उन्नतोऽभवत्' इति। वलनामकः कश्चिदसुरस्तस्करो भूत्वा यजमानो बहून् पशूनपहृत्य कस्मिंश्चित् भूबिले स्थापयामास। तं च ³वृत्तान्तमवगत्य ᵛइन्द्रः ᵛबिलम् ᵛअपौर्णोत्, द्वारपिधानाय प्रक्षिप्तं पाषाणमपनीतवान्। तत्र ᵛयः ᵛउत्तमः ᵛपशुः ⁴ᵛतं ᵛपृष्ठं ᵛप्रति पृष्ठदेशे ᵛगृहीत्वा ᵛउदक्खिदत् ᵛउत्क्षिप्तवान्। तस्य पशोर्यूथपतित्वात् ᵛतम् ᵛअनु ᵛसहस्रं ᵛपशवः उदगच्छन्। ᵛस च मुख्यः पशुर्यूथपतित्वेन पूर्वमेवोन्नतोऽपि ᵛपश्चादिन्द्रोत्क्षेपणेनात्यन्तम् ᵛउन्नतः ᵛअभवत्॥

१. पर लं—अपावृत°। २. मै८—इति स इन्द्र। ३. ल—उत्तरशब्द। ४. तै१.तर लं—शिरस्को। ५. मै८—°स्तीत्युन्नत, तै१ तर२—°स्तीत्युन्नतं। ६–६ अ तै१ तर मै ल—गृहीतपेसर (?) ककुदाख्य, पर—हि तोसर (?) ककुदाख्य।

लभेतेन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवत्युन्नतो ( १ ) भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्द्धे यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमा लभेतैतस्मिन् वै तत् सहस्रमध्यतिष्ठत्

लभेत । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति । पशुमानिति पशु-मान् । एव । भवति । उन्नत इत्युत्-नत (१) । भवति । साहस्री । वै । एषा । लक्ष्मी । यत् । उन्नत इत्युत-नत । लक्ष्मिया । एव । पशून् । अवेति । रुन्द्धे । यदा । सहस्रम् । पशून् । प्राप्नुयादिति प्र आप्नुयात् । अथ । वैष्णवम् । वामनम् । एति । लभेत । एतस्मिन् । वै । तत् । सहस्रम् । अधीति । अतिष्ठत् ।

साहस्रीति ॥ सहस्रस्य निमित्तभूता । "[7]शतमानविंशतिक°" (पा ५ १ २७) इत्यण्[7] । लक्ष्मी लक्षणम् । "सुपां सुलुक्°" (पा ७ १ ३९) इति सोर्लुक् । यदेत्यादि । गतम् । [8]समीपित सम्यगीपित[8] । अहोरात्राण्येवेति । अहोरात्राणां [9]पशूनां च[9] सहस्रत्वात् प्रजाताः पशवः प्रतिष्ठिता भवन्ति । "हेमन्तशिशिरावहोरात्रे च°" (पा २ ४ २८) इति पूर्ववल्लिङ्गता । पशुबन्धान्तरमिदम् । पशूनां सहस्रं प्राप्याहोरात्राणां सहस्रं [10]स्थित्वा अथ वैष्णवं वामनम् आ लभेत ॥

य इति ॥ विधत्ते–'य पशुकामः स्यात् स एतमैन्द्रमुन्नतमा लभेतेन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवति' इति ॥

उन्नत इति ॥ पशोरौन्नत्यं प्रशंसति – 'उन्नतो भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्द्धे' इति । उन्नत इति यत्, एषा साहस्री लक्ष्मी सहस्रस्य निमित्तभूता तत एव लक्ष्मी सपद्रूपा । तथा सत्युन्नतालम्भेन पशुसमृद्धिरूपया लक्ष्म्या युक्तस्तान् पशून् अव रुन्द्धे ॥

यदेति ॥ पूर्वत्र यथा धेनुमालब्धवतः पश्चाद्वृषभालम्भो विहितः, [8]एवमत्राप्युन्नतमालब्धवतो वामनालम्भं विधत्ते– 'यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमा लभेतैतस्मिन् वै तत् सहस्रमध्यतिष्ठत् तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति' इति । पशुकाम उन्नतमालभ्य तत्फलभूतान् पशून् [9]प्राप्नुवन् [10]सहस्रप्राप्तेरूर्ध्वं वामनम् आ लभेत । यस्मात् एतस्मिन् वामने तत् उन्नतं पशुसहस्रम् [11]अध्यतिष्ठत् आरोहति, तस्मात् सहस्रपशुप्रियत्वात् [12]एष वामनः [13]अपि विष्णोः सम्यगपेक्षितः । [14]एतस्याऽऽलम्भेन पूर्वमुत्पन्नेभ्यः सहस्रपशुभ्यः [15]पश्वर्थं प्रतिष्ठां तृणोदकसपूर्णं निवासस्थानं कृतवान् भवति ॥

७–७ ल–शतमानविंशतिप्रकृत्यसम् (?)। ८–८. म४–समीषितः सम्यगीप्सितः, अ ल– समीक्षित । ९–९ अ तर ल– च पशूनां । १०. ल–'स्थित्वा' नास्ति।

८. ङ१–एवमत्रोन्नत° । ९. ङ जो ना–प्राप्नुयात् । १०. ङ–प्राप्त्यूर्ध्वम् । ११ आ ङ ङ१– लीलार्थम् । १२ अ आ उ क जो ना पा हा–एव । १३ आ क ङ ङ१ हो१–'अपि' नास्ति । १४. ङ१–अत एतस्या° । १५ अ उ पा–पशु° ।

तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रं संपाद्याऽऽलभेत पशवो ( २ ) वा अहोरात्राणि पशूनेव प्रजातान् प्रतिष्ठां गमयत्योषधीभ्यो वेहतमा लभेत प्रजाकाम ओषधयो वा एतं प्रजायै परि बाधन्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति

तस्मात्। एष । वामन । समीषित इति सम्-ईषित । पशुभ्य इति पशु-भ्य । एव । प्रजातेभ्य इति प्र-जातेभ्य । प्रतिष्ठामिति प्रति स्थाम् । दधाति । क । अर्हति । सहस्रम् । पशून् । प्राप्तुमिति प्र आप्तुम्। इति। आह । अहोरात्राणीत्यह -रात्राणि। एव। सहस्रम्। संपाद्येति सम्-पाद्य। एति। लभेत। पशव (२)। वै। अहोरात्राणीत्यह रात्राणि। पशून् ।एव। प्रजातानिति प्र जातान्। प्रतिष्ठामिति प्रति स्थाम् । गमयति । ओषधीभ्य इत्योषधि भ्य । वेहतम् । एति । लभेत। प्रजाकाम इति प्रजा काम । ओषधय । वै। एतम् । प्रजाया इति प्र-जायै। परीति। बाधन्ते। य । अलम्। प्रजाया इति प्र-जायै। सन । प्रजामिति प्र जाम्। न। विन्दते। ओषधय । खलु। व। एतस्यै। सूतुम्। अपीति। घ्नन्ति।

ओषधीभ्य इत्यादि॥ "ओषधेश्च" (पा ६ ३ १३२) इति दीर्घत्वम्। वेहद्गर्भनाशिनी। ओषधय खलु इति। एतस्या वेहत सूतु सोतव्य गर्भम्। औणादिकस्तुन् प्रत्यय ।

क इति॥ एतस्यैव वामनस्य सहस्रप्राप्तिकालादन्य काल विधत्ते – 'कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रं संपाद्याऽऽलभेत पशवो वा अहोरात्राणि पशूनेव प्रजातान् प्रतिष्ठां गमयति' इति। सहस्रप्राप्ति प्रायेण दुर्लभा, विघ्नानां चोरव्याघ्रादिकृतानां बहुत्वात्। अत पशुप्राप्तेरूर्ध्वं सहस्रदिनान्यतिवाह्य आलभेत। पशवो हि क्षीरादिभोगार्थं संपाद्यन्ते। तत्रैकैकस्मिन् दिने तद्भोग प्रसादेकैक पशुरिति गणनाया सहस्रसंख्यापरान्यहोरात्राण्येव सहस्र पशव संपद्यन्ते। तत सहस्रदिनेभ्य ऊर्ध्वं वामनालम्भेन यावन्तस्तावता वा विद्यमानाना पशूना प्रतिष्ठा संपादिता भवति॥

ओषधीभ्य इति॥ प्रजाकामस्य पशु विधत्ते– 'ओषधीभ्यो वेहतमा लभेत प्रजाकाम ओषधयो वा एत प्रजायै परि बाधन्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधय खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहत्सा योषधीरेव स्वेन भागधेयेनोप धावति ता एवास्मै स्वाद्योने प्रजा प्र जनयन्ति विन्दते प्रजामापो वा ओषधयोऽसत् पुरुष आप एवास्मा असत सदुदतीति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽपस्त्वावासत सदुददतीति' इति। वेहत् गर्भविनाशिनीम्। य प्रजोत्पादने समर्थोऽपि प्रजा न लभते एत प्रजार्थमोषधिदेवता पारम्बाधन्ते। अतस्तास्य दयनीय आलम्भो युक्त । या गौर्गर्भनाशिनी भवति एतस्या सूतु गर्भम् ओषधय अपि घ्नन्ति। अतस्तासां प्रियाया वेहत आलम्भा तुष्टा ओषधयो यजमानार्थं स्वात

१६. नाक ट द १ न–'एव' नास्ति। १७ ट संतिष्ठत्य। १८ अ उ पा–संपद्यन्ते। १९–१९ ट द १ नैतानि–सन्ति क ग–'वा' नास्ति। २०. ट१–'पशूना' नास्ति। २१ ट द १ नेहोर– ऋत। २२ अ ट द १ नाप गोनाम्नीम। २३ ग ट द१–'देवताभ्य' नास्ति। २४–२४ नेन्तिन्ति।

सुबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृतः सपर्यन् ।
अर्को वा यत् तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम् ॥

सुबाध इति स-बाधः । ते । मदम् । च । शुष्मयम् । च ।
ब्रह्म । नरः । ब्रह्मकृत इति ब्रह्म-कृतः । सपर्यन् ।
अर्कः । वा । यत् । तुरते । सोमचक्षा इति सोम चक्षाः ।
तत्र । इत् । इन्द्रः । दधते । पृत्स्विति पृत् सु । तुर्याम् ॥

न भवति तथाऽवस्थापयिता त्वम् [v]असि । कस्य ? [v]शवस बलवत । मत्वर्थीयो लुप्यते । [v]तुरस्य त्वरमाणस्य अधो नि सरत । तुर त्वरासम्भ्रमयो' इत्यस्मात् इगुपदलक्षण क, (पा ३ १·१३५ )। तस्मात् सोममतिसरन्तम् [v]अन्त [v]यच्छ [६०]अन्तरेव उदर एव[६०] नियमय यथाऽतो नातिसरेत्। [v]गृणते त्वामेव स्तुवानाय यजमानाय। "शतुरनुम°" (पा ६ १ १७३) इति चतुर्थ्या आद्युदात्तत्वम्। तदर्थं किं कर्तव्यमिति चेत् श्रूयता—[v]धर्त्रम् अपि तस्य [६१]सोमस्य धारणसमर्थं वायु [v]दृंह [६२]दृढ कुरु[६२] ॥

तत्रैव याज्या—'सबाध' इति त्रिष्टुप् ॥ बाधन [६३]वाक्कर्मनिमित्त बुद्धेर्व्यसन, तत्सहिता [v]सबाध ऋत्विज उच्यन्ते। छान्दस समासान्तोदात्तत्वम्। यद्वा-सह बाध्यते इति सबाध। कृदुत्तरपदप्रकृतिस्वरत्वम्। हे सोम, [v]ते तव [v]मद हर्षं देवाना त्वत्कृत हर्षं [६४][v]शुष्मय [v]च [v]ब्रह्म, शुष्म बल तदिच्छतीति सर्वस्यात्मनो वेति। क्यचि, पूर्ववदीत्वाभावे पचाद्यच् (पा ३·१·१३४)। धा[या धा]तोर्वा "आतोऽनुपसर्गे क." (पा ३ २.३ )। ईदृश ब्रह्म अन्न च देवाना त्वत्कृत त्वत्परिमाणरूप [v]नर मनुष्या ऋत्विज. [v]ब्रह्मकृत ब्रह्मणे हविष्कर्तारः ब्रह्मण· परिवृढस्य वा तत्र कर्तार अभिषव कुर्वन्त. ते [v]सपर्यन् त्वा पूजयन्ति। छान्दसे लङि अडभाव.। लेटि

सबाध इति ॥ तत्रैव विकल्पिता याज्यामाह—'सबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृत सपर्यन्। अर्को वा यत् तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम्' इति। हे सोम, [v]नर मनुष्या ऋत्विज· [v]ते [१०१]तुभ्य [v]ब्रह्म इयामाकचरुरूप परिवृढं हवि [v]सपर्यन् पूजयन्ति समर्पयन्ति। कीदृशस्य [१०२]ते? [v]सबाध। धकारान्तो बाध्-शब्द [१०३]अभिषवकृतमुपद्रव ब्रूते, तेनोपद्रवेण सह वर्तत इति 'सबाध्' इति प्रातिपदिकं, तस्य षष्ठी सबाध इति। अभिषवपीडितस्य तवेत्यर्थं। कीदृश ब्रह्म? [v]मदं [v]च हर्षकरमपि

६०-६० मै- अन्तरेवम्। ६१. ल-क्रम°। ६२. पर- दृढीकुरु। ६३. मै४-वाधाकर्म°। ६४ तै१ ल-शुष्मिणम्।

१०१. अ आ उ क ट पा ३ हो१- 'तुभ्यं' नास्ति। १०२. क ट ने- 'ते' नास्ति। १०३. हो१- अभिषवकृतम्°।

या "इतश्च लोप °" ( पा ३ ४.९७ ) । सम्यक् सपादनमेव पूजा, सभजात्। अर्क वा अन्नमिव दुष्टपरिणाम यत् तुरते त्वरते अपाग तुमु सहते किमिद तत्र युज्यते, योऽसि सोमचक्षा सोमवाचक । " चष्ट इति " चक्ष । कर्तर्यसुन्, "बहुल सज्ञाच्छन्दसो °" (द्र काशिका २ ४.५४) इति ख्याञादेशाभाव । वाचक पदमुच्यते। सोमशब्दश्चक्षो यस्य स तथोक्त । यद्वा– सोमशब्देन ख्यातव्य सोमचक्षा । "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्व च" ( द्र उ ६७६ ) इत्यसुन्। यद्वा–प्रकाशन चक्ष सोम इति प्रकाशो यस्य तादृश त्वाम्। यद्वा–अर्क सविता, अर्क स्वयमेव त्व सोमचक्षा इदानीं सोमशब्दाभिधेय । वाशब्दोऽवधारणे। यद्वा अर्क एव सोम त्व ईदृशो महानुभावो भवान्। यद्वा त्वन्निमित्त हर्षं देवाना कर्तुं सक्लेशात् ऋत्विज परिवृढाना हविषा कर्तार त्वा सपर्यन्ति, एवमर्क अर्चनीय एव सन् सोमस्यापि प्रकाशयिता भवान् त्वरते। तुर त्वरणसभ्रमयो । तत्र इन्द्र एव तुरते इन्द्र एव तथा करोति। हेतुमाह– यत् यस्मात् स एव दधते धारयति उत्पादयति । लेट्याडागम ( पा ३ ४ ९४)। किम्? पृत्सु पृतनासु सग्रामेषु तुर्यां त्वरित यानम्। क्विब्विचो । यद्वा–[ तुरतेस्तूर्यतेर्वा? ] क्विबन्तात् ण्यचि "अ प्रत्ययात्" ( पा ३ ३ १०२ ) इत्यकारप्रत्यय । यद्वा– पृतनासु कश्चित् पुरुष दुर्बल तूर्णं यातार करोति तस्मात् स एवात्र पीताना सोमाना परस्परसग्रामस्थानीये भवन्त तुर्यां त्वर्यां त्वरिततरमधोयान्त करोति। यद्वा तूर्णं धारयितार वायु करोति, तस्मात् स एव भवन्तम् इन्द्र नियमयत्विति । "°मासपृतनासानूनाम् ' (द्र पा ६ १ ६३ वा १) इति पृतनाशब्दस्य पृद्भाव ॥

शुष्मय च बलप्रापकमपि। कीदृशा नर ? ब्रह्मकृत इष्टिरूप परिवृढ कर्म कुर्वन्तीति ब्रह्मकृत । सोमचक्षा अर्क वा सोमशब्देनाभिधीयमानस्त्व सूर्य एव। अतस्तेजस्वित्वान्नास्ति तव कश्चिद् उपद्रव इत्यभिप्राय । यदि अत्रास्मदुदरे पीतो रस तुरते वमनाय व्यग्रता करोति, तत्र इत् तत्रैवोदरेऽयम् इन्द्र पृत्सु सग्रामेष्विव तुर्यां दधते तूर्णं यातार करोति, वमनाय सभ्रम कुर्वत सोमस्य निवारक वायु शीघ्र तत्र प्रेरयतीत्यर्थ ॥

६५. त१ ल– युन्नमिव। ६६ ल – दुष्टपरिणाम , प२– दुष्परिणाम, मै४–दुष्परिणामम्। ६७ ल–योगमु°। ६८ त१ मै ल– योऽस्य। ६९–६९ मै४–चक्षा इति चष्टे । ७० मै४– त्व सोमचक्षाः सोमशब्दवाच्य सोम एव वा त्व। ७१ मै४– वा। ७२. त१ मै–यथा। ७३ त१ ल–यत्। ७४ मै४–सोमयागस्यापि। ७५–७५ मै४–यद्यस्मादेव दधते धारयन्ति उत्पादयन्ति। ७६–७६ प२– कश्विचो (?), मै–क्षब्विचो। ७७ मै [ टिप्पणी ]–दातारम्। ७८ मै४–परस्परसघर्षे सग्रामस्थानीये। ७९ त१ प२,ल– योद्धयितारम्, मै४– धापयितारम्। ८०–८० मै४–अन्तर्निगमयत्विति।

१०४–१०४ क ने हो१–अर्को वा सोमचक्ष अर्क ,ङ–अथवा सोमचक्षा अर्क। १०५–१०५ अ उ जो ना पा हा–यथाऽस्मदुदरे, ने–यद्यत्राप्यस्मदुदरे। १०६ ङ शृं–त्वरते। १०७–१०७ इ हो१–'तत्रेत्' नास्ति।

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ( ४ )।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

वषट्। ते। विष्णो। आसः। एति। कृणोमि।
तत्। मे। जुषस्व। शिपिविष्टेति शिपि-विष्ट। हव्यम् ( ४ )।
वर्धन्तु। त्वा। सुष्टुतय इति सु-स्तुतयः। गिरः। मे।
यूयम्। पात। स्वस्तिभिरिति स्वस्ति-भिः। सदा। नः ॥

[⁸¹ अभ्युदयेष्ट्या (तैस २.५.५) तृतीयस्य हविषः पुरोनुवाक्या 'वषट्' इति त्रिष्टुप्। 'प्र तत् ते' इत्युत्तरा याज्या, सा च तदुत्तरया 'किमित् ते' इत्यनया ऋचा विकल्प्यते⁸² ]। हे विष्णो, व्यापनशील ते तव। आङ् मर्यादायाम्। वषट् कृणोमि करोमि ददामि। किम्? आसः अस्यते क्षिप्यत इत्यासः, अग्नौ क्षिप्यमाण हविरुच्यते। कर्मणि घञ्, वचनव्यत्यय, "कर्षात्वत०" (पा ६.१.१५९) इत्यन्तोदात्तत्वम्। यद्वा– असुनि, ( द. उ ६३८ ) ⁸³सवर्णव्यत्यय। हे शिपिविष्ट, तत् मे हव्य हवि जुषस्व सेवस्व। शिपयो रश्मय, तैराविष्टः प्रविष्टो वा। "पृषोदरादित्वात्" (पा ६.३.१०९) अभीष्ट रूप सिद्धम्। किं च–मम सुष्टुतयः शोभनस्तुति कारणभूता गिर त्वा वर्धन्तु वर्धयन्तु स्तुवन्त्विति यावत्। स्तुत्या हि स्तोतव्यो वर्धते। "बहुलं सञ्ज्ञाछन्दसोः" (द.उ १९०) इति णिलुक्, "छन्दस्युभयथा" (पा ३.४.११७) इति वा शप आर्धधातुकत्वम्। यूय च मया स्तुता न अस्मान् स्वस्तिभिः अविनाशैः पात रक्षत सदा सर्वदा। पूजार्थमेकस्मिन् बहुवचनम् ॥

वषडिति॥ अथ पञ्चमप्रपाठके विहितायामभ्युदयेष्टौ–'विष्णवे शिपिविष्टाय शृते चरुम्' (तैस २.५.५) इत्युक्तं यत् तृतीयं हविस्तत्प्रदानान्तरभावि मन्त्रद्वयमुत्कर्षणीयम्। तत्रैव प्रथमं पुरोनुवाक्यां दर्शयति–'वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्। वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः' इति। अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया ¹⁰⁸विधिना वा प्रेर्यत इति आस यजमान। तादृशोऽहं ते तव आ समन्तात् वषट् कृणोमि हविर्दानं करोमि। शिपिषु पशुषु विष्ट प्रविष्टो यज्ञ. शिपिविष्टः पशुरूपो यज्ञ इत्यर्थः। "यज्ञो वै विष्णुः। पशवः शिपि" (तैस २.५.५) इति श्रुते। हे शिपिविष्ट यज्ञात्मक विष्णो, मे मदीयं तत् हव्यं जुषस्व। सुष्टुतय शोभनस्तुतिरूपा मे गिर. त्वा वर्धन्तु वृद्धिं प्रापयन्तु। एकस्मिन्नपि विष्णौ यूयमिति पूजार्थं बहुवचनम्। यूयं स्वस्तिभि श्रेयोभि. न अस्मान् सदा पात रक्षत ॥

८१–८१. (अस्माकं कोशेषु नास्ति पाठः।), तै–त्यादिरीत्या पुरोनुवाक्याविकल्पेन उत्तरत्र [ प्रय... उपान्त्यस्य ] वर्तिष्यते, फे.मै.– अभ्युदयेष्ट्यां पुरोनुवाक्या विकल्पेन उत्तरत्र वर्तिष्यति। तै१,तै– अन्ते पुरोनुवाक्याविकल्पेन उत्तरत्र वर्तिष्यते। ८२. मै–नास्ति। ८३. तै१–'नः' नास्ति।

१०८. मै१–विधिना।

प्र तत् ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजसः पराके ॥

प्रेति । तत् । ते । अद्य । शिपिविष्टेति शिपि विष्ट । नाम । अर्य । शंसामि । वयुनानि । विद्वान् ।
तम् । त्वा । गृणामि । तवसम् । अतवीयान् । क्षयन्तम् । अस्य । रजस । पराके ॥

'प्र तत् ते' इति त्रिष्टुप् ॥ हे शिपिविष्ट, ते तव 'तत्' नाम शिपिविष्टेत्येव रूपम् अद्य अस्मिन् कर्मणि प्र शसामि । प्रशस्तगुणाभिधाय्येवेद नाम [८४]न तु निंदित मन्तव्यम् । अज्ञत्वमिति न वक्तव्यमित्याह– 'अर्य अरणीयोऽहम् । "अर्यः स्वामिवैश्ययो" (पा ३ १ १०३) इति[८४] । कोऽभिप्राय ? एषोऽभिप्राय । केचिदाहु –शेप इव निर्वेष्टित सयतरश्मि शिपिविष्ट इति । अन्ये तु ब्रुवते–निर्विष्टशेप शिपिविष्ट इति । अपरे त्वाचक्षते–निवृत्तरश्मि शिपिविष्ट इति । नैतेषु त्रिष्वपि पक्षेषु अनेन पदेन कश्चिद्गुणोऽभिधीयते । अपि तु निन्दैव । ततश्चानेन पदेन निर्वापादि क्रियमाणमुपालम्भमस्यावहेत् । अत इम दोषमपनेतुमिदमुक्तमिति । तत्कथमिति चेत् उच्यते–नात्र शेपशब्दोऽस्ति, न च केवलोऽपि विशिर्निरुपसृष्टस्यार्थमभिधातुमीष्टे । तस्मात् शिपयो रश्मय, रश्यते शिपय तक्ष्यत्वात्, तेषु प्रविष्ट शिपिविष्ट इति प्रशसापरमेतत् । अतोऽहमप्येतत् प्रशसामीति । अतवीयान् तन्नामान तवस [८५]तपस्विन महान्तम् । 'तु' इति वृद्धिकर्मा । असुन्नतात् उत्पन्नो मत्वर्थीयो लुप्यते । अत एव प्रत्ययान्तरसक्रान्त्या नव्विषयत्वाभावादाद्युदात्तत्वाभाव । ईदृशमह गृणामि स्तौमि । अतवीयान्, अतिशयेन तपस्वी तवीयान्, ततोऽन्योऽतवीयान् । यद्यप्यह विद्यामहिम्ना तवीयान्, तथाऽपि त्वदपेक्षया अतवीयान् । तादृशोऽपि त्वत्प्रसादेन त्वा स्तौमीति । "विन्मतोर्लुक्" (पा ५ ३ ६५) तपस्विशब्दादीयसुन्प्रत्यय । अत एवातिशय्य-

प्रेति ॥ तत्रैव याज्यामाह– 'प्र तत् ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । त त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजस पराके' इति । हे शिपिविष्ट, अद्य अस्मिन् यज्ञे ते त्वदीय [१०९] तत् नाम अह प्र शसामि [१०९] । [११०]कीदृगहम् ? वयुनानि विद्वान्, [१११]ज्ञापकानि नामनिर्वचनानि जानन् । "यज्ञो वै विष्णु । पशव शिपि । यज्ञ एव पशुषु प्रति तिष्ठति" (तैस २ ५ ५) इति श्रुत्या आग्यात[११२] शिपिविष्टनाम्नो निर्वचन जानामीत्यर्थ । अत एव अर्य अहम् शब्दार्थाभिज्ञाना स्वामी, हे विष्णो, [११२] त त्वा[११३] गृणामि तथाविध त्वा स्तौमि । किविधम् ? अस्य रजस पराके क्षयन्त [११४]दृश्यमानस्य मलिनलोकस्यात्यन्त दूरे निवसन्त तवस तपस्विनम् । कीदृशोऽहम् ? अतवीयान् अतपस्वी । यद्यप्यह तपोरहितस्तथाऽपि तपस्विनस्तव प्रसादात् स्तोतु शक्त इत्यर्थ ॥

८४–८४ त१ ल– नामेति मम मतिरिति । ८५. मै४– तवस्विनम् ।

१०९.–१०९. ने–नाम प्रशसावहम् । ११० ह ने श्रृ हो१–कीदृशोऽहम् । १११. ने हो१–ज्ञानानि । ११२. शू– व्याख्यातम् । ११३–११३. अ इ उ जो ना पा हा– त्वाम् । ११४ हा– दृश्यमानस्य ।

किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ (५) ॥

किम्। इत्। ते। विष्णो इति। परिचक्ष्यमिति परि-चक्ष्यम्। भूत्।
प्रेति। यत्। ववक्षे। शिपिविष्ट इति शिपि विष्टः। अस्मि।
मा। वर्पः। अस्मत्। अपेति। गूहः। एतत्।
यत्। अन्यरूप इत्यन्य-रूपः। समिथ इति सम्-इथे। बभूथ (५)।

मानोऽपि तपस्वीति गम्यते। द्वयोर्हि तपस्विनोरन्यतरस्तपीयान् भवति। इदानीमुक्त शिपिविष्ट-पदार्थं समर्थयितुमाह– vअस्य vरजसः अन्तरिक्षस्य vपराके परागते दूरे प्रदेशे vक्षयन्त निवसन्त तथाऽपि सर्वलोकप्रकाशक त्वा स्तौमि, इद तव शिपिविष्टत्वम्। अतः vतत् प्रशंसामीति। क्षि निवासगत्योः, व्यत्ययेन शप् ॥

'किमित् ते' इति त्रिष्टुवेव ॥ हे vविष्णो, vते तव vकिं vपरिचक्ष्य गूहनीय वर्जनीयमेव vभूत् भवति? नैवैतत् वर्जनीयम्। चक्षे छान्दसो यत्, "बहुलः सज्ञाच्छन्दसोः" (द्र. का.पा २.४.५४) इति ख्याञादेशाभाव। भवतेर्लेटि शपो लुक्। "भूसुवोरितिङि" (पा ७.३.८८) इति गुणाभावः। लङि वा छान्दसः शपो लुक् (पा २.४.७३)। लुङि वा "गातिस्था°" (पा २.४.७७) इति सिचो लुक्। "बहुल छन्दस्यमाङ्योगेऽपि" (पा ६.४.७५) इत्यडभावः। इदानीं तदेव परिसख्येयतया सभाव्यमान दर्शयति–हे शिपिविष्ट, vशिपिविष्टः vअस्मि इति vयत् vववक्षे किमिद तदेव

किमिति ॥ तत्रैव विकल्पितां याज्यामाह–'किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ' इति। हे 'विष्णो, त्वं 'यत् यस्मात् [११५]धारणात् 'शिपिविष्टः 'अस्मि इति प्रकर्षेण 'ववक्षे पुनः पुनः [११६]वक्षि तस्मात् 'ते तव मनसि 'किम् 'इत् 'परिचक्ष्यं 'भूत् किमिदं गर्हणीयमभूत्, नैतद्गर्हणीयं, वृथैव तव लज्जेत्यभिप्रायः। यद्यप्येतन्नाम [११७]"ऽन्येऽप्यन्तरोगिण्युद्घाटितगुह्यत्वचि मूढैः"[११७] प्रयुज्यते शिपिविष्टोऽयमिति, तथाप्यव-यवार्थस्य माहात्म्येन व्याख्यातत्वादास्त्यत्र तव लज्जाकारणम्। तस्मात् 'एतत् 'वर्पः वरिष्ठं नाम 'अस्मत् 'मा 'अप 'गूहः, अस्मास्वपि गूढं मा कुरु। 'यत् यस्मात् त्वं गूहनायैव 'समिथे युद्धे [११८]वयवशीर्षशाभ्यां गूढः 'अन्यरूपः 'बभूथ बभूविथ, [११९]तदन्यत्र यथा तथा वा भवतु, [१२०]तथाऽप्यस्मद्युद्धो प्रतामिदं मा गोपायेत्यर्थः।

८६. भे–'तत्' नास्ति।

११५. र– कारणादि। ११६. ब.ने.–पक्षिरयात्। ११७–११७. [ मुद्रीकृतोऽयं पाठः ]; आ.बो.श्री.हा–°न्तरोगिण्युद्घाटितगुह्यत्वचि (नि!) मूढैः; पा– °न्तरद्विगण्युत्पाटितगुह्यत्वचिमूढे, क.हो१–°न्तरोगिण्युद्घाटितगुह्यत्वचि (!) मूढैः। ११८. क.हा–°शीर्षशाभ्याम्। ११९. आ.क– तदन्यथा। १२०. र– तथाऽप्यस्मद्युद्धो, ने.हो१– तथाऽस्मद्युद्धो।

परिचक्ष्यं भवति। नैतदेवम्। तस्मात् शिपिविष्टोऽस्मीति ब्रुवन्नेव विश्वव्यापी वर्तस्वेति। वर्ततेर्व्यत्ययेन आत्मनेपदम्, "बहुलं छन्दसि" (पा २.४.७६) इति शपः श्लुः। इदानीं प्रशस्तगुणाभिधाय्येतन्नाम न परिसंख्येयम्, अपि तु लोके ख्यापयितव्यमिति दर्शयितुमाह– [v]वर्पः वरितव्यमिदमुच्छ्रितं नाम [v]मा [v]अप [v]गूहः नेदं अस्माकं गूहनीयम्, अपि तु लोके श्लाघमानेन त्वया आघोषणीयमेव। वर्प गतौ, असुन्प्रत्ययः। गूहतेश्छान्दसोऽड्प्रत्ययः। अथ यदि ब्रूयाः नापगूहामीति, मृषैतत्, यस्मात् त्व [v]समिथे संग्रामे उदयकाले रक्षोभिः सह तव यः संग्रामः तत्र [v]अन्यरूपः [v]बभूथ भवसि, न मध्याह्न इव महातेजा भवसि। तन्नूनं लज्जया शत्रुजनसमवाये उदयकाले एतदात्मीयं रूपं छादयसीति संलक्ष्यते। तस्मान्नैवमिदं गूहनीयमिति। "बभूथाततन्थ°" (पा ७.२.६४) इतीडभावो निपात्यते। अन्य आहुः–उक्तं शिपिविष्टोऽस्मीति नेदं परिसंख्येयमिति। अथापि यत् त्वं लज्जयैव समिथे संग्रामे उदयकाले अन्यरूपः भवसि, इदमेव वर्पः प्रशस्ततरं रूपं, [87]तस्मादेतस्माऽपगूहः सर्वास्ववस्थास्वपि इदमेव रूपं तत्र भवतु इदमेव शोभनमिति। अत्र निरुक्तादिषु (निरुक्त ५.८) बहुधा व्याख्यानानि कृतानि, अत्र युक्तरूपमिदस्माभिरुक्तम्॥

पशुकामस्य त्रिहविष्कामिष्टिं विधत्ते– "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति वृद्धानिन्द्रः प्र यच्छति" (तैसं २.३.२) इति॥ पञ्चद्रव्यसमष्टिरूपं तृतीयं हविर्विधत्ते– "दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे" (तैसं २.३.२) इति। तत्र दधिघृतयोः पशुसंबन्धात् तत्साहचर्येण सर्वेषां पशुरूपत्वम्॥ [121]अस्मिन् हविषि द्रव्यसंख्यां विविधद्रव्यत्वं च प्रशंसति– "पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः समृद्ध्यै" (तैसं २.३.२) इति। एकैकस्य द्रव्यस्य ग्रहणेन पञ्चगृहीतत्वं गोमहिषाश्वादिरूपेण पशूनां बहुरूपत्वम्॥ द्रव्यं विधाय देवतां विधत्ते– "प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्र जनयति" (तैसं २.३.२) इति॥ [122-]'घृतं न पूतम्' 'उभे सुश्चन्द्र' इत्येते ऋचौ[122] विधत्ते– "आत्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे" (तैसं २.३.२) इति। [123]यस्मिन् शरीरमध्ये दुर्गे समुत्पन्नस्य मधुनो दध्यादिवत् सर्वप्राणिसुलभत्वं नास्ति, आत्माऽपि हस्तपादादिवत् सर्वैः सुष्ठु विज्ञेयो न भवति, तत्साम्यात् मधुनः पुरुषत्वं मधुहोमेन वह्नौ प्रक्षिप्तस्याऽऽत्मनः [124]पङ्क्तिच्छन्दसोः पाठेन मृत्योर्निष्क्रयो भवति॥

८७. तै१.मै.ले– °देतं मा°।

१२१. अ.इ.उ.जो.ना.प.हा– तस्मिन्। १२२–१२२. जो.ना.हा.– 'घृत...ऋचौ' नास्ति।
१२३. इ.ने–'यस्मिन्' नास्ति। १२४. ने– °च्छन्दसः; इ१– छन्दसाम्।

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ॥
दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाजꣳ श्रुत्या अपा वृधि ।

---

अग्ने । दा । दाशुषे । रयिम् । वीरवन्तमिति वीर-वन्तम् । परीणसमिति परि-नसम् ।
शिशाहि । न । सूनुमत इति सूनु मतः ॥
दा । न । अग्ने । शतिनः । दा । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अपेति । वृधि ।

---

अथ " अग्नये दात्रे पुरोडाशमष्टाकपाल निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपाल पशुकाम " ( तैस २ ३ २ ) इत्यस्य प्राजापत्येन सह त्रिहविष आग्नेयस्य पुरोनुवाक्या– 'अग्ने दा ' इति गायत्री ॥ हे [v]अग्ने, [v]दाशुषे हवींषि दत्तवते यजमानाय [v]रयिं धनलक्षण [८८] [v]दा देहि। लेटि शपो लुक्। रयिर्विशिष्यते– [v]वीरवन्त [८८] पुत्रपौत्रादिमन्त तेषा भोगपर्याप्तम्, [v]परीणस, नासिकया सर्वेऽवयवा लक्ष्यन्ते, परिगतसर्वावयवम्। छान्दसो नसादेश'। " उपसर्गाद्बहुलम् " ( पा ८ ४ २८ ) इति णत्वम्। " अन्येषामपि दृश्यते " (पा ६ ३ १३७) इति दीर्घत्वम्। किं च– [v]न अस्माक अस्य यजमानस्य [v]सूनुमत त्वया दीयमानपुत्रपौत्रादिकस्य रयिं [v]शिशीहि तीक्ष्णीकुरु [८९]उज्ज्वलीकुरु। यद्वा–नोऽस्मान् शिशीहि उज्ज्वलीकुरु। सूनुमत सूनु सोता सोमस्याभिषोता यजमान तत्सहितानस्मान् पुत्रादिसमृद्धान् कृत्वा अस्मान् ऋत्विग्यजमानान् सर्वानपि शिशीहि। श्यतेर्लोटि " बहुल छन्दसि " ( पा २ ४ ७६ ) इति शप श्लु। अभ्यासस्य चेत्त्वम्। " ई हल्यघो " ( पा ६ ४ ११३ ) इतीत्वम् ॥

[९०]अथ तत्रैव याज्या–' दा न ' इति जगती ॥ हे [v]अग्ने, [v]दा देहि [v]न अस्मभ्यम्। किम्' [v]शतिन [v]सहस्रिण च पशून् [v]दा देहि । [v]दुर [v]न द्वाराणीव पशुप्राप्त्युपायानिव [v]वाजम्

---

अग्ने इति॥ तत्र प्रथमहविष पुरोनुवाक्यामाह– ' अग्ने दा दाशुषे रयिं वीरवन्त परीणसम्। शिशीहि न सूनुमत ' इति। हे 'अग्ने, 'दाशुषे हविर्दत्तवते यजमानाय 'रयिं 'दा धन देहि। [१२५]तथा 'वीरवन्तं वीरं [१२५] भृत्यादिभिरुपेत पुत्र देहि। कीदृशम्? 'परीणस परित शोभना नासिकाद्या अवयवा यस्य त तथाविधम्। 'सूनुमत [१२६]त्वया दीयमानै [१२६] पुत्रैर्युक्तान् 'न अस्मान् 'शिशीहि सर्वेषु कार्येषु तीक्ष्णीकुरु ॥

---

८८–८८ मै४–देहि शपो लुक् पुत्रपौत्रय । ८९ मै–उज्ज्वलितं कुरु। ९०. मै–'अथ' नास्ति।

---

१२५–१२५. इ ने शृ हो१– तथा वीरे, ट१– तत्तथाविधे । १२६–१२६. अ उ ओ पा हा– त्वया दीप्यमाने, ट ने हो१– त्वदीयमाने ।

प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतुः ॥

प्राची इति । द्यावापृथिवी इति द्यावा-पृथिवी । ब्रह्मणा । कृधि ।
सुवः । न । शुक्रम् । उपसः । नीति । दिद्युतुः ॥

अन्नम् ^vअपावृधि अपावृणु ^vश्रुत्यै श्रवणार्थं, यथा वय लोके जेतार स्याम तदनुरूप ^{११}पशुप्राप्त्युपायभूतमन्नमाह पुरु [ मन्नमपावृणु ]। " बहुल छन्दसि " (पा २ ४ ७३ ) इति शपो लुक। " श्रुशृणुपृकृवृभ्य " (पा ६ ४ १०२ ) इति धिभाव । केचिदाहु – दुर द्वाराणि पशुप्राप्त्युपायानपावृधि, वाजमन्न श्रुत्यै नापावृधि, अपि तु अश्रवणार्थम् अपावृधि, यथा अपावृते अन्ने पशुसाध्ये ^{१२}श्रवण न क्रियते, अविचार्यैवार्थित्वमात्रेण पश्वादिक दीयते तथा अपावृधीति । अथापरे ब्रुवते– वाजमन्न पशुहेतुक श्रुत्यै श्रवणायापावृधि श्रवणसामर्थ्यायाविष्कुरु, अन्नेन हि श्रवणसामर्थ्यमुपजायते, असति ह्यन्ने श्रवणसामर्थ्याभावात् । तस्माच्छ्रुत्या अपावृधि दुरो न श्रोत्रादीनि द्वाराणीव, ^{१३}यथैतानि श्रवणार्थमपावृतानीति ^{१३}। किं च ^vद्यावापृथिवी द्यावापृथिव्यौ ^vप्राची ^{१४}प्राच्यौ अनुकूले ^vब्रह्मणा परिवृढेन हविषा कर्मणा वा ^vकृधि ^{१५}कुरु । पूर्ववच्छपो लुक्, धिभावश्च । यद्वा–ब्रह्मणा अन्नेन सदाऽस्माक प्राची अनुगुणे द्यावापृथिव्यौ ^{१६}कुरु । किं च– ^vसुव ^vन ^{१७}सुवरिव आदित्य इव । साहितिक णत्व छान्दसम् । ^vशुक्र पुत्रादिकम् ^vउपस उदयात् ^vवि ^vदिद्युतु विशेषेण ^{१८}द्योतयन्ति । द्युतेरन्तर्भावितण्यर्थाच्छान्दसो लिट् । व्यत्ययेन परस्मैपदम् । " द्युतिस्वाप्यो ° " (पा ७ ४ ६७) इत्यभ्यासस्य सम्प्रसारणम् ॥

दा इति ॥ तत्रैव याज्यामाह– ' दा नो अग्ने शतिनो दा सहस्रिणो दुरो न वाजं श्रुत्या अपावृधि । प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतु ' इति । हे ^vअग्ने, ^vन ^{१२७}अस्मभ्य ^vशतिन ^vदा शतसङ्ख्याकान् पशून् देहि तथा सहस्रसङ्ख्याकान् देहि । ^vदुर ^vन द्वाराणीव । पशुमपत्तौ हि–"वायव्यं श्वेतमा लभेत" (तैस २ १ १), "सरस्वत्याज्यभागा स्यात्" (तैस २ २ ९) इत्यादीनि बहूनि कर्माणि सुखेनानुष्ठातु शक्यन्ते । अतोऽनुष्ठानस्य द्वारभूतान् पशून् देहि । तत पशुलाभादूर्ध्वं ^vवाजम् अन्न ^vश्रुत्यै ब्राह्मणेभोजनादिजन्यकीर्तये ^vअपावृधि विघ्नमपनीय वर्धय । प्रकर्षेणाऽनुकूल्यमञ्चतो गच्छत इति प्राच्यौ । ^vब्रह्मणा मन्त्रपुर सरेण कर्मणा तुष्टे त्व^{१२८} द्यावापृथिव्यौ प्राच्यौ कुरु । ^vउपस उप काला ^vसुव ^vन स्वर्ग इवास्मद्गृहे ^vशुक्र प्रकाश ^vवि ^vदिद्युतु विशेषेण द्योतित कुर्वन्तु पमूत कुर्वन्त्वित्यर्थ ॥

९१ त१ मे ल–°प्रतिद्वारभूत° । ९२ मे–श्रावणा, ल–श्रावणानि, त१–श्रवणा । ९३-९३ ल– अथैतानि श्रवणार्थानि न श्रवणार्थमपावृतानीति, त१–अप तानि श्रवणार्थमपावृतानीति । ९४ त१ ल–प्राची । ९५ मे–'कुरु' नास्ति । ९६ त१ मे ल– 'कुरु' नास्ति । ९७ त१ ल– सुवरिति । ९८ मे– द्योतयन्त ।

१२७ इ–अस्मा[ । १२८ आ क– स्व[ ।

अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥
*मा ( ६ ) नो मर्धीरा* तू भर ॥

अग्निः । दाः । द्रविणम् । वीरपेशा इति वीर पेशा । अग्निः । ऋषिम् । यः । सहस्रा । सनोति । अग्नि । दिवि । हव्यम् । एति । ततान । अग्नेः । धामानि । विभृतेति वि-भृता । पुरुत्रेति पुरु त्रा ॥
मा ( ६ ) । नः । मर्धीः ॥ एति । तु । भर ॥

"अत्रेय याज्याविकल्प."—'अग्निर्दा' इति त्रिष्टुप् ॥ अयम् अग्नि· द्रविण धन दा. दात् ददाति । लेटि शपो लुक् । पुरुषव्यत्यय. । वीरपेशा विक्रान्तरूप. य अग्नि. ऋषिं दर्शयितारं श्रेयसा, य सहस्रा सहस्रेण प्रकारै सनोति संविभजते । अग्नि. खलु दिवि देवेषु आदित्ये वा हव्यम् आ ततान सर्वतस्तनोति । तस्मादेव महानुभावस्य अग्नेः धामानि स्थानानि हवींषि वा विभृता धारयिता येन पशुमन्तः स्यामेति । पुरुत्रा पुरूणि बहूनि । "देवमनुष्य" ( पा ५.४.४६ ) इति त्राप्रत्ययः । आख्यातस्य संहितिक दीर्घत्वम् ॥

अथ 'इन्द्राय प्रदात्रे' ( तेस २·३·२ ) इत्यस्या. पुरोनुवाक्या याज्या च– 'मा नो मर्धीरा तू भर' इति ॥ "मा नो मर्धीरा भरा दद्धि तन्नः", "आ तू भर माकिरेतत् परि ष्ठात्" ( तैम १ ७ १३ ) इत्येतयोरेते प्रतीके गृह्येते । व्याख्याते चैते "अन्वह मासा." ( तैस १·७·१३ ) इत्यत्र । तत्र प्रथमा-अस्मान् मा मर्धीः सङ्ग्रामेण मा बाधिष्ठाः । दध्यादिकम् आ भर आहृत्यास्मभ्य तत प्रदेहि । किं? दाशुषे हवींषि दत्तवते यजमानाय दातुं यत् ते भूरि बहु सम्पादित तत तद्धनमिदानीम् अस्मभ्य देहि । वयमपि नव्ये नूतने देष्णे दानसमर्थे अस्मिन् शस्मे प्रशस्ते त्वदीये उक्थे शस्त्ररूपाणीये स्तोत्रे त्वा स्तुवन्त. त्वा प्र ब्रवाम प्रकर्षेणाभिमतानि याचामहे, हे इन्द्र, इति ॥

अग्निरिति ॥ तत्रैव विकल्पितां याज्यामाह– 'अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं य सहस्रा सनोति । अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा' इति । अयम् अग्निः द्रविणं दा ददातु । वीरपेशा वीराणामस्मत्पुत्रादीनां पाल्क. य. अग्निः अयं ऋषिम् ऋषिसमानं पुत्रं सहस्रा सहस्रप्रकारेण सनोति ददातु । स अग्नि दिवि स्वर्गे हव्यम् अस्मदीयम् आ ततान समन्ताद्विस्तारितवान । तादृशस्य अग्नेः पुरुत्रा पुरुषु प्रदेशेषु धामानि स्थानानि विभृता विशेषेण संपादितानि ॥

मेति ॥ द्वितीयहविषो याज्यानुवाक्ययो प्रतीके दर्शयति– 'मा नो मर्धीरा तू भर' इति । "मा नो मर्धीरा भरा दद्धि तन्नः" इति पुरोनुवाक्या, "आ तू भर माकिरेतत् परि ष्ठात्" इति याज्या । तदुभयं पूर्वकाण्डे सप्तमप्रपाठके ( तैसं १·७·१३ ) व्याख्यातम् ॥

घृतं न पूतं तनूरंरेपाः शुचि हिरण्यम् । तत् ते रुक्मो न रोचत स्वधावः ॥
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥

घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ।
तत् । ते । रुक्मः । न । रोचत । स्वधाव इति स्वधा-वः ॥
उभे इति । सुश्चन्द्रेति सु चन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।
उतो इति । नः । उदिति । पुपूर्याः । उक्थेषु । शवसः । पते ।
इषम् । स्तोतृभ्य इति स्तोतृ भ्यः । एति । भर ॥

द्वितीया–हे 'इन्द्र, [१०२]'आ 'भर वसु 'एतत् [१०३]'मा 'परिष्ठात्[१०३] अस्मभ्यमन्यत्र [१०४]माऽस्थात् । त्वा हि वय सर्वेषा 'वसूना सम्बन्धिन पतिं 'वसुपतिं 'विद्म जानीम । अस्मात् 'यत् 'ते 'माहिन महन्महनीय 'दत्र दातव्य धनम् 'अस्ति 'तत् 'अस्मभ्य 'प्रयन्धि प्रयच्छ, हे 'हर्यश्व [१०५]हरिवाहनेति । अत्राचार्येण (द्र बौश्रौ १३ २५), "प्रदातार हवामहे", "प्रदाता वज्री" (तैस १ ७ १३) इत्येते उक्ते । तत्र विकल्पो वेदितव्य ॥

अथ प्राजापत्यस्य पुरोनुवाक्या–'घृत न पूतम्' इति । अक्षरपङ्क्तिः पञ्चपदा ॥ 'घृत 'न घृतमिव 'पूत शुद्ध 'तनू शरीर तव, अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । हे 'स्वधाव अन्नवन् । "मतुवसो" (पा ८ ३ १) इति रुत्वम् । 'अरेपा अपापा तनू तव रोचते 'हिरण्यम् इव 'शुचि रोचते, 'रुक्म 'न रजतमिव रोचते तव तनूरिति । तदिति लिङ्गव्यत्यय, सा तव तनूरिति । यद्वा–'तत् 'ते अन्न रोचते । किमिवेत्याह–पूत घृतमिव अरेपास्तनूरिव शुचि हिरण्यमिव रोचनशील रजतमिवेति ॥

तत्रैव याज्या–'उभे' इति पञ्चपदा पङ्क्ति । हे 'सुश्चन्द्र सुकान्त । "सुपूर्वश्च चन्द्रपर" (तैप्रा ५ ५) इति शकार साहितिक आगम । 'दर्वी हनू 'सर्पिष सम्बन्धियौ सर्पि ससिक्ते ।

घृतमिति ॥ तृतीयहविष पुरोनुवाक्यामाह–'घृत न पूत तनूररेपा शुचि हिरण्यम् । तत् ते रुक्मो न रोचत स्वधाव' इति । हे 'स्वधाव अन्नवन् प्रजापते, 'तनू 'अरेपा त्वदीय शरीर पापरहितम् । किमिव ? 'पूत 'घृत 'न घृतमिव । नेत्युत्तरत्रानुवर्तते । 'शुचि 'हिरण्य न शुद्ध सुवर्णमिव, 'रुक्म 'न, आभरणमिव 'ते त्वदीय तच्छरीर 'रोचत सर्वेभ्यो रोचताम् ॥

उभे इति ॥ तत्रैव याज्यामाह–'उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर' इति । हे 'सुश्चन्द्र, सुष्ठ्वाह्लादनकर, 'आसनि त्वदीय आस्ये 'सर्पिष सम्बन्धिन्यौ 'उभे दर्वीसदृशौ हनू 'श्रीणीषे सेवसे हनुपूरणपर्यन्त सर्पिस्त्वया पीतमित्यर्थ । 'उत अपि च, हे 'शवस 'पते बलस्याधिपते 'उक्थेषु शस्त्रयुक्तेषु यज्ञेषु 'न अस्मान 'उत्पुपूर्या 'उत्कर्षेण पूरय प्रापयेत्यर्थ । 'स्तोतृभ्य यजमानेभ्य 'इषम् अन्नम् 'आ 'भर सपादय ॥

१०२. तै–आभर आभर । १०३–१०३ मा तै–परिष्ठा । १०४ तै–स्थि । १०५ मै–हरितवाहनेति ।

वायो॑ श॒तꣳ हरी॑णां यु॒वस्व॒ पोष्या॑णाम् ।
उ॒त वा॑ ते सह॒स्रिणो॒ रथ॒ आ या॑तु॒ पाज॑सा ॥

वायो॒ इति॑ । श॒तम् । हरी॑णाम् । यु॒वस्व॑ । पोष्या॑णाम् ।
उ॒त । वा॒ । ते॒ । स॒ह॒स्रिण॑ । रथ॑ । एति॑ । या॒तु॒ । पाज॑सा ॥

दीर्यते भक्ष्यते अन्नमाभ्यामिति दर्वी । ते श्रीणीषे सदा सेवसे । यद्वा– उभे दर्वी । सर्पिः श्रीणीषे सर्पिः प्रापयसि सर्पिषा [१०६]मिश्रीकुरुष्व । [१०७]आसनि आस्ये । पद्दन्नादिना (पा ६.१.६३) आसन्भावः । उतो अपि च हे शवसः पते बलस्य पात । "षष्ठ्याः पतिपुत्र°" (पा ८.३.५३) इति सत्वम् । नः अस्माकम् उक्थेषु स्तोत्रवत्सु यज्ञेषु उत्पूपूर्या उच्छ्रित पूरय सामर्थ्यादन्नं बलमेव वा अविशेषणात् सर्वम् । अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । पूरी आप्यायने । लिङि "बहुलं छन्दसि" इति शपः श्लुः । किं च– इषम् अन्नं स्तोतृभ्य आ भर स्तोतृभ्य ऋत्विग्भ्य [१०८]आहर । "हृग्रहोर्भ°" (पा ८.२.३२ वा १) ॥

अथ वायव्ये कश्चिद्विनियुज्यते लिङ्गात्– 'वायो शतम्' इति पुरोनुवाक्या उष्णिक् । हे वायो, हरीणां हरितवर्णानामश्वानां शतं युवस्व मिश्रय रथे योजय [१०९]अस्मद्यज्ञमागन्तुम् । यौतेः व्यत्ययेन शः, आत्मनेपदं च । पोष्याणामिति । पोषे साधूनामिति "तत्र साधुः" (पा ४.४.९८) इति यत् । उत वा अपि वा ते तव सहस्रिणः । कि? हरिसहस्रवतः । कि' सहस्रं हरीणां रथे युज्यतामिति सामर्थ्याल्लभ्यते । यद्वा–ते हरयः सहस्रिणः सहस्रसंख्यावन्तो रथे युज्यन्ताम् । तत एवयुक्तो रथः आ यातु । अस्मत्सकाशमागच्छतु । पाजसा बलेन सहित ॥

वायविति ॥ अथान्यत्र "वायव्यां यवागूं निर्वपेत्" (कपिस ४८.१५) इत्यादिना विहिते [११०]कर्मण्युष्कर्णीयां पुरोनुवाक्यामाह–'वायो शतꣳ हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा' इति ॥ हे वायो, पोष्याणां पुष्टिमतां हरीणाम् अश्वानां शतं युवस्व [१११] । अस्मद्यज्ञं समागन्तुं रथे योजय । उत वा ते सहस्रिणः अथ वा ते सहस्रसंख्याका अश्वा रथे युज्यन्तामिति शेषः । स च रथः पाजसा बलेन शीघ्रम् आ यातु ॥

१०६. मै८मं– मिश्रीकरोति कुरुष्व वा, ते१– मिश्रं कुरुषे कुरुष्व । १०७. ते१– 'आसनि' नास्ति । १०८. ते१ मै१०– आभर । १०९. ते१.मै–अस्मद्यज्ञमा°, मै८– यजमानमा° ।

११०. उ क– °कर्मणि । १११. अ आ उ.क खो गा घ ह– °मद्यज्ञे ।

प्र याभि( ७ )र्यासि दाश्वांसमच्छां नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिं सुभोजसं युवेह नि वीरवद्गव्यमश्व्यं च राधः ॥

प्रेति । याभिः (७) । यासि । दाश्वांसम् । अच्छ ।
नियुद्भिरिति नियुत्ऽभिः । वायो । इष्टये । दुरोण इति दुःऽओने ।
नीति । नः । रयिम् । सुभोजसमिति सुऽभोजसम् । युव । इह ।
नीति । वीरवदिति वीरऽवत् । गव्यम् । अश्व्यम् । च । राधः ॥

तत्रैव याज्या–'प्र याभिः' इति त्रिष्टुप् । अच्छ इति प्रथमपादान्त ॥ हे ᵛवायो, ᵛयाभिः वडवाभिः नियुत्संज्ञाभिः ᵛप्र ᵛयासि गच्छसि । ᵛदाश्वांसं हविर्दत्तवन्तं [110]यजमानम् ᵛअच्छ अभिगन्तुम् ᵛइष्टये यागाय पुनरपि यागं प्रवर्तयितुम् । "मन्त्रे वृष°" (पा ३ ३ ९६) इति क्तिन उदात्तत्वम् । "निपातस्य च" (पा ६ ३ १३६) इति संहितायामच्छेत्यस्य दीर्घत्वम् । ᵛदुरोणे [111]यज्ञगृहे ताभिः आगत्य ᵛइह अस्मद्यज्ञगृहे ᵛरयिं धनं ᵛसुभोजसं शोभनभोजनम् । "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम् । ᵛनि ᵛयुव मिश्रय शोभनभुक्तिकं धनमस्माभिर्मिश्रय । पूर्ववत् व्यत्ययेन शः । नियुव च ᵛराधः धनम् । कीदृशम्? ᵛवीरवत् पुत्रपौत्रादिमत् ᵛगव्यं गोसमृद्धिनिमित्तम् । "गोद्व्यच°" (पा ५ १ ३९) इति यत् । यद्वा–गव्यं क्षीरादिभिस्तद्वत् । ᵛअश्व्यम् अश्वसमूहवत् । "केशाश्वाभ्याम्°" (पा ४ २ ४८) इति छ, छान्दसं ह्रस्वत्वम्, आद्युदात्तत्वं च । यद्वा– अश्वयोगस्यापि निमित्तभूतम् । छान्दसो यत् ॥

उत्तरयोः क्वचिदैन्द्रे द्रष्टव्यो विनियोगः –'रेवतीर्नः' इति गायत्री पुरोनुवाक्या ॥ व्याख्याता चेयं "अन्नह मासा" (तैस १ ७ १३) इत्यत्र । ᵛरेवती धनवत्यः ᵛनः अस्माकं ᵛसधमाद सहमाद्यन्त्यः ᵛइन्द्रे ᵛसन्तु ᵛतुविवाजाः चरुपुरोडाशादिबहुलाः । ᵛयाभिः वयं ᵛक्षुमन्तः शब्दयन्तः स्तुवन्तः ᵛमदेम माद्येम ताः इन्द्रार्थमस्माकं बहुलाः सन्तु, सर्वार्थसाधनभूता आप उच्यन्ते ॥

प्रेति ॥ तत्रैव याज्यामाह– 'प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे । नि नो रयिं सुभोजसं युवेह नि वीरवद्गव्यमश्व्यं च राधः' इति ॥ हे ᵛवायो, ᵛदुरोणे [112]यज्ञगृहे ᵛइष्टये क्रियमाणेष्टिसिद्ध्यर्थं नियुत्संज्ञकाभिः ᵛयाभिः वडवाभिः ᵛदाश्वांसम् ᵛअच्छ हविर्दत्तवन्तं यजमानं प्राप्तुम् ᵛप्र ᵛयासि ताः समीचीना अस्माकमनुकूला इति शेषः । ᵛइह कर्मणि ᵛनः अस्माकं ᵛसुभोजसं ᵛरयिं सुष्ठु भोजनोपयुक्तं धनं ᵛनि ᵛयुव नितरां मिश्रय । किं च ᵛराधः अस्य नि युव । कीदृशं राधः ? ᵛवीरवत् ᵛगव्यम् ᵛअश्व्यं पुत्रैर्गोभिरश्वैर्युक्तमित्यर्थः ॥

११० मै–'यजमान' नास्ति । १११ ट– यज्ञगृहे ।

११२ ट– यजमानगृहे ।

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्य ॥ १२ ॥

[ दधानो जिनोपि देमः प्र हव्यं बभूथ मा याभिश्चत्वारिꣳशच्च ] ।

[ प्रजापतिस्ताः सृष्टा अग्नये पथिकृतेऽग्नये कामायाग्नयेऽन्नवते वैश्वानरमादित्यं चरुमैन्द्रं चरुमिन्द्रायान्वृजव आग्नावैष्णवमसौ सौमारौद्रमैन्द्रमेकादशकपालꣳ हिरण्यगर्भो द्वादश ] ।

[ प्रजापतिरग्नये कामायाभि स भवतो यो विद्विषाणयोरिन्द्रे स नक्षेदामावैष्णवमुपरिष्टाद्वाशि दाश्वाꣳसमेकसप्ततिः ] । [ प्रजापतिः प्रेदु हरिवः श्रुतस्य ] ।

रेवतीः । नः । सधमाद इति सध-मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि-वाजाः । क्षुमन्तः । याभिः । मदेम ॥

रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वावत इति त्व-वतः । मघोनः । प्रेति । इत् । उ । हरिव इति हरि-वः । श्रुतस्य ॥ १२ ॥

[ मैसं ... कासं ... ]

तत्रैव याज्या[112] । 'रेवान्' इति गायत्री ॥ रेवान् धनवान् महाधनः । "रयेर्मतौ" (पा ६.१.३७ वा ६) इति सम्प्रसारणम् । "रेशब्दाच्च" (पा ६.१.१७६ वा १) इति मतुप उदात्तत्वम् । साहितिकौ रुत्वानुनासिकावुक्तौ । इत् इत्यवधारणे । धनवानेव स्यात् भवितुमर्हति । कः ? रेवतः धनवतः यस्य कस्यचिदपि परिवृढस्य स्तोता स्यात् । अथ "[113]यद्देवमेतद्भवति तदा त्वावतः त्वत्सदृशस्य । "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्"

रेवतीरिति ॥ अथ काम्यैन्द्रकर्मणि [133]उत्कृष्टम् उक्तयाज्यानुवाक्ये [134]आम्नायेते । तत्र पुरोनुवाक्यामाह– 'रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम' इति । रेवत्यो धनवत्यः सधमादः अस्माभिः सह [135]मादय(य)न्त्यो हर्षयुक्ताः तुविवाजः बह्वन्नोपेता आपः नः अस्माकं स्वामिनि इन्द्रे सन्तु [136]अस्मदनुग्राय तिष्ठन्तु ॥ याभिः अद्भिः सह वयं क्षुमन्तः शब्दयन्त इन्द्रं स्तुवन्तः मदेम [137]हृष्यास्म ॥

रेवानिति ॥ तत्रैव याज्यामाह– 'रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्य' इति । हे हरिवः इन्द्र, अयं यजमानः रेवान् इत् धनवानेव सन् रेवतः धनवतो देवस्य प्रेदु [138]आत्मनःप्रकर्षेण स्तोता स्यात् । कीदृशस्य देवस्य ? त्वावतः त्वत्सदृशस्य मघोनः [139]धनवतः धनस्य[139] [140]देवेषु श्रूयमाणस्य । तादृशं देवं स्तुत्वा स्वाभीष्टं प्राप्नोतीत्यभिप्रायः ॥

११२. तै.१.मै– याज्या पुरोनुवाक्या वा । ११३. मै४– यद्देव°; ल– यद्देव° ।

१३३. 'उत्कृष्टम्' नास्ति । १३४. भ– आम्नाते । १३५. अ– मादयन्त्यः । १३६. क– अस्मदनुग्रहाय सर्वदा स्थाने । १३७. क.ना– हृष्याम । १३८. क.ओ.ना.हा– आत्मनो प्रकर्षेण । १३९–१३९. क.ना– अस्मदनुग्राहः धनस्य; ओ.हा– अस्मदनुग्राहः धनस्य, अ.पा– अस्मदत धनस्य; ट.ठा.गे हो– अस्मदः धनस्य, मू– अस्मदः धनस्य । १४०. टा– देवेषु ।

(पा ५ २ ३९ वा१) इति वतुप्। "आ सर्वनाम्न" (पा ६ ३ ९१) इत्यात्वम्। ^मघोन धनवत। ^श्रुतस्य सर्वेष्वपि लोकेषु धनवत्तया विख्यातस्य त्वावतो धनवत स्तोता स ^प्र एव स्यात् प्रकर्षेण रेवान् [113] भवितुमर्हतीति। ^उ इति पादपूरण, [114] विशेषख्यापने वा। त्वावत अस्तित्वमर्थ। हे ^हरिव हरिभिरश्वैर्युक्त इन्द्र। "मतुवसो°" (पा ८ ३ १) इति रुत्वम्॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे द्वितीयप्रपाठके द्वादशोऽनुवाक ॥
॥ समाप्तश्च [115] प्रपाठक ॥

---

मन्त्र विनियोगसङ्ग्रह ।

"हिरण्याऽऽप प्रजा सेति चतस्र शतकृष्णले।
उदु चित्र चरौ सौर्ये स मैत्राग्नेययागके ॥ १ ॥
हिर सावित्रके तद्वद्वडित्था [141] भूमिगे चरौ [141] ।
सोमेन्द्र ऋदू चत्वार शिपिविष्टे वषट्त्रयम् ॥ २ ॥
अग्ने तिस्रो दातृयुक्ते मा न आ तू भदातृके।
घृत [142] दध्यादिगणके वायो वायव्यके क्वचित् ॥ ३ ॥
[143] आग्नैन्द्रे रेवतीरिङ्गादिति [143] त्रिशदुदीरिता" ॥ इति ॥

अथ मीमांसा ॥ अष्टमाध्यायस्य प्रथमपादे चिन्तितम्–

"कृष्णलेषु घृतस्योत [144] व्रीहिन्नेजोयुतेर्भवेत्।
घृतस्य नैव वैशद्यावरशब्दयुतेस्तथा" ॥ (जैन्या ८ १ २१) ॥

"प्राजापत्य घृते चरु निर्वपेच्छतकृष्णलम्" (मैस २ २ २) इत्यत्र कृष्णलेषूपादानद्रव्यस्य घृतस्य धर्मा कर्तव्या, कृष्णलाख्यसुवर्णस्य घृतस्य च तेजस्वित्वसाम्यादिति चेत्। न। सुवर्णशकल व्रीह्योर्वैशद्यसाम्यात्। न हि घृतस्य [145] प्रबलकान्त्याविरलत्वादिरूप वैशद्यमस्ति। [146] चरशब्दश्चौषधिद्रव्य विषय कृष्णले [147] प्रयुज्यमान ओषधिधर्मान् [147] प्रापयति। तस्मात् व्रीहिधर्मा [148] कर्तव्या ॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

"अवघात कृष्णलानामस्ति नो वाऽस्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा" ॥ (जैन्या १० १ ४) ॥

---

११३–११४ त१ ल– भवितुमर्हति। ११५ त१– 'प्रपाठक' इत्यस्यानन्तर 'शुभमस्तु'।

---

१४१–१४१ जो ना–भूमिगाचरौ। १४२ अ इ उ क जो ना पा श्रृ हा–दध्यादिगुणक। १४३–१४३ अ उ पा– आग्नेन्द्री रेव° क हा–आग्नेन्द्री रेवतीरिङ्गा°, इ काम्यैन्द्रीरेवतीरिङ्गा°। १४४ अ उ पे–°स्तेजोयुतिर्भवेत्। १४५ अ उ पा पृ–°न्त्यविचल°, क जो इ इ१ न हा– °न्त्याविरल°। १४६ आ ना पा हो१– °श्चरस्त्वोषधद्रव्य°, ने– °ब्दस्य ओषधिद्रव्यविषय। १४७–१४७ आ इ पृ हो१–प्रयुज्यमान भेषज धर्मान्, अ उ क जो पा हा – प्रयुज्यमानोषधिधर्मान्। १४८ ने हो१– व्रीहिधर्मा।

विकृतिरूपाणां काम्येष्टीनां काण्डे [१४९]पठ्यते–"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम." (मैस २.२.२) इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ 'व्रीहीनवहन्ति' इति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां [१५०]चोदकवशादस्ति नो वेति संदेहः। अस्तीति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं [१५१]प्रकृत उपकारः[१५१]। लुप्तेऽप्युपकारे तत्सत्तायां पाकवदिति निदर्शनम्। लुप्तेऽपि [१५२]विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः, तद्वदवघातोऽप्यस्तु। 'घृते श्रपयति' इति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः। अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति॥

तत्रैव द्वितीयपादे चिन्तितम्—

'[१५३]नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसंभवी।
अदृष्टार्थतया स स्याद्गौण्ये तु सुतरां भवेत्'' ॥ (जैन्या १०.२.१) इति॥

'घृते श्रपयति' इति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्तव्य इति पूर्वः पक्षः। [१५४]दृष्टार्थस्य विक्लेदनस्यासंभवेऽप्यदृष्टार्थं पाकः कर्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द औष्ण्यवाची तदा न कोऽपि विवादः॥

तत्रैवान्यच्चिन्तितम्—

"उपस्तरणाभिघारौ [१५५]स्तस्तेषु नो वा द्वयं भवेत्।
अदृष्टार्थमसंसक्तिर्दृष्टार्थौ[१५६] नेति लुप्यते" ॥ (जैन्या १०.२.२)॥

तेषु कृष्णलेषूपस्तरणमभिघारणं [१५७]चेत्येतदुभयं पाकवददृष्टार्थं कर्तव्यमिति पूर्वः पक्षः। न तावत् पाकवदत्र प्रत्यक्षविधिरस्ति। चोदकस्तु दृष्टं द्वारमपेक्षते। [१५८]सर्वत्रोपस्तरणाभिघारणयोर्दृष्टार्थत्वात्। सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुं तदुभयं क्रियते। कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति। अतस्तन्निवारणलक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लुप्यते॥

तत्रैवान्यच्चिन्तितम्—

"भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः।
सुश्रुपाशारनिर्धानयवचनात् स्यात् प्रदानवत्"॥ (जैन्या १०.२.३)॥

यथा पुरोडाशे [१५९]प्राशित्रादिभागो भक्ष्यते[१५९] न[१६०] तथा तेषु कृष्णलेषु [१६१]भक्षोऽस्तीति। प्रीतिरूपस्य दृष्टद्वारस्याभावादिति पूर्वः पक्षः। "सुश्रुपाशारं भक्षयन्ति" (द्र. माश्रौ २.५.४.७; आपश्रौ १३.१७.६) "[१६२]निर्धयन्तो भक्षयन्ति" (द्र. आपश्रौ १३.७.५) इति प्रत्यक्षं वचनमाम्नायते। इक्षुदण्ड-भक्षणं तद्रसस्वीकारं च यः शब्दविशेषस्तस्यानुकरणं सुश्रुपेति। [१६३]घृते निरसेषु कृष्णलेषु [१६४]अहिसमाज्यं तदन्तर्नेतुमिव [१६५]बलात् सुश्रुपां कृत्वा तदाज्यं [१६६]निःशेषेण [१६७]पिबन्तो भक्षयेयुरित्यर्थः। अनदनीय-द्रव्याणामपि कृष्णलानां यथा वचनात् प्रदानं तद्वदभक्ष्याणामपि भक्षणं भवेत्॥

---

१४९. आ.हा– उदाह्रियते। १५०. हा –बाधक°। १५१–१५१. अ.उ.द.द१.ने.पा.हो१– तत्कृत उप°; पै–तत्कृतोप°; आ.गा–प्राकृत उप°। १५२. द–विविन्ने ह्रदनोपकारः; ने–विच्छेदेनोपकारः। १५३. ने.हो१– नास्त्यत्र। १५४. अ.उ.द.द१.ने.पा.पा.हो१–दृष्टस्य। १५५. अ.उ.जो.ना.पा.हा– द्वौ तेषु। १५६. अ.उ.क.जो.पा.पै.हा– °दृष्टार्थं; आ–°स्ति दृष्टार्थे। १५७. क.हा– चेत्युभयं। १५८. आ.क.द– प्रकृतावुप°। १५९.–१५९. द– °भागा भक्ष्यन्ते। १६०. आ.क.द– 'न' नास्ति। १६१. आ.क.द–'भक्षः' नास्ति। १६२ अ.उ.पा– निर्धायं। १६३. द१.ने.हो१– 'घृते' नास्ति। १६४. अ. उ.जो.गा.पा.हा– उपसि°। १६५. आ.क.पो.हा– बालाः; अ.उ.पा–यत्। १६६. द१–निःशेषेण। १६७. द१– पिबन्ति।

तत्रैवान्यच्चिन्तितम् —

" [168]सकृत्सहत्वयोरेकमेकधेत्यन्त्यमेव वा ।
एकं नियामकाभावाद्बाधादन्त्यमेव हि " ॥ (जैन्या १० २ ४)॥

तत्रैव [169]कृष्णलभक्षणे श्रूयते–" एकधा ब्रह्मण उपहरति " (तैस २ ३ २) इति । तत्रैकधेत्यय धाप्रत्ययः प्रकारवाची (द्र पा ५ ३ ४२) सकृदेकवारमित्यमुमर्थं वा बहूना सहभाव वा ब्रूते। उपहारो भक्षणाय समर्पणम्। एकधेत्यनेन शब्देन सकृत्त्वसहत्वयोरन्यतरद्विवक्षितमुत सहत्वमेवेति सशय । नियामकाभावादुभयोर्मध्ये यत्किचिदन्यतरदिति पूर्व पक्ष । बाधोऽत्र नियामक । प्रकृतावेकैकाक्षरिक चतुर्धाकरणादावुभयकालेषु [170]चतुर्धाभक्षणसिद्ध्यै चत्वार उपहारा उपदिष्टा । अत्रापि [171]ते चोदकप्राप्ता । [172]तत्र सकृत्त्वपक्ष उपरितनास्त्रय उपहारास्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे कालविशेषा एव बाध्यन्ते, न तु त्रय उपहारा । तस्मादन्त्यपक्षरूप सहत्वमेवैकधेत्यस्य शब्दस्यार्थ ॥

तत्रैवान्यच्चिन्तितम् –

" सर्वं ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता ।
[173]अन्यभागस्यापि वाऽऽद्यो भागान्तरमबाधितुम् ॥
[174]'सर्वत्वमन्यभागीय भक्षणोऽत्र'[175] विधीयते ।
स्वभागीयं चोदकाप्त बाध्यतामन्यभक्षणम् " ॥ (जैन्या १० २ ५ ६)॥

कृष्णलभक्षण एवेदमपर श्रूयते – " सर्वं ब्रह्मणे परिहरति " इति । परिहार समर्पणम्। ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु कालेषु चत्वारो [176]भक्षणभागा चोदकप्राप्ता । [177]तत्र सर्वता[178] किं ब्रह्मसबन्धिचतुर्भागविषया, [179]उतेतरसबन्धिभागचतुष्टयविषयाऽपीति सदेह । अध्वर्युप्रभृतीनामृत्विजा ये ये चत्वारो भागास्तेषां बहूनामबाधनायाऽऽद्य [180]पक्षोऽभ्युपगन्तव्य । तत्रैषा वचनव्यक्ति – ब्रह्मसबन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्य इतरद्विधेय 'यद्ब्रह्मणे सर्वं तत्परिहरति, यद्ब्रह्मणे परिहरति तत्सर्वम्' इति । उभयथाऽपि [181]विधेर्ब्रह्मभागमात्रे पर्यवसानात् चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्तीति पूर्व पक्ष । सर्वत्वपरिहारावनूद्य ब्रह्मसबन्धोऽत्र विधीयते। यत् परिहर्तव्य सर्वं [182]तद्ब्रह्मण इति वचनव्यक्ति । तत्र ब्रह्मभागाणामितरभागाणा च यत्सर्वत्व तस्य ब्रह्मसबन्धे सति ब्रह्मभागाणा ब्रह्मसबन्धस्य चोदकादेव प्राप्तत्वात् [183]तत्रानर्थको विधि अन्यभागाना ब्रह्मसबन्धविधाने पर्यवस्यति। तस्मादन्येषा भक्षण बाध्यते ॥

तत्रैवान्यच्चिन्तितम् –

" [183]युगपत्स्वस्वकाले वा तत्सर्वं [183]भक्षयेदयम् ।
अविलम्बाद्याद्योऽन्त्यस्त त कालमबाधितुम् " ॥ (जैन्या १० २ ७)॥

अतीतेनाधिकरणद्वयेन युगपत्सर्वं ब्रह्मणे समर्पयेदित्युक्त तत्र भक्षयितु युगपत्समर्पितस्य सर्वस्य मध्ये कियदपि भक्षयित्वाऽवशेषितस्य विलम्बे कारणाभावाद्युगपदित्याद्य [184]पक्ष प्राप्नोति। चोदकप्राप्तस्य

---

१६८. अ उ पा – सकृत्सहत्व धेत्ययमेव। १६९. अ उ पा –कृष्णलशेषे। १७० अ उ ङ ने पा शृ हो१– चतुर्वारभक्षणं°। १७१ ङ ङ१ ने हो१– 'ते' नास्ति। १७२ ङ१– अत्र। १७३ अ उ पा ङ१ ने– स्वस्वकालस्यापि। १७४–१७५ अ उ पा– सर्वस्वमन्यभागाय प्रयोक्तृत्व ने-सर्वस्वमन्यभागीय ब्रह्मणेऽत्र, ङ-सर्वत्वमन्यभागीय ब्रह्मणा प्र° ङ१-स्वे सर्वत्वमन्यभागीय ब्रह्मणेति, क जो पा हा हो१– °य ब्रह्मणेऽत्र। १७५ हो१– भागा ङ ङ१– भागा, गृ भक्षभागा । १७६–१७६ ङ ङ१ ने हो१– सूक्तसमता । १७७ ने–उतेतरविषयसबन्धि°। १७८ ङ ङ१ ने गृ–पक्षोऽवगन्तव्य । १७९ ङ शृ हो१– विधिर्ने°। १८० अ उ ङ ङ१ ने पा गृ हा हो१– ब्रह्मण । १८१ ने–तस्यान°। १८२ शृ– °स्वस्य काले। १८३. ने– ब्रह्मणे वयम, ङ– ब्रह्मणे भक्षयेदयम्। १८४ अ उ ङ ने पा हो१–'पक्ष' नास्ति।

तत्तत्कालस्याबाधो विलम्बे हेतु । तस्मात् स्वस्वकाल [185]इत्यपर पक्षोऽभ्युपगन्तव्य ॥

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्–

" फल च नियम कर्ता सघ सौर्ये न वाऽग्रिम ।
प्रयाजवन्न विध्यादिविध्यन्ततत्वविभेदत "॥ (जैन्या ८ १ १६ )॥

इष्टौ फलादयश्चत्वार सन्ति। फल स्वर्ग । नियमो यावज्जीवकत्वम्। कर्ता स्वर्गकाम । सघ आग्नेयादीना षण्णा साहित्यम्। त एते चत्वार सौर्ये प्रयाजादिवदतिदेष्टव्या इति चेत्। न। वैषम्यात्। [186]प्रयाजादिराकाङ्क्षितविध्यन्तत्वादतिदिश्यते। विध्यादिस्तु नाऽऽकाङ्क्षित । 'सौर्यं चरु निर्वपेत्' इति मुख्यविधे प्रत्यक्षश्रवणात्। अन्यथा [187]विध्यन्तत्वेऽपि कस्याऽऽकाङ्क्षा वर्ण्येत। तस्मात् प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तेस्तत्सबद्धा फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते ॥

तत्रैवान्यच्चिन्तितम्–

" गोदोहनाद्यस्ति नो वा भवेत् प्रणयनाश्रयात्।
' अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते "॥ (जैन्या ८ १ १७ )॥

चमसेनाप प्रणयेद्गोदोहनेन पशुकामस्य" (द्र आपश्रौ १ १६ २) इति [188] दर्शपूर्णमासयो श्रुत [189] गोदोहन सौर्येऽप्यतिदेष्टव्यम्। कुत ? [190]तदाश्रयस्य प्रणयनस्य सद्भावादिति चेत्। मैवम्। क्रत्वङ्गतया चमस एव [191]प्रणयनसाधनमपेक्षित [192] न त्वनङ्ग [192] पुरुषार्थं गोदोहनम्। अत फलनियमादिवन्नातिदेश ॥

तत्रैवान्यच्चिन्तितम्–

"स्पर्शद्वय व्यवस्थाप्य विकल्प्य वा व्यवस्थिति ।
प्रकृताविव नो तत्र [193]तस्या शाब्दत्ववर्जनात्' ॥ (जैन्या ८ १ १८ )॥

दर्शपूर्णमासयोर्हविषा स्पर्शनद्वय [194]व्यवस्थितमन्त्रद्वयसाध्यमाम्नातम्—" चतुर्होत्रा [195]पौर्णमासीमभिमृशेत् पञ्चहोत्रा [196]अमावास्यायाम् " (आपश्रौ ४ ८ ८) इति। " पृथिवी होता " (तैआ ३ २) इत्यादिमन्त्रश्चतुर्होता। " अग्निर्होता " (तैआ ३ ३ ) इत्यादि मन्त्र पञ्चहोता। [197]तदेतदुभय सौर्ये चोदकप्राप्त सत् कालभेदेनानुष्ठानद्वये व्यवस्थापनीयम्। कुत ? प्रकृतौ पौर्णमास्यमावास्ययो [198]काल योर्भेदेन व्यवस्थितत्वादिति चेत्। न। प्रकृतौ व्यवस्थाया [199]आर्थिकत्वात्। [200]शाब्दस्यैवाङ्गत्वेनातिदेशार्हत्वात्। तस्मादुभय विकृताविच्छया विकल्प्यते ॥

तत्रैवान्यच्चिन्तितम्—

' षट्सु कस्याप्युताऽऽग्नेयस्यैव सौर्येऽग्रिमो यत ।
अविशेषो न देवैक्यादौषधद्रव्यकत्वत "॥ (जैन्या ८ १ १९ )॥

दर्शपूर्णमासगतेषु [201] षट्सु यागेषु [201] यस्य कस्यापि विध्यन्त सौर्ये कर्तव्य, अस्यैवेति विशेषनियामकस्याभावादिति चेत्। न। देवतैक्यस्य नियामकत्वात्। सौर्यशब्दगततद्धितप्रत्ययविग्रहस्य सूर्याग्नीति द्विवचनेनापि कर्तुं शक्यत्वात् [202]देवतैक्यम् [203]अनिश्चितमिति चेत्। न। [204]विधिशेषार्थवादोक्तौ

१८५ आ द द१ शृ– इत्यन्त्य । १८६ अ उ पा– °प्रयाजादिराकाङ्क्षे स विध्य° । १८७ आ क शृ –विध्यन्ते। १८८ अ उ– असगत्वा°। १८९–१८९ द द१– °मासगत। १९० हो१– तदाश्रयणीयस्य द ने– तदाश्रयगम्य। १९१ द द१ ने हो१– प्रणयनमपेक्षितम्। १९२–१९२ अ उ पा–'न त्वसङ्ग° द– तत्सङ्ग, आ क– न त्वङ्गम्। १९३ ने हो१– तस्याम्। १९४ अ उ जो ने पा हा–व्यवस्थितमन्त्रद्वय°, हो१–व्यवस्थितमन्त्रद्वय साध्य°। १९५ क जो द द१ ना शृ हो हा१– पौर्णमासीमभि°। १९६ क ना शृ–अमावास्याम्। १९७ आ– तदुभयम्। १९८ क–कालभेदेन। १९९ द ने हो१– सार्थकत्वात्, द१– सार्थकत्वात्। २०० अ उ पा– शब्दस्यैवा°। २०१–२०१ अ उ पा– 'षट्सु यागेषु' नास्ति। २०२ द द१ ने हो१– तदेवैक्यम्। २०३ द१ ने–अनुस्यूतमिति। २०४ द– °वादोक्त्या।

काम्येष्टियाज्यापुरोनुवाक्या ]

'अमुमेवाऽऽदित्यम्' इत्येकवचनेन तद्व्यपदेशात्। आग्नेयार्थवादेऽपि "सोऽग्नयेऽध्रियत" (तैस २६३) इत्येकवचनं व्यपदिष्टम्। अत आग्नेयस्यैव विध्यन्तो न त्वग्नीषोमीयैन्द्राग्नयोः। यद्यप्यैन्द्रयोर्दधिपयसो सांनाय्यत्व उपांशुयाजेऽपि देवतैक्यमस्ति तथाऽप्यौषधद्रव्यकत्वमाग्नेये विशेष्यते। तस्मात् तस्यैव विध्यन्तः॥

नवमाध्यायस्य द्वितीयपादे चिन्तितम्-

"सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवतौ।
न सर्वदेवतौ मंत्राविकारत्वान्न तत्र तौ"॥ (जैन्या ९२२६)॥

दर्शपूर्णमासयोः श्रूयते- "स्रुवेण [205]पार्वणौ जुहोति" (द्र. बौश्रौ ११७) इति। तत्र पर्वशब्दः कालविशेषवाची। तत्र कालदेवतौ तौ होमौ आराद्रुपकारकतया प्रयाजादिवत् सौर्यादिविकृतिष्वतिदिश्येते इति चेत्। मैवम्। पर्वशब्दस्याऽऽग्नेयादिकर्मत्रयपरत्वात्। दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नोऽयं पर्वशब्दः। [206]स च [206] [207]प्रीय(पूर्य)ते [208]दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालमाचष्टे। भावव्युत्पत्त्या तु क्रियापरः सन् प्रकरणवशादाग्नेयादिकर्मत्रयमाह। तथा च [209]मन्त्रवर्णोऽप्यनुगृहीतो भवति। "ऋषभं वाजिनं वयं पूर्णमासं यजामहे" (तैब्रा ३७५) इत्येको मन्त्रः। "अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना" (तैब्रा ३७५) इत्यपरो मन्त्रः। तत्राग्नीषोमवत् कर्मत्रयस्य व्यामक्तदेवतात्वम्। न च समस्तं विकृतिः सौर्यादि। किं त्वाग्नेयस्यैव। ततः सर्वार्थयोर्होमयोर्नास्ति सौर्यादौ प्राप्तिः॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्-

"सौर्ये चरौ चरः स्थाली किं [210]वाऽन्नं लौकिकोक्तितः।
[211]स्थाल्यस्याः श्रपणं [211] योग्यं कपालविकृतित्वतः॥
[212]विद्वत्श्रुतिप्रसिद्ध्याऽन्नं [213]देवतातद्धितोक्तितः।
[214]योग्यत्वेन [215] प्रदेयं तत्पुरोडाशहविर्यथा[215]"॥ (जैन्या १०११९२०)॥

"सौर्यं चरुं निर्वपेत्" (तैस २३२) इत्यादिवाक्ये चरुशब्दः [216]किं स्थालीं वक्ति, [217]आहोस्वित् ओदनमिति संदेहः। [218]तत्र लौकिका आ हिमवत आ च कुमारीभ्यः सर्वेऽपि [219]सर्वदेशीयस्वस्वभाषाप्रसिद्ध्या [220]यत्किंचिद्गकारवकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्दमल्पे पात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते। निघण्टुकाराश्च 'उखा स्थाली चरुः' इत्येतान् शब्दान् पर्यायत्वेन [221]उपदिशन्ति। तस्माच्चरुशब्दः स्थालीं वक्ति। यदि [222]तस्या अदनीयत्वाभावेन पुरोडाशवत् प्रदानयोग्यता न स्यात् तर्हि मा भूत् पुरोडाशविकृतित्वं, पुरोडाशाधिष्ठानकपालविकृतित्वं तु भविष्यति, श्रपणयोग्यतायाः सद्भावात्। यथा कपालेषु हविः [223]श्रप्यते तथा स्थाल्यामपि श्रपयितुं शक्यते। तस्माच्चरुः स्थालीति प्राप्ते ब्रूमः — अन्नमेव चरुशब्देनोच्यते। कुतः? श्रुतिप्रसिद्धेः। "आदित्यः प्रायणीयश्चरुः" (द्र ऐब्रा १७) इति विधाय तद्वाक्यशेषे हि "अदितिमोदनेन" इत्योदनशब्देन चरुरनूद्यते। यदि भोज्यान्न

२०५ ने हो१-पार्वणहोमौ, ड-पार्वणौ होमौ। २०६-२०६ ने-अत। २०७ ड१-क्रियते, हो१-प्रीयते। २०८. ने-'दीयते' नास्ति। २०९. ओ ना हा-°प्यनुसगृहीत। २१० ड-वा स्यात्। २११-२११ ने-स्थाल्या श्रपणस्योग्यम्, ड१-स्थाल्या श्रपणयोग्यम्। २१२ ग्रु-विद्वत्छ्रुति°। २१३ उ ओ पा हा-दैवत तद्धि°। २१४ अ उ ड पा हो१-यागत्वेन। २१५-२१५ ड१-प्रदीयन्ते पुरो°। २१६ भ्र-'किं' नास्ति। २१७ क हा-उत। २१८ क हा-तत्र च। २१९. अ उ पा-सर्वदेशीयभाषा°, ड ने हो१-स्वस्वदेशीयभाषा°, ग्र-स्वस्वदेशीयभाषा°। २२० अ उ पा-°वकारमुपरि, क-°गकारचकाराद्यक्षरमुपरि, ने भ्र-°वकाराद्युपरि। २२१ ड ड१ ने भ्र हो१-पठन्ति। २२२. अ ड पा-स्थाल्या। २२३ ने-ध्रियते।

चरुशब्दः क्वापि न प्रयुज्यते तह्यौंदनविशेषवाची चरुशब्दोऽस्तु। तत्र विद्वत्प्रसिद्धेः। विद्वांसो [224]याज्ञिकाः शब्दैकगम्यधर्माधर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्यवन्तो [225]अनवस्रावितान्तरूष्मपक्वे जीवतण्डुले [226]विशदसिद्धे ओदने चरुशब्दं प्रयुञ्जते। सत्योदनवाचित्वे 'सौर्यम्' इति तद्धितोऽप्युपपद्यते। यथा "आग्नेयम्" इति [227]देवतालद्धितसंयुक्तपुरोडाशः प्रदेयद्रव्यं तथा चरुरपि। अन्ये च निघण्टुकारा "हव्यपाके चरुः पुमान्" ( अमरकोश २ ७ २२ ) इति पठन्ति। तस्माच्चरुशब्दोऽन्नवाची॥

तत्रैवान्यच्चिन्तितम्—

"चरुः कपाले पक्तव्यः क्वापि वा [228]उचितेऽथवा।
कपाले [229]चोदकप्राप्तेरनपूपत्वतः क्वचित्॥
स्थाल्यां [231]चरुत्वयोग्यत्वात् कपाले[230] योग्यता न हि।
चिन्ताद्वयफलं [231]त्वत्र पेषणादिनिवर्तनम्" ॥ ( जैम्या १० । २१-२२ )॥

विषयसंशयनिर्देशकं पूर्वार्धं स्पष्टार्थम्। यथा प्रकृतौ पुरोडाशस्य कपाले पाकस्तथा विकृतौ चरोरित्याद्यः पूर्वपक्षः। [232]पुरोडाशस्यापूपत्वात् कपालगतोष्मणा[232] पाकः संभवति। चरुस्त्वोदनत्वात् [233]उदकगतोष्मणा [234]पक्तव्यः। अतोऽप्राकृतकार्यत्वाच्चोदकप्राप्तिर्नास्तीति यद्युच्येत तर्हि अनपूपस्य चरोरुदकधारणयोग्ये कटाहघटादौ यत्र क्वापि पाकः इति द्वितीयः पूर्वपक्षः। निस्तुषाणां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाकः इति राद्धान्तः। पूर्वत्र चरुरोदन इति चिन्तितम्। "[235]न ह्योदने[235] पेषणादिरस्ति। अतः पेषणादिनिवृत्तिः पूर्वचिन्तायाः साक्षात् फलम्। तद्द्वारेण चरुनिष्पादकस्थालीचिन्ताया अपि [236]फलमित्युपचर्यते॥

[237]पेषणादीन्यनुक्रामति —

"पेषणं यवनं वापस्तापश्चोपहितिः प्रथा।
मार्जनाभ्यूहनज्वालास्तथा व्युद्धृत्य सादनम्" ॥ ( जैम्या१० । २१ )॥

पेषणं चूर्णनं, यवनं पिष्टस्योदकमिश्रणं, वापः उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः, तापः कपालनामङ्गारैः प्रतापनम्, उपहितिरङ्गारेषु कपालस्थापनम्, [238]प्रथा कपालेष्ववस्थापितस्य [238] पुरोडाशस्य [239]हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणं, मार्जनं श्लक्ष्णीकरणम्, अभ्यूहनं भस्मनाङ्गारैश्चोपर्याच्छादनम्, ज्वालाः दर्भपुञ्जीलैः [240]उपरिज्वालनम्, व्युद्धृत्य सादनं [241]कपालेभ्यः पृथक्कृतस्य पुरोडाशस्यान्तर्वेद्यवस्थापनम्[241]। ननु पेषणादिनिवृत्तेः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकं सूत्रे विचारितवानित्याशङ्क्य मन्दमतिव्युदासायेत्याह—"एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः। [242]अपूपस्यैव योग्यानीत्येतद् सूत्रैर्निरूपितम्" ॥

---

२२४ ने होः– याज्ञिक°। २२५. ट१ न– अनास्रावितान्तरूष्मपक्व°। २२६. आ क– विशदसिद्धे। २२७ ना– देवतातद्धितसंयुक्त पुरोडाश, अ उ पा– देवता तथा तत्संयुक्त°। २२८ अ उ ओ ह१ ने पा हा– विहितेऽथवा। २२९. ट ह१ हा१– °रनूपत्वतः। २३०–२३० ना– चरोस्तु योग्यत्वात् कपाले, अ उ पा– चरुत्वयोग्यत्वात् कपाले। २३१ ने– तत्र। २३२–२३२ ने– °पूर्वत्वादेव कपालगतोष्मणा, ने– °पूपत्वात्°। २३३ न– उदका°। २३४ ने– पक्व। २३५–२३५ ने– न ह्योदने। २३६ ह१– °गुणादे। २३७ ह होः– °दीन्यनुक्रमति, ने– °णादिकमनुक्रमति। २३८–२३८ न– प्रथा कपालेष्ववस्थापितस्य, हा१– प्रथा कपालेष्ववस्थापितस्य, ने– प्रथा कपालेष्ववस्थापितस्य। २३९ ने– हस्तसं°। २४० आ– उपरिज्वालनम्, ह१ पी हा१ – अन्तर्ज्वालनम्, ने– उपज्वालनम्। २४१–२४१ ह ह१– कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यां स्थापनम्। २४२ ह१– अपूर्वस्यैव।

काम्येष्टियाज्यापुरोनुवाक्या ]

तत्रैव चतुर्थपादे चिन्तितम्—

"सौर्यादिनिगमे कोऽपि शब्द स्यात्द्वैध एव वा।
चरौ[243]सूर्यान्वयादाद्य प्रयोगान्वयतोऽन्तिम "॥ (जैन्या १० ४ २३)॥

"सौर्यं चरु निर्वपेत्" (तैस २ ३ २) इत्यादिविकृतिषु चोदकातिदिष्टा ये निगमा तेष्वग्न्यादिशब्दस्थाने सूर्याद्यर्थप्रत्यायक. शब्द [244]अहितव्य । स चार्थ आदित्यरव्यादिना पर्यायेणापि प्रत्याययितु शक्यते। वैधस्तु सूर्यशब्द [245]चरयागे एवान्वित, न त्वग्न्यादिशब्दवन्निगमेषु पठित । तस्मात् य कोऽपीति प्राप्ते ब्रूम । अत्र "सौर्यं चरु निर्वपेत्" (तैस २ ३ २) इति प्रयोगवचनेन सूर्यान्वयो भवति, न तु [246]सौर्यं चरुमिति-[246] चरुणा। कारकविभक्तिर्हि द्वितीया। सा चाऽऽख्यातेन सबध्यते न नाम्ना। सति च प्रयोगान्वये याज्यापुरोनुवाक्ययोर्निगमेषु वा [247]यत्र यत्र [247]प्रयोगोऽपेक्षितस्तत्र सर्वत्र सूर्यशब्द एव युक्त । प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाऽग्निशब्द प्रयुज्यते, किं तर्हि? [248]वैधशब्द-विवक्षयाऽपि। तथा सत्यतिदेशोऽपि वैधशब्दविषय एव भविष्यति। तस्मात् सूर्यशब्द एव प्रयोक्तव्य ॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"आरम्भणीया सौर्यादौ नोत स्यात्र प्रयोगवत्।
क्रत्वर्था न [249]प्रयोगार्था नत्वारम्भे ततो भवेत्"॥ (जैन्या १२ २ ६)॥

दर्शपूर्णमासयो प्रथमप्रयोगस्यैवोपक्रम आरम्भणीया न प्रयोगान्तरस्येति नवमे (जैन्या ९ १ १५) निर्णीतम्। आदौ कृतस्य [250]कर्तृसंस्कारस्य यावज्जीवपर्याप्तत्वाद्यथा न प्रयोगान्तर आरम्भणीयापेक्षा, तथा [251]यावज्जीवप्रकृतिकालमध्यपातिनीना सौर्यादिविकृतीना नास्ति तदपेक्षेति प्राप्ते ब्रूम – "दर्शपूर्णमासावारप्स्यमान" (द्र मैस १ ४ १४) इत्युक्तत्वात् क्रत्वर्थेयमारम्भणीया, न तु प्रयोगार्था। क्रत्वन्तराणि हि सौर्यादीनि। तत [252]प्रयोगान्तरवैषम्यात् सौर्यादौ सा कर्तव्या। न च यावज्जीवकाल प्रकृत्यङ्ग, कर्तृधर्मत्वेन द्वितीये (जैन्या २ ४ १ २) [253]वर्णितत्वात्। अतो नोक्तरक्षोऽनन्यायोऽत्र प्रसरति। तस्मान्नास्त्यत्र प्रसङ्ग ।

[254]तृतीयाध्याये चतुर्थपादे चिन्तितम्—

"सोमवामिचरुर्लोके वेदे [255]वेन्द्रियसक्षय ।
दृष्टदोषो लौकिकेऽतो वमने विहितश्चरु ॥
अदोषो वमनायैव लोके [256]पान श्रुतौ [256]पुन ।
[257]जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरु "॥ (जैन्या ३ ४ ३१ ३२)॥

---

२४३ अ उ पा – सूर्याश्रयादाद्य । २४४ ने–कर्तव्य । २४५ क उ ड१ ना भृ हो१–चरुयागे। २४६–२४६ क ड– सौर्यश्चरुरिति। २४७–२४७ क ड१–यत्र। २४८ ड१ हो१–वेदशब्द°। २४९. ड ड१ हो१–प्रयोगार्थम्। २५० ड१–कर्तुं सस्का°। २५१ ड१–यावतज्जीवलक्ष-णप्रकृति°। २५२ क हा–प्रयोगान्तरे वैष°। २५३ भृ हो१–निर्णीतत्वात्। २५४ ड१–तृतीयाध्यायस्य। २५५ ड१ ने–°सक्षया। २५६–२५६ अ उ पा हा–पाठात् श्रुतौ, ड१ ने भृ हो१– पानात् श्रुतौ। २५७ अ उ पा–करणाय हो१–जननाय।

ता अस्मै पुनरददात् तासाᳪं रोहिणीमेवोपै(१)त् तं यक्ष्म आर्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्यो-ऽविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति

ता । अस्मै । पुनः । अददात् । तासाम् । रोहिणीम् । एव । उपेति (१) । ऐत् । तम् । यक्ष्मः । आर्छत् । राजानम् । यक्ष्मः । आरत् । इति । तत् । राजयक्ष्मस्येति राज-यक्ष्मस्य । जन्म । यत् । पापीयान् । अभवत् । तत् । पापयक्ष्मस्येति पाप-यक्ष्मस्य । यत् । जायाभ्य । अविन्दत् । तत् । जायेन्यस्य । य । एवम् । एतेषाम् । यक्ष्माणाम् । जन्म । वेद । न । एनम् । एते । यक्ष्मा । विन्दन्ति ।

समावच्छ उप एष्यामि इति एव शपथ क्रियताम् । अथ एतास्तुभ्य पुन दास्यामि इति । समादानतुप् स्वार्थिक । सममित्यर्थ । तत "सङ्ख्यैकवचनात्०" (पा ५ ४ ४३) इति शस क्रियाविशेषणत्वात् कर्मत्वम् । सर्वेष्वपि अह सु सममेवेता सर्वा उपेष्यामीत्यर्थ । स सोम तथा अकरोत्, प्रजापतिश्च पुन अददात् । अथ सोम पुनरपि तासा मध्ये रोहिणीम् एव उप ऐत् । अथ सत्यातिक्रमात् त सोम यक्ष्म क्षयरोग आर्तमकरोत् । यक्ष पूजायाम्, औणादिको मन्प्रत्यय । रोगोत्तमत्व पूजा । राजानमित्यादि । राज्ञो यक्ष्म राजयक्ष्म इति ।

अयन्ती मेघयन्ती वर्षयन्ती चुपुणीका" (तैस ४ ४ ५) इत्येवमाम्नाता सप्त कृत्तिका । अवशिष्टा अश्विन्यादय षड्विंशतिस्तारका । ता एता त्रयस्त्रिंशत् । तत्र रोहिण्यव्यतिरिक्ता ईर्ष्यन्ती तदीय सुखमसहमाना पुन प्रजापतिम् अगच्छन् । सोम ता अनुगम्य प्रजापतिं याचितवान् । स प्रजापति एवम् अब्रवीत् शपथ प्रतिपद्यस्व तत् यथा समावच्छ साम्येनैता उपैष्यामि इति, ततस्ता पुन दास्यामि इति । स च सोम शपथ कृत्वा ता स्वीकृत्य शपथम् उल्लङ्घ्य पूर्ववत रोहिणीम् एव उपैत् । तत स यक्ष्मव्याधिगृहीतोऽभूत् । तत राजान यक्ष्म प्राप्तवान् इति व्युत्पत्त्या राज यक्ष्मनाम्नो व्याधे जन्म सपन्नम् । यस्मादय सोम पापीयान् तस्मादेतन्नाम्ना पापयक्ष्मस्य जन्म सपन्नम् । यस्मात् जायाभ्य निमित्तभूताभ्यो व्याधिमलभत तस्मात् जायेन्यनामकस्य व्याधेर्जन्म सपन्नम् ।

३ त१ त२ मै- अदात् । ४ त१ त२ ल- 'पुनरपि' नास्ति ।

४ आ क- साम्येन ता । ५ जो ना हा- सोम पुन । ६-६ शृ- उपेत्य क्षयव्याधिग्रस्तो ऽभूत्, ख- उपेत्य क्षयव्याधिसहितोऽभूत् ने हो- एत्य च क्षयव्याधिग्रस्तोऽभूत्, ड जो ना हा- °व्याधिग्रस्तो बभव । ७ ने- व्याधिरभवत् ।

स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एत(२)मादित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन् यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति

सः। एताः। एव। नमस्यन्। उपेति। अधावत्। ताः। अब्रुवन्। वरम्। वृणामहै। समावच्छ इति समावत्-शः। एव। न। उपेति। अय। इति। तस्मै। एतम् (२)। आदित्यम्। चरुम्। निरिति। अवपन्। तेन। एव। एनम्। पापात्। स्रामात्। अमुञ्चन्। यः। पापयक्ष्मगृहीत इति पापयक्ष्म-गृहीतः। स्यात्। तस्मै। एतम्। आदित्यम्। चरुम्। निरिति। वपेत्। आदित्यान्। एव। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति।

पापीयानिति। पुरुषान्तरयक्ष्मात् पापतरत्वात् पापश्चासौ यक्ष्मश्चेति। जायाम्य इति। "तत आगत" (पा ४·३·७४) इति छान्दस एन्यः। य एवमिति। एकस्यैव यक्ष्मस्य निमित्तभेदेन त्रित्वमुपचर्यते। विन्दन्तीति। बाधितु न लभन्ते। अथ सोम प्रजापतिं मुक्त्वा 'एता जायाः 'एव 'नमस्यन् पूजयन् 'उप 'अधावत् आर्तोऽस्मि प्रसीदन्तु भवत्य इति। अथ 'ताः 'अब्रुवन् 'वर 'वृणामहै समम् 'एव चास्मान् 'उपाय उपगच्छ 'इति, तुल्यप्रतिपत्तयो वय स्यामेति। इत्थमिद

[8]ते एते त्रयो [9]क्षयव्याधेरवान्तरविशेषाः। तज्जन्मवेदिनो व्याधेरलाभः फलम्। ततः सोमेन नमस्कृता. [10]सेविताश्चैता. सर्वाः साम्येनोपगमनं 'वरं वृत्वा व्याधिपरिहाराय 'चरुं निरुप्य, सोमं तस्मात् 'पापात् 'स्रामात् [11]प्रबलात् रोगादमोचयन्॥

य इति॥ इदानीं विधत्ते– 'यः पापयक्ष्मगृहीत स्यात् तस्मा एतमादित्य चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापात् स्रामान्मुञ्चन्ति' इति॥ 'आदित्यान्' इत्यर्थवादे [12]श्रवणादस्य चरोरदितिर्देवता न भवति॥

अमावास्यायामिति॥ पौर्णमासीं वारयितुं विधत्ते– 'अमावास्याया निर्वपेदमुमेवैनमाप्यायमानमन्वा प्याययति' इति॥ अमावास्यायामतीतायां शुक्लप्रतिपदमारभ्य सोमस्य [13]कलाद्वयाऽऽप्यादनं भवति॥

८. ने हो१– 'ते' नास्ति। ९. आ,इ,–यक्ष्माधे°। १०. दृ– सेविताश्च ता; इ– सहिताश्च ता·, हो१–संहिताश्चैता.। ११. प्रनिरुधान्। १२. इ– श्रुतत्वादस्य। १३. अ पा– °द्वयाप्यागमनं।

त एवैनं पापात् स्रामान्मुञ्चन्त्यमावास्यायां निर्वपेदमुमेवैनमाप्यायमानमन्वा प्याययति नवोनवो भवति जायमान इति पुरोनुवाक्या भवत्यायुरेवास्मिन् ( ३ ) तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्याययति ॥ ५ ॥

[ एवोपैतमस्मिन् त्रयोदश च । ]

ते । एव । एनम् । पापात् । स्रामात् । मुञ्चन्ति । अमावास्यायामित्यमा - वास्यायाम् । निरिति । वपेत् । अमुम् । एव । एनम् । आप्यायमानमित्या - प्यायमानम् । अनु । एति । प्याययति । नवोनव इति नवः—नवः । भवति । जायमानः । इति । पुरोनुवाक्येति पुरः— अनुवाक्या । भवति । आयुः । एव । अस्मिन् ( ३ ) । तया । दधाति । यम् । आदित्याः । अꣳशुम् । आप्याययन्तीत्या - प्याययन्ति । इति । याज्या । एति । एव । एनम् । एतया । प्याययति ॥ ५ ॥

[ मैसं २.२.७, कासं ११.३ ]

करिष्यामीति सोमेनाभ्युपगते तस्मै आदित्यं चरुं निः अवपन् जायाः, तेन एव पापात् स्रामात् रोगात् एनम् अमुञ्चन् ॥

य इत्यादि ॥ गतम् । अमावास्यायामिति । शुक्लप्रतिपत्प्रभृति आप्यायते चन्द्रः, तम् अनु यजमानम् आ प्याययति ॥

एवैनमिति ॥ एतया एनम् आ प्याययति एव ।

इति द्वितीये तृतीये पञ्चमोऽनुवाकः ।

**नवोनव इति ॥** चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमाने ऋचौ विधत्ते—'नवोनवो भवति जायमान इति पुरोनुवाक्या भवत्यायुरेवास्मिन् तया दधाति यमादित्या अꣳशुमाप्याययन्तीति याज्यैवैनमेतया प्याययति' इति ॥ ते एते ऋचौ तत्रैव (तैसं २.४.१४) व्याख्यास्येते । प्रथमायामृच्यन्ते 'दीर्घमायुस्तिरति' इत्युक्तत्वात् तत्पाठेनाऽऽयुष्प्राप्तिः । अमावास्यायामादित्ये प्रविष्टानां चन्द्रकलानां पुनरादित्यादेव चन्द्रेण लब्धत्वाच्चन्द्रोत्कर्ष आदित्यस्यैवोत्कर्ष इति कृत्वा तस्या ऋच आदित्यचरावैयधिकरण्यम् । द्वितीयस्यामृचि 'आ प्याययन्ति' इति श्रवणात् तयर्चा यजमानस्याऽऽप्यायनं युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

५. तै१.तं२.मै.ल– 'एनम्' नास्ति ।

१४. ने.भं–प्रथमायां ऋचोऽन्ते ।

[ काण्ड इध्य

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमाँल्लोकानभ्यतिरिच्यातै तन्ममासदिति तदिमाँल्लोकानभ्यत्यरिच्यतेन्द्र॑ राजानमिन्द्रमधिराजमिन्द्र॑ स्वराजानं ततो वै स इमाँल्लोकाꣳस्त्रेधाऽदुहत् तत् त्रिधातोस्त्रिधातुत्वं

प्रजापतिरिति प्रजा - पतिः। देवेभ्यः। अन्नाद्यमित्यन्न - अद्यम्। व्यादिशदिति वि - आदिशत्। सः। अब्रवीत्। यत्। इमान्। लोकान्। अभीति। अतिरिच्याता इत्यति - रिच्यातै। तत्। मम। असत्। इति। तत्। इमान्। लोकान्। अभि। अतीति। अरिच्यत। इन्द्रम्। राजानम्। इन्द्रम्। अधिराजमित्यधि - राजम्। इन्द्रम्। स्वराजानमिति स्व - राजानम्। ततः। वै। सः। इमान्। लोकान्। त्रेधा। अदुहत्। तत्। त्रिधातोरिति त्रि - धातोः। त्रिधातुत्वमिति त्रिधातु त्वम्।

प्रजापतिर्देवेभ्य इत्यादि॥ व्यादिशत् पृथक्त्वेन व्यावृत्तमादिशत्, एकैकलोकविशेषावधिकमित्यर्थः। अथ देवाना तथा व्यादिश्य स अब्रवीत् प्रजापतिः, [1-]यत् अन्नाद्यम् इमान्[1] सर्वानपि लोकान् अभ्यतिरिच्यते अतिव्याप्य वर्तते [2]नैकैकलोकावधिकं भवति तत् मम असत् अस्तु। अतिरिच्यतेर्लेटि (पा ३.४.९४) आडागमः, "वैतोऽन्यत्र" (पा ३.४.९६) इत्यैत्वम्। आस्तेर्लेट्याडागम। तस्मात् इमान् लोकान् अभि अति अरिच्यत प्राजापत्यमैश्वर्यम्। किमस्मान् लोकानित्याह—[3]इन्द्र राजानम् इति [4]व्यादिशत्। तिस्र एतास्त्रिधातोर्देवता[4] लोकत्रयात्मिका। तत खलु त्रिधातुदेवताना त्रित्वात् प्रजापतिः लोकत्रयव्यापी, [5]व्याप्य तान् इमान्[5] लोकान् त्रेधा अदुहत् त्रिप्रकारमदुहत्। उत्तरोत्तरज्यायस्त्वात् त्रिप्रकारलोकत्रयात्मना आत्मीयमैश्वर्यं विभक्तवान्। तदित्यादि। त्रयो धातवो धनान्यस्मिन्निति त्रिधातु, त्रेधा धातव्यत्वात् पुरोडाशस्य। धातव्या वा पुरोडाशा धातव, त्रिधा भिन्नाः पुरोडाशा अस्मिन्निति। यद्वा— सर्वाधारलोकत्रयात्मकत्वात् त्रिधातु॥

इष्टिपञ्चगृहीतस्य पञ्चमे समुदीरिता॥

प्रजापतिरिति॥ षष्ठे स्वयमादनशक्तिकामस्येष्टि विधातुं प्रस्तौति— 'प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमाँल्लोकानभ्यतिरिच्यातै तन्ममासदिति तदिमाँल्लोकानभ्यत्यरिच्यतेन्द्र राजानमिन्द्रमधिराजमिन्द्र स्वराजानं ततो वै स इमाँल्लोकाꣳस्त्रेधाऽदुहत् तत् त्रिधातोस्त्रिधातुत्वम्' इति॥ प्रजापतिः स्वं भोग्यमन्नं देवेभ्यः विभज्य तवेदं तवेदमित्यादिशत्। तदादनं स्वीकर्तुं प्रवृत्तान् देवान् प्रत्येवम् अब्रवीत् यत् अन्नम् इमान् लोकान् अतिव्याप्यातिरिक्तं भवति तत् मम अस्तु इति। तत्

१-१. तैर- यदन्नाद्यमिदानीम्। २. ए- नैके लोकायधिकम्। ३. तै१.तैर. मै- 'व्यादिशत्' नास्ति। ४. तै१.तैर.मै- 'देवता:' नास्ति। ५-५. मै—व्याप्तानिमान्।

१ क- लोकानि व्यादिशत्। २. आ.क- तमादनं। ३. अ.उ पा- अतिव्याप्य°। ४-४ अ उ भो.ग.पा हा- तदन्नमन्नम्; क.क हो१- तदन्नमन्नमागतम्।

यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशं( १ )-मेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधि-राजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति

यम्। कामयेत। अन्नाद इत्यन्न-अदः। स्यात्। इति। तस्मै। एतम्। त्रिधातुमिति त्रि-धातुम्। निरिति। वपेत्। इन्द्राय। राज्ञे। पुरोडाशम् ( १ )। एकादशकपालमित्येकादश-कपालम्। इन्द्राय। अधिराजायेत्यधि-राजाय। इन्द्राय। स्वराज्ञ इति स्व-राज्ञे। अयम्। वै। इन्द्रः। राजा। अयम्। इन्द्रः। अधिराज इत्यधि-राजः। असौ। इन्द्रः। स्वराडिति स्व-राट्। इमान्। एव। लोकान्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। ते। एव। अस्मै। अन्नम्। प्रेति। यच्छन्ति। अन्नाद इत्यन्न-अदः। एव। भवति।

यमित्यादि ॥ गतम्। तत्राय प्रयोगः*— चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै निरुप्य हविष्कृता वाच विसृजते। समान कर्माऽऽधिवपनात्। अथाध्रुप्य गार्हपत्य एकादशोत्तानानि कपालान्युपदधाति। तेष्वेव त्रीन् पुरोडाशानधिश्रयति। प्रथममधिश्रित्य परितपनान्तं कृत्वा तस्मिन्नुत्तरं ततो ज्यायांसमधिश्रयति। पुनस्तदन्तं कर्म कृत्वा तस्मिन्नुत्तरं ततो ज्यायांसमधिश्रयतीति ॥

वक्ष्यमाणमक्षम्" इमान् लोकान् अभिध्याय्यातिरिक्तमासीत्। क इमे लोका इति तदुच्यते इन्द्रराजादि-शब्दाभिधेया एवेमे लोकाः, इन्द्रराजादीनां पृथिव्यादिलोकत्रयपालकत्वात्। एवमुक्त्वा सः प्रजापतिरिन्द्र-राजादीन् लोकान् त्रेधा अदुहत्। तेभ्यो लोकेभ्यस्त्रिविधं सारं गृहीतवानित्यर्थः। तदिदं सारं प्रजापतिः स्वप्रियत्वेन स्वीकृतवान् लोकातिरिक्तमन्नम्। यस्मात् त्रेधा दोहनमकरोत् तस्मात् त्रिधातुनाम्नो यागस्य त्रिधातुत्वं संपन्नम्। लोकेभ्यो दुग्धास्त्रयो धातवो भागा यस्मिन् यागे स यागस्त्रिधातुः ॥

यमिति ॥ अथ विधत्ते— 'यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वरा-डिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति यथा वत्सेन प्रत्तां गां दुह एवमेवेमाँल्लोकान् प्रत्तान् काममन्नाद्यं दुहे' इति। यं यजमानमुद्दिश्याध्वर्युः कामयेत अयं यजमानः अन्नादः स्यात् इति तस्मै यजमानायेयमिष्टिः। अयं भूलोकाधिपतिः इन्द्रः राजा। अयम् अन्त-

*(द्र. बौश्रौ १३.२८, आपश्रौ १९.२२.१-६)। ६. मै॰— परितपनान्तं कर्म। ७. तै१.तं२.मै.प॰—'कर्म' नास्ति।

यथा वत्सेन प्रत्तां गां दुह एवमेवेमाँल्लोकान् प्रत्तान् काममन्नाद्यं दुह उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय त्रयः पुरोडाशा भवन्ति त्रयं इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै

यथा। वत्सेन। प्रत्ताम्। गाम्। दुहे। एवम्। एव। इमान्। लोकान्। प्रत्तान्। कामम्। अन्नाद्यमित्यन्न-अद्यम्। दुहे। उत्तानेष्वित्युत्-तानेषु। कपालेषु। अधीति। श्रयति। अयातयामत्वायेत्ययातयाम-त्वाय। त्रयः। पुरोडाशाः। भवन्ति। त्रयः। इमे। लोकाः। एषाम्। लोकानाम्। आप्त्यै। उत्तरउत्तर इत्युत्तरः-उत्तरः। ज्यायान्। भवति। एवम्। इव। हि। इमे। लोकाः। समृद्ध्या इति सम्-ऋद्ध्यै।

यथेति॥ प्रत्ता प्रदातु क्षीरमारब्धाम्। आदिकर्मणि निष्ठा ( पा ३·४·७१ )। यथा वत्ससंसर्गेण बृहितोधोभारां दुहे दुग्धे। " लोपस्त आत्मनेपदेषु " ( पा ७·१·४१ ) इति तलोपः। एवम् एव इमान् लोकान् अनेन त्रिधातुना वत्सस्थानीयेन प्रत्तान् काम स्वाभिमतम् अन्नाद्य दुग्धे यजमानः॥

उत्तानेष्विति॥ गतम्। यातयामत्व गतरसत्वम्। त्रय इति। पुरोडाशत्रित्वेन लोकत्रयप्राप्तिः। उत्तरउत्तर इति। लोकानामुत्तरोत्तरज्यायस्त्वात् पुरोडाशानामपि उत्तरोत्तरज्यायस्त्व समृद्ध्यै भवति। सदृशयोगात् समृद्धिः॥

रिक्षलोकाधिपतिः इन्द्रः अधिराजः। असौ स्वर्गलोकाधिपतिः इन्द्रः [१५]स्वराट्। इमान् एव लोकान् लोकाधिपतीन् इन्द्रराजादीन् स्वेन भागधेयेन सेवते। यथा लोके वत्सेन [१६]वत्सचोषणेन प्रत्तां प्रस्नवनं प्रापितां गां [१७]जनो दोग्धि, एवम् एव इमान् लोकान् प्रत्तान् [१८]देवैरभिवर्धितान् प्राप्य स्वामीष्टम् अन्नाद्यं [१९]दोग्धि लभते[१९]॥

उत्तानेष्विति॥ अत्र यदुक्तं सूत्रकारेण– "अथैनं त्रिधातुमेकादशसूत्तानेषु कपालेष्वधिश्रयति। प्रथमं पुरोडाशमधिश्रित्य परितपनान्तं कृत्वा [२०]तस्मिन्नुत्तरं द्वितीयं ज्यायांसमधिश्रित्य तावदन्तमेव कृत्वा तस्मिन्नुत्तरं ज्यायांसमधिश्रयति। प्रचरणकाले दक्षिणार्धात् प्रथमां देवतां यजेत्। मध्यात् द्वितीयाम्। उत्तरार्धात् तृतीयाम्। सर्वेषामभिगमयन्नवद्यतीत्युक्तम्। प्राच्यां दिशि 'त्वमिन्द्र' इति तिस्र ऋचो अस्या-समन्वाह। प्रथमामनूच्य मध्यमया यजेत्। मध्यमामनूच्य [२१]उत्तमया यजेत। उत्तमामनूच्य प्रथमया यजेत्। एवं सर्वा याज्याः पुरोनुवाक्याश्च भवन्ति" ( आपश्रौसू १९·२१·२२–१९·२२·६ ) इति॥ तत्राधिश्रयणं विधत्ते– 'उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय' इति॥ प्रकृतावधोमुखानां कपालानामुपरि पुरोडाशानधिश्रयति। अत्रापि तथात्वे यातयामत्वं गतसारत्वं [२२]स्यात् तत्परिहारायोत्तानत्वम्॥

त्रय इति॥ पुरोडाशसंख्यां प्रशंसति– 'त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै' इति॥

८. मै१– °नयाप्तिः; गं– °त्रयस्याप्तिः; तै१, तै२ मे– °प्त्याप्तिः।

१५. अ, उ, जो, ट, ना, ने, पा, श, हा–स्वराजः। १६. ट– चोषणेन; ने– पीत्वा चोषणेन। १७. ड– नरः। १८. ने–°भिवर्धितान्। १९.–१९. अ, आ, जो, ना, पा, हा–लभो; ने–दोग्धि लभ्यो; हो१–दोग्धीति लभ्यो। २०. भा– तस्मिन्नुत्तरे द्वितीये। २१. शृ– अतोत्तमया। २२. अ, आ, उ, जो, ना, पा, हा– 'स्यात्' नास्ति।

सर्वेषामभिगमयन्नवं द्यत्यछंम्बट्कारं व्यत्यासमन्वाहानिर्दाहाय ॥ ६ ॥

[ पुरोडाश त्रय पङ्क्तिरक्षातिथ्र । ]

सर्वेषाम् । अभिगमयन्नित्यभि गमयन् । अवेति । द्यति । अछम्बट्कारमित्यछम्बट् कारम् ।
व्यत्यासमिति वि अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनिः–दाहाय ॥ ६ ॥

[ मैसं २२५ कास १०१० ]

सर्वेषामिति ॥ सर्वेषां पुरोडाशानाम् अभिगमयन् पार्श्वे गमनं कुर्वन् अव द्यति । यत्र प्रथमस्यावद्यति तत्पार्श्वे द्वितीयस्यापि, तत्पार्श्वे तृतीयस्य । एतदुक्तं [९]भवति– दक्षिणार्धात् प्रथमां देवतां यजेत्, मध्यात् द्वितीयाम्, उत्तरार्धात् तृतीयाम् इति । अछम्बट्कारम् [१०]अनार्तत्वं, एकस्मिन् भागे त्रयाणामवदाने त्रयमप्यार्तं स्यात् ।

व्यत्यासमिति ॥ व्यत्यासो विनिमयः । व्यत्यास व्यत्यस्य । णमुलि प्रत्ययात् पूर्वस्योदात्तत्वम् (पा ६·१·१९३) । "प्राच्यां दिशि त्वमिन्द्र" (तैस २.४ १४) इत्यादयः तिस्र ऋचः । तत्र प्रथमामनूच्य मध्यमया यजेत् प्रथमे, मध्यमामनूच्य उत्तमया यजेत् द्वितीये, उत्तमामनूच्य प्रथमया यजेत् तृतीये इति । एवं सर्वा याज्या पुरोऽनुवाक्याश्च भवन्ति । तद्यथा–'इन्द्राय राज्ञेऽनुब्रूहि' इत्युक्ते प्राच्या "दिशि त्वमिन्द्र" इति अनु आह पुरोनुवाक्याम्, "इन्द्रो जयाति न परा जयाते" (तैस २·४ १४) इति यजति । 'इन्द्रायाधिराजाय' इत्युक्ते "इन्द्रो जयाति न परा जयाते" इत्यन्वाह पुरोनुवाक्याम्, "अस्येदेव प्र रिरिचे" (तैस २·४ १४) इति यजति । 'इन्द्राय स्वराज्ञेऽनुब्रूहि' इत्युक्ते "अस्येदेव" इति पुरोनुवाक्यामन्वाह, "प्राच्यां दिशि त्वमिन्द्र" इति यजति । एवं क्रियमाणम् अनिर्दाहाय भवति । इतरथा हवींषि निर्दग्धानि विनाशितानि स्युः ॥          ॥ इति द्वितीये तृतीये षष्ठोऽनुवाकः ॥

उत्तरउत्तर इति ॥ ज्यायस्त्वं विधत्ते– 'उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोकाः समृद्ध्यै' इति ॥ भूलोकात् अन्तरिक्षं ज्यायः तस्मादपि स्वर्गो ज्यायान् ॥

सर्वेषामिति ॥ ऊर्ध्वाधोभावेन स्थितानां सर्वेषां पुरोडाशानाम् अंशमंशमभिलक्ष्य यथा युगपदेव हस्तप्राप्तिर्भवति तथाऽवदानं विधत्ते– 'सर्वेषामभिगमयन्नव द्यत्यछम्बट्कारम्' इति ॥ छम्बट्कारो वैयर्थ्यम् । एकस्यापि पुरोडाशस्य यथा वैयर्थ्यं न भवति तथेत्यर्थः ॥

व्यत्यासमिति ॥ याज्यानुवाक्यासु विपर्यासं विधत्ते– 'व्यत्यासमन्वाहानिर्दाहाय' इति ॥ अविनाशायेत्यर्थः । व्यत्यासाभावे सूचा स्थितत्वाद्वीपि विनश्येरन् एकैकस्य हविषः पृथग्याज्यानुवाक्ययोः संपादयितुमशक्यत्वात् । सूक्तोक्तप्रकारेण तु व्यत्यासेन पदृथ संपद्यन्त इति नास्ति हविर्नाशः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥

९. तै१,तै२– 'भवति' नास्ति । १०. तै१.तै२.मै४– अनार्तत्वाय ।

२३–२३. ने–'ज्यायस्त्वं विधत्ते' नास्ति । २४–२४. ड–अन्तरिक्षो ज्यायान्; ने–अन्तरिक्षलोको ज्यायान् । २५. ड.क ओ ना हा– स्थितानां । २६. आ क ड ने.मै.हो१–अंशमभिलक्ष्य । २७. ना– स्थितं । २८. ड ने–हविरविनाशाय । २९. ड ने हो१– नश्येरन् । ३०. ड– प्रथमयाज्यानु । ३१. ड–सूत्रकारोक्तप्रकारेण ।

देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽयन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत् तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत् तयैवास्मिन्निन्द्रियं वीर्यमदधाद्-

देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । तान् । देवान् । असुराः । अजयन् । ते । देवाः । पराजिग्याना इति परा-जिग्यानाः । असुराणाम् । वैश्यम् । उपेति । आयन् । तेभ्यः । इन्द्रियम् । वीर्यम् । अपेति । अक्रामत् । तत् । इन्द्रः । अचायत् । तत् । अनु । अपेति । अक्रामत् । तत् । अवरुधमित्यव-रुधम् । न । अशक्नोत् । तत् । अस्मात् । अभ्यर्ध इत्यभि-अर्धः । अचरत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तम् । एतया । सर्वपृष्ठयेति सर्व-पृष्ठया । अयाजयत् । तया । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । अदधात् ।

देवासुरा इत्यादि ॥ पराजिग्याना पराजय प्राप्तवन्त । "लिटः कानच्°" (पा ३ २·१०६), "सन्लिटोर्जे" (पा ७ ३·५७) इति कुत्वम् । वैश्य विट्त्व, विशः प्रजा किंकरादय । गुणवचनलक्षणः ष्यञ् (पा ५ १·१२४) । तेभ्य इति । वैश्य प्रतिपद्यमानेभ्य देवेभ्यस्तेषाम् इंद्रिय वीर्यं च अपाक्रामत् । इन्द्र. तत् श्रुत्वा तत् अनु देवसकाशात् अपाक्रामत् तदवरुरुत्सया । अथ तत् अवरोद्धु न अशक्नोत् । "शकि णमुल्कमुलौ" (पा ३·४·१२) इति कमुल् । तदस्मादित्यादि[1] । तत् तदा अस्मात् इन्द्रियात् वीर्याच्च अभ्यर्धः अर्धमभिगत न सर्वं, स्ववीर्येण अर्धं लब्ध्वा अचरत् इन्द्रः । अथार्धान्तरं लिप्समान प्रजापतिम् उप अधावत् । स चैन सर्वपृष्ठेष्ट्या अयाजयत् । सर्वाणि पृष्ठानि स्तोत्राणि रथन्तरबृहद्वैरूप-वैराजशाक्वररैवताख्यानि यस्यामिन्द्रविशेषणत्वेन सन्ति सा तथोक्ता । तयेत्यादि । गतम् ॥

[1]पष्टेऽन्नाद्यकामस्य त्रिधातुर्योग ईरितः ॥

देवासुरा इति ॥ [2]"अथेन्द्रियसामर्थ्यं शरीरसामर्थ्यं च कामयमानस्येष्टि"[2] विधातुं प्रस्तौति–'देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽयन् तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत् तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत् स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत् तयैवास्मिन्निन्द्रियं वीर्यमदधात्' इति ॥ 'पराजिग्याना. पराजयं प्राप्नुवन्तः 'देवा 'असुराणां संबन्धि 'वैश्यं प्राप्ता', विशो भावो वैश्यम् ; 'असुरैर्वशप्रजाः'[3] इत्यर्थः । तदानीं तेषां यदिन्द्रियसामर्थ्यं यच्छरीरसामर्थ्यं तदुभयं 'तेभ्यः देवेभ्यः 'अपाक्रामत् । 'इन्द्रः 'तत् विदित्वा

1. तै१.तै२.मै– तस्मादिति ।

1. इ– षष्ठ इन्नाद्यकामस्य । २–२. इ– अथेन्द्रियकामस्येष्टि । ३. इ.दो१– °ह्यपकर्षाभिप्रायं ।

य इन्द्रियकामो ( १ ) वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्निन्द्रियं वीर्यं दधति यदिन्द्राय राथंतराय निर्वपति यदेवाग्नेस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवाव रुन्द्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्त( २ )देवाव रुन्द्धे

य । इन्द्रियकाम इतीन्द्रिय-काम (१) । वीर्यकाम इति वीर्य काम । स्यात् । तम् । एतया । सर्वपृष्ठयेति सर्व-पृष्ठया । याजयेत् । एता । एव । देवता । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । ता । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । दधति । यत् । इन्द्राय । राथंतरायेति राथं तराय । निर्वपतीति निः-वपति । यत् । एव । अग्नेः । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । बार्हताय । यत् । एव । इन्द्रस्य । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । वैरूपाय । यत् । एव । सवितुः । तेजः । तत् ( २ ) । एव । अवेति । रुन्द्धे ।

एता इति ॥ राथन्तरादीन्द्रविशेषान् । यदित्यादि । रथन्तरस्य पृष्ठसाम्नः सम्बन्धी राथन्तरः । उत्सादित्वादञ् ( पा ४ १ ८६ ) । एवं बार्हताय इत्यत्रापि । वैरूपादयोऽणन्ताः ॥

यदेवाग्नेरित्यादि ॥ रथन्तरस्याग्निभक्तत्वात् । यथा—"तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तरं साम" ( तैस ७ १ १ ) । एवं सर्वत्र द्रष्टव्यम् ॥

तत् सामर्थ्यद्वयम् अनु [4]स्वयमपि अवरोद्धुम् अपाक्रामत् । गत्वा च, तत् अवरोद्धुं न अशक्नोत् । तदानीमिन्द्रः अस्मात् सामर्थ्यद्वयादभिप्राप्त्यर्थं सन् अचरत् । तत इतरार्धप्राप्त्यर्थं प्रजापतिम् उपसेव्य सर्वपृष्ठयेष्ट्या सम्पूर्णं प्राप्तवान् । रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यानि सर्वाणि पृष्ठस्तोत्राणि तैर्युक्त इन्द्रोऽत्र देवता । तस्मादियमिष्टिः सर्वपृष्ठा । नात्र स्तोत्रपाठः प्रयोक्तव्यः, किंतु स्तोत्राभिज्ञत्वं देवताया विशेषणम् ॥

य इति ॥ इदानीं विधत्ते—'य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्निन्द्रियं वीर्यं दधति' इति ॥

यदिति ॥ [5]राथन्तरत्वादिगुणविशिष्टा [6]यदिन्द्रविशेषाः, एता [7]एव देवता इत्युच्यन्ते । [8]तान् देवताविशेषान् विधत्ते—'यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवाव रुन्द्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्द्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवाव रुन्द्ध एतावन्ति वै तेजाꣳसि तान्येवाव रुन्द्धे' इति ॥ पृष्ठस्तोत्रनिष्पादकं रथन्तरं साम वेत्तीति राथन्तरः । एवं बार्हतादिषु योज्यम् । अग्नीन्द्रादीनां [9]रथन्तरादिसामाभिमानित्वात् राथन्तरत्वादिविशेषणैस्तदीयतेजःप्राप्तिर्भवति ॥

४ क—स्वयमरुध । ५ आ ड—राथंतरादि° । ६ गृ—यदिन्द्रदेवविशेषा । ७ गृ—'एव' नास्ति । ८ ड हो १—एतान् । ९ अ उ पा—रथन्तरादीनामभि° ।

यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्द्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्द्धे यदिन्द्राय रैवताय यदेव बृहस्पतेस्तेजस्तदेवाव रुन्द्ध एतावन्ति वै तेजांसि तान्येवाव रुन्द्ध उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय द्वादशकपालः पुरोडाशो (३) भवति वैश्वदेवत्वाय समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति

यत् । इन्द्राय । वैराजाय । यत् । एव । धातुः । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । शाक्वराय । यत् । एव । मरुताम् । तेजः । तत् । एव । अवेति । रुन्द्धे । यत् । इन्द्राय । रैवताय । यत् । एव । बृहस्पतेः । तेजः । तत् । एव । अवेति । रुन्द्धे । एतावन्ति । वै । तेजांसि । तानि । एव । अवेति । रुन्द्धे । उत्तानेष्वित्युत् - तानेषु । कपालेषु । अधीति । श्रयति । अयातयामत्वायेत्ययातयाम - त्वाय । द्वादशकपाल इति द्वादश - कपालः । पुरोडाशः (३) । भवति । वैश्वदेवत्वायेति वैश्वदेव - त्वाय । समन्तमिति सम् - अन्तम् । पर्यवद्यतीति परि-अवद्यति । समन्तमिति सम् - अन्तम् । एव । इन्द्रियम् । वीर्यम् । यजमाने । दधाति ।

उत्तानेष्वित्यादि ॥ व्याख्यातम् । तत्राय *प्रयोग – इन्द्राय राथन्तराय चतुरो मुष्टीन् व्रीहीणां निरुप्य पुनरपि [७]बार्हतायै एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निरुप्य हविष्कृता वाच विसृज्य गार्हपत्ये द्वादशोत्तानानि कपालान्युपधायाधिश्रयतीति ॥

द्वादशकपाल इति ॥ एकः [ᵛ]पुरोडाशः [ᵛ]द्वादशकपालः कार्यः, [ᵛ]वैश्वदेवत्वाय, द्वादशकपालस्य विश्वेदेवसंबन्धित्वात् । समन्तमिति ॥ पूर्वार्धादारभ्य प्रदक्षिणमुत्तरापवर्गं परितोऽवद्यति ॥

उत्तानेष्विति ॥ पूर्वोक्तनिधानाविव विशेषं विधत्ते– 'उत्तानेषु कपालेष्वधि श्रयत्ययातयामत्वाय' इति ॥

द्वादशकपाल इति ॥ अथ निर्वापविधिभेदात् पुरोडाशषट्कप्राप्तेः [१०]तदपवादार्थमेकत्वं विधत्ते– 'द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय' इति ॥ अन्यत्र–"वैश्वदेवं द्वादशकपालं ग्रामकामः" ( तैस २.३.११, द्र. तैसं २.२.५ ) इत्यादिविधानात् कपालगतद्वादशसंख्या विश्वेषां देवानां प्रिया । अतोऽत्रापि यथोक्तगुणविशिष्टानां विश्वेषामिन्द्रादिदेवानां प्रीतिर्भवति ॥

समन्तमिति ॥ यदुक्तं सूत्रकारेण– "सर्वपृष्ठां निर्वपति । यदिन्द्राय राथन्तरायेति यथासमाम्नातं द्वादशसूत्तानेषु कपालेष्वधिश्रयति । प्रचरणकाले पूर्वार्धात् प्रथमां देवतां यजति । एवमितराः प्रदक्षिणमुत्तरापवर्गम् । समन्तं पर्यवद्यतीत्युक्तम् । अभि त्वा शूर नोनुम इति पृष्ठ्यो व्याममन्वाह" ( आपश्रौ १९.२२.७-१२ ), "कदा चन [११]स्तरीरसीत्यासां चतुर्थी" दधाति" ( आपश्रौ १९.२३.२ ) इति च । तत्र 'पूर्वार्धात्' इत्यादिनोक्तं सर्वतोऽवदानं विधत्ते– 'समन्तं पर्यवद्यति समन्तमेवेन्द्रियं वीर्यं यजमाने दधाति' इति ॥

---

*( बौश्रौ १३.२९ ) । ७. तो१.तै२.पं२.ग– बार्हतायै; मै८– बार्हतादिभ्यः ।

१०. ड–तदपवादार्थं, ऊं.ना. हा–र्थेकत्वं, अ.उ.पा– तदा एकत्वं । ११–[१] आ–स्तरीरसीति चतुर्थं ।

व्यत्यासमन्वाहानिर्दाहायाश्व ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृषत्वायैतयैव यजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः ॥ ७ ॥

[ इन्द्रियकाम सवितुस्तेजस्त्पुरोडाशोऽष्टात्रिंशच्च । ]

व्यत्यासमिति वि अत्यासम् । अन्विति । आह । अनिर्दाहायेत्यनि–दाहाय । अश्वः । ऋषभः । वृष्णिः । बस्तः । सा । दक्षिणा । वृषत्वायेति वृष त्वाय । एतया । एव । यजेत । अभिशस्यमान इत्यभि शस्यमानः । एताः । च । इत् । वै । अस्य । देवताः । अन्नम् । अदन्ति । अदन्ति । उ । एव । अस्य । मनुष्याः ॥ ७ ॥

[ मैस २२१२　काम १०१० ]

व्यत्यासमिति ॥ "त्वामिद्धि हवामहे" (तैस २४१४) इति षड्चो व्यत्यस्य [४]अन्वाह । तद्यथा– 'इन्द्राय राथन्तरायानुब्रूहि' इत्युक्ते "अभि त्वा शूर नोनुम" (तैस २४१४) इत्यनूच्य "त्वामिद्धि हवामहे" इति यजति । 'इन्द्राय बार्हतायानुब्रूहि' इत्युक्ते "त्वामिद्धि हवामहे" इत्यनूच्य "यद् द्याव इन्द्र ते" (तैस २४१४) इति यजति । 'इन्द्राय वैरूपायानुब्रूहि' इत्युक्ते "यद् द्याव इन्द्र" इत्यनूच्य "पिबा सोममिन्द्र" (तैस २४१४) इति यजति । 'इन्द्राय वैराजायानुब्रूहि' इत्युक्ते "पिबा सोममिन्द्र" इत्यनूच्य "कदा चन स्तरीरसि" (तैस १४२२) इति यजति । 'इन्द्राय शाक्वरायानुब्रूहि' (तैस २४१४) इत्युक्ते "कदा चन स्तरीरसि" इत्यनूच्य "रेवतीर्नः सधमाद" (तैस २४१४) इति यजति । 'इन्द्राय रैवतायानुब्रूहि' इत्युक्ते "रेवतीर्नः सधमाद" इत्यनूच्य "अभि त्वा शूर नोनुम" (तैस २४१४) इति यजति ॥

अश्व इत्यादि ॥ अन्वाहार्यमासाद्य अश्वादीन् दक्षिणा दद्यात् । वृषत्वायेति । वृषत्वं सेक्तृत्वं वीर्यवत्त्वम् । एषा दानं [४]वृषत्वाय भवति यजमानस्य, सेक्तृत्वादेषाम् ॥

व्यत्यासमिति ॥ चतुर्थप्रपाठकस्यान्त्यानुवाके समाम्नास्यमानानाम्–"अभि त्वा शूर नोनुम" (तैस २४१४) इत्यादीनां पञ्चानामृचां, चतुर्थीत्वेन [१२]प्रक्षेप्स्यमाणाया "कदा चन स्तरीरसि" (तैस १४२२) इत्यस्याश्च पूर्वोक्तत्रिधातुन्यायेनैकैकस्याः पुरोनुवाक्यात्वं याज्यात्वं च विधत्ते– 'व्यत्यासमन्वाहानिर्दाहाय' इति ॥

अश्व इति ॥ चोदकप्राप्तामन्वाहार्यदक्षिणां बाधितुं विधत्ते– 'अश्व ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृषत्वाय' इति ॥ [१३]अविजातो पुमान् 'वृष्णिः' । [१४]अनजातो पुमान् 'बस्तः' । 'वृषत्वाय' पुंस्त्वाधिक्याय ॥

१२ क ग– प्रक्षिप्स्यमाणाया । १३ क– अविजात । १४ क– अजजात ।

अभिशस्यमान इति ॥ परिवादारोपेण दूषणमभिशस । एता'ऐदिति । एता देवता अस्य अन्नम् अदन्ति च इत्, अदन्ति एव अस्य अन्न मनुष्या, अभिशस्तत्वात् मुक्तो भोज्यान्न एव भवतीति यावत्। "उकारोऽपृक्त प्रकृत्या वकारोऽन्तरे" (तेप्रा ९ १६) इति संहिताया वकार आगम, "तन्वादीना छन्दसि बहुलम्" (पा ६ ४ ७७ वा १) इति संहितायाम् "उवड वा" ।

इति द्वितीये तृतीये सप्तमोऽनुवाक ।

---

एतयेति ॥ मिथ्यापवादपरिहारार्थं तामेवेष्टिं विधत्ते– 'एतयैव यजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्या' इति ॥ एता राथन्तरेन्द्रादयो देवता अस्य अन्न पुरोडाशरूप यदि अदन्ति तदानीं मनुष्या सर्वथाऽपि अदन्ति एव। "वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति" (तैउ १ ११) इत्यादौ शिष्यानुशासने शिष्यस्य मिथ्यापवादयुक्तेषु व्यवहारसंदेहे सति शिष्टाचारेण निर्णय आम्नात –"यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथा" (तैउ १ ११) इति। "यदा मनुष्येष्वपि शिष्टानामाचारो नियामक तदा" "देवतानामाचारो नियामक इति किमु "वक्तव्यमित्यभिप्रेत्य " 'अदन्त्युवेव' इत्यवधारितम्" ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम् –

"रथंतरादिभिर्भिन्ना इन्द्रास्तेषा न भिद्यते।
पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥
"भिद्यते कर्मणा भेदाच्चोदकं पृथगुक्तित ।
शेषस्य सकृतुल्यत्वात् तत्कार्यं सकृदिष्यताम्" ॥ (जैन्या ३ ५ ६ ७) ॥

"य इन्द्रियकामो वीर्यकाम स्यात् तमेतया सर्वपृष्ठया याजयेत्" (तैस २ ३ ७) इति विहिताया मिष्टौ षडिन्द्रा एव श्रूयन्ते–'इन्द्राय राथंतरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवताय' इति। तत्र स्वरूपेणैक 'अपि इन्द्र पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथंतरादिसाम्नां मध्येन विशेष्यमाण षोढा भिद्यते। तासां सर्वासामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते– "द्वादशकपाल पुरोडाशो भवति वैश्वदेवत्वाय' (तैस २ ३ ७) इति। तस्मिन् पुरोडाश "उक्तदेवतानां सर्वस्य पृथक्प्रदानाय तस्य प्रदेशेभ्योऽवदान श्रूयते– "समन्त पर्यवद्यति" (तैस २ ३ ७) इति। तत्र देवताभेदेन "प्रदानभेदेन च कर्मणा भेदे सति चोदक पृथगतिदेशात् स्विष्टकृदिडादि शेषकार्यं षट्कृत्व पृथक्कर्तव्यमिति चेत्। मैवम्। शेषस्यैकत्वेन तत्प्रतिपत्ते पृथक्त्वासंभवात्। तस्मात् "सकृदेव कार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाक ॥ ७ ॥

३ ११ तेर,मै– परिवदारोपणम्। ४-८ पं०– दरा न ते१ तर-उवड।

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन्चक्षुरदधाद्यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा

रजन । वै । कौणेय । क्रतुजितमिति क्रतु जितम् । जानकिम् । चक्षुर्वन्यमिति चक्षुः –वन्यम् । अयात् । तस्मै । एताम् । इष्टिम् । निरिति । अवपत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा कपालम् । तया । एव । अस्मिन् । चक्षुः । अदधात् । य । चक्षुष्काम इति चक्षुः –कामः । स्यात् । तस्मै । एताम् । इष्टिम् । निरिति । वपेत् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । सौर्यम् । चरुम् । अग्नये । भ्राजस्वते । पुरोडाशम् । अष्टाकपालमित्यष्टा - कपालम् । अग्ने । वै । चक्षुषा ।

रजनो वा इत्यादि ॥ 'रजन नाम कुणेरपत्यम् । "इतश्चानिञः" (पा ४ १·१२२) इति ढक् । 'क्रतुजित नाम जनकस्यापत्यम् 'अयात् प्राप्यत । कीदृशम् ? 'चक्षुर्वन्य चक्षुषो वनितार संभक्तार चक्षुष प्रदातारम् । छान्दस कर्तरि 'यन्यः । यद्वा - कुणिताक्ष कुणिर्निमीलाक्षः, तस्या पत्य 'कौणेय । पितुरक्षित्व्यापत्तिकथन पुत्रस्य व्यापन्नाक्षित्व द्योतयितुम् । पित्रा सरूपो हि सन् पुत्रो भवतीति । 'जानकिम् अयात् 'चक्षुषो लाभाय', चक्षुषो वनन सभजन चक्षुर्वन्य, तत् जानकिमयात् । याच्ञाकर्मा वा याति', चक्षुर्लाभ तमयाचतेति । चक्षुरेव वा वननीय चक्षुर्वन्य, तत् तमयाचतेति । भ्राजस्वान् दीप्तिमान् । उभयत आग्नेयावष्टाकपालौ पुरोडाशौ, मध्ये सौर्यश्चरुः ॥

अग्नेर्वै चक्षुषेति ॥ 'अग्ने' हेतोर्वैचक्षु प्रवर्तते तेनेत्यर्थः । विभक्तिव्यत्यये वा अग्निना 'चक्षुषा इति । एव 'सूर्यस्य इति ॥

सप्तमे सर्वपृष्ठोक्ता पर्यवसाभिधायी ॥

रजन इति ॥ अथाष्टमे चक्षुष्कामस्य त्रिहविष्कामिष्टिं विधातुं प्रस्तौति– 'रजनो वै कौणेय क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन्चक्षुरदधात्' इति ॥ रजननामकः कश्चित् कुणस्य क्रतुजिन्नामकं पुरुषम् 'अयात् प्राप्नोत् । 'रजनः कुणेः पुत्रः, क्रतुजित् जनकस्यापत्यं, स तु चक्षुर्वन्यमस्तौत् देवैर्वनन संभजनं तदर्हतीति चक्षुर्वन्यः, रोगोपहतौ दृष्टिसमाधानं याचन इत्यर्थः । ततो रजनस्तदर्थाय 'क्रतुजिते प्राप्य त्रिहविष्कमिष्टिं तस्यात्र प्रायच्छत् ॥

य इति ॥ विधत्ते– 'यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति सूर्यस्य देवा

१. तै– कुर्यात् । २–२ तै. तै.– चक्षुर्भाग ।

मनुष्या॑ वि ( १ ) प॑श्यन्ति सूर्य॑स्य दे॒वा अ॒ग्निं चै॒व सूर्यं॑ च॒ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ तावे॒वास्मि॒ञ्चक्षु॑र्धत्त॒श्चक्षु॑ष्मानेव भ॑वति॒ यदा॑ग्ने॒यौ भ॑वत॒श्चक्षु॑षी ए॒वास्मि॒न् तत् प्रति॑ दधाति॒ यत् सौ॒र्यो नासि॑कां॒ तेना॒भित॑ः सौर्य॑माग्ने॒यौ भ॑वत॒स्तस्मा॑द॒भितो॒ नासि॑कां॒ चक्षु॑षी॒ तस्मा॒न्नासि॑कया॒ चक्षु॑षी॒ विधृ॑ते

---

मनु॒ष्या॑। वीति॑ ( १ )। प॒श्यन्ति॒। सूर्य॑स्य। दे॒वाः। अ॒ग्निम्। च॒। ए॒व। सूर्य॑म्। च॒। स्वेन॑। भाग॒धेये॒नेति॑ भाग धेये॑न। उपेति॑। धा॒वति॒। तौ। ए॒व। अ॒स्मि॒न्। चक्षुः॑। ध॒त्तः। चक्षु॑ष्मान्। ए॒व। भ॒वति॒। यत्। आ॒ग्ने॒यौ। भव॑तः। चक्षु॑षी इति॑। ए॒व। अ॒स्मि॒न्। तत्। प्रतीति॑। द॒धाति॒। यत्। सौ॒र्यः। नासि॑काम्। तेन॑। अ॒भित॑ः। सौर्य॑म्। आ॒ग्ने॒यौ। भ॒वतः॑। तस्मा॑त्। अ॒भित॑ः। नासि॑काम्। चक्षु॑षी इति॑। तस्मा॑त्। नासि॑कया। चक्षु॑षी इति॑। विधृ॑ते॒ इति॒ वि-धृ॑ते।

---

यदाग्नेयाविति॥ यस्मादभित 'आग्नेयौ पुरोडाशौ 'भवत, तस्मादाग्नेये 'चक्षुषी 'अस्मिन् यजमाने निपन्नचक्षुषि 'प्रति 'दधाति पुन स्थापयति। 'यत् 'सौर्य मध्ये भवति 'नासिका 'तेन अस्मिन् प्रतिदधात्येव, नासिकया निधृते हि चक्षुषी पश्यत। अभित. सौर्यमिति। 'अभित उभयत आदावन्ते च सौर्यस्य। "अभित परित °" (पा-भा २ ३ २) इति द्वितीया। यस्मादत्र 'तस्मात् 'नासिकाम् 'अभित 'चक्षुषी, 'तस्मात् एव 'चक्षुषी 'नासिकया 'निधृते॥

अग्निं चैव सूर्यं च स्वेन भागधेयेनोप धावति तावेवास्मिञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति' इति॥ 'भानवतं 'दीप्त्याधिक्यमुक्तम्। उन्मेषनिमेषसद्भावान्मनुष्यदृष्टिरनित्या। अग्निश्च यदाचिज्ज्वलति यदाचिन् उप शाम्यति'। तस्मात् 'अनित्यत्वसाम्यलक्षणेन मनुष्यदृष्टेरग्नेश्च सम्बन्ध । देवाना त्वनिमिषत्वात् सूर्यप्रकाशवदिस्या सर्वदा दृष्टिरित्यस्ति तस्या 'सूर्यसम्बन्ध ॥

यदिति॥ आग्नेयद्वयमध्यवर्ति सौर्यं "चक्षुर्द्वयमध्यवर्तिनासिकासाम्येन" प्रशंसति— 'यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत् प्रति दधाति यत् सौर्यो नासिकां तेनाभित सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते' इति॥ तेनाऽऽग्नेयद्वयेनास्मिन् यजमाने चक्षुषी प्रतिष्ठा। "तत सौर्येण नासिकाया 'प्रतिष्ठा। 'नासिकया 'चक्षुषी 'विधृते परस्परमिश्रणाभावाय 'विविक्तस्थानिते। अत्राऽऽग्नेयस्य प्रयाज्या "उग्रो सुरथस्य राजा" (तैसं २ ४ १४) इति पुरोनुवाक्या "वि ज्योतिषा बृहता भात्यग्नि " (तैसं २ ४ १४) इति याज्या॥

समानीं इति॥ यजमानस्य सम्बन्धिजनस्य यत्किञ्चित्— 'समानी यजमानस्य भवत समानत हि चक्षु प्रपद्यते' इति॥ 'समानी स्थविरो॥

काम्या इष्टय ]

**समानी याज्यानुवाक्ये भवतः समानꣳ हि (२) चक्षुः समृद्ध्या उदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान् प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत् ॥ ८ ॥**

[ त्रि हर्यष्टात्रिꣳशतिश्च । ]

समानी इति । याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवत । समानम् । हि (२) । चक्षु । समृद्ध्या इति सम् ऋद्ध्यै । उदिति । उ । त्यम् । जातवेदसमिति जात वेदसम् । सप्त । त्वा । हरित । रथे । चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । इति । पिण्डान् । प्रेति । यच्छति । चक्षु । एव । अस्मै । प्रेति । यच्छति । यत् । एव । तस्य । तत् ॥ ८ ॥

[ मैस २ ३ ६, काम ११ १ ]

समानी इति ॥ 'समान हि चक्षु ' इति वचनात् चक्षु स्थानाययोराग्नेययो समाना समान्यौ समानरूपे याज्यानुवाक्ये भवत, "उदग्ने शुचयस्तव", "वि ज्योतिषा" (तैस २ ४ १४) इति । सौर्यस्य तु—"उदु त्य जातवेदसम्", "चित्र देवानाम्" (तैस २ ४ १४) इति । "केवलमामक°" (पा ४ १ ३०) इति समानशब्दात् ङीप्, "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् ॥

उदु त्यमित्यादि ॥ चतुर्धाकरणकाले सार्यात् त्रीन् पिण्डान् उद्धृत्य 'उदु त्यम्' इत्यादिभिर्मन्त्रै यजमानाय प्र यच्छति । स च प्राश्नातीति गम्यते । मन्त्रत्रयस्य सौर्यत्वात् सौर्यादेव उद्धृत्य प्रयच्छतीति । ननु चक्षुष्कामस्य किं पिण्डैरित्याह— चक्षु एव अस्मै सनासिकमिदानीं दीयते, न पिण्डत्रयमात्रम् । किं यत् किंचित् चक्षुर्देहाननुगुणमेव दीयते नेत्याह—यत् एव तस्य चक्षु तत् एव दीयते, न यत् किंचित् ॥

इति द्वितीये तृतीयेऽष्टमोऽनुवाक ॥

उदिति ॥ यदुक्त सूत्रकारेण— "चतुर्धाकरणकाले सौर्यात्त्रीन् पिण्डानुद्धृत्योदु त्य जातवेदस, सप्त त्वा हरितो रथे, चित्र देवानामुदगादनीकमिति पिण्डान् यजमानाय प्रयच्छति । तान् यजमान प्राश्नाति" (आपश्रौ १९ २३ ४ ५) इति, तत्र त्रिभिर्मन्त्रै पिण्डदान विधत्ते— 'उदु त्य जातवेदसꣳ, सप्त त्वा हरितो रथे, चित्र देवानामुदगादनीकमिति पिण्डान् प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत्' इति ॥ 'उदु त्यम्', 'चित्र देवानाम्' इत्येतदुभय प्रथमकाण्डस्य चतुर्थप्रपाठके (तैस १ ४ ४३) समाम्नातम् । 'सप्त त्वा हरित ' इत्येषा तूपरितनस्य प्रपाठकस्यान्त्यानुवाके (तैस २ ४ १४) समाम्नातस्य व्याख्यातम् । 'सप्त त्वा हरित ' इत्येषा तस्य यजमानस्य रोगोत्पत्ते पुरा यत् एव चक्षु पाटवोपेतमासीत् तत् मातत्वात् तत्रैव व्याख्यास्यते । तस्य यजमानस्य पिण्डदानेन दत्तमेव भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाक ॥ ८ ॥

३ ल-'समान्यौ' नास्ति । ४-४ त१ तै२ मै१-°न्द्राग्नेये इति ।

९ ङ ड्रो हो१- तदेव । १० ङ ड्रो- दत्तवा ।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयास धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद् ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविदामनमस्यामनस्य देवा ये सजाताः॥ कुमाराः॥ समनसस्तानहं कामये हृदा ते मा

ध्रुव । असि । ध्रुव । अहम् । सजातेष्विति स जातेषु । भूयासम् । धीर । चेत्ता । वसुविदिति वसु - वित् । ध्रुव । असि । ध्रुव । अहम् । सजातेष्विति स - जातेषु । भूयासम् । उग्र । चेत्ता । वसुविदिति वसु वित् । ध्रुव । असि । ध्रुव । अहम् । सजातेष्विति स जातेषु । भूयासम् । अभिभूरित्यभि भू । चेत्ता । वसुविदिति वसु वित् । आमनमित्या मनम् । असि । आमनस्येत्या-मनस्य । देवा । ये । सजाता इति स जाता । कुमारा । समनस इति स मनस । तान् । अहम् । कामये । हृदा ।

अथ साग्रहिणीमिष्टिं विधास्यति ॥ तस्या परिधिपरिधानमन्त्रा एते– 'ध्रुवोऽसि' इत्याद्या, याजमानेषु (तैस १ ६ २) व्याख्यातप्राया । [v]ध्रुव नित्य [v]असि [v]अहम् अपि [v]सजातेषु [v]ध्रुव [v]भूयासम् । [v]धीर धारयिता [v]चेत्ता ज्ञाता [v]वसुवित् धनाना वा लब्धा च भूयासम् ॥ अथ द्वितीय – 'ध्रुवोऽसि' इत्यादि ॥ गतम् । [v]उग्र [1]उद्गूर्णायुध च, अथ[2] [v]चेत्ता च [v]वसुवित् च भूयासम् ॥ अथ तृतीय – 'ध्रुवोऽसि' इत्यादि ॥ गतम् ॥ [v]अभिभू अभिभविता शत्रूणा [v]चेत्ता [v]वसुवित् च भूयासम् इति ।

अथ तस्यामेन पुरस्तात् स्विष्टकृत उपहोमा – आमनमसि' इत्याद्या त्रय[3] ॥ एताश्च तिस्र पञ्चपदा पङ्क्तय । 'आमनमस्यामनस्य देवा ये सजाता समनस' इति प्रथमा । 'ये कुमारा

अष्टमे दृष्टिकामस्य त्रिहविष्केष्टिरीरिता ॥

ध्रुव इति ॥ अथ नवमे 'साग्रहणीष्टिं विधास्यन्नादौ चोदकप्राप्तान् "गन्धर्वोऽसि विश्वावसु" (तैस १ १ ११) इत्यादिकान् परिधिमन्त्रानपवदितु मन्त्रान्तराणि दर्शयति– 'ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयास धीरश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद्ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवित्' इति ॥ हे मध्यमपरिधे, त्वं [1]स्थिर [2]असि त्वदीयस्थापनेन [3]अहम् अपि ज्ञातिषु मध्ये स्थिर [4]भूयासम् । किं च धैर्यवानभिज्ञो [5]धनवांश्च भूयासम् । एवं दक्षिणोत्तरपरिधिमन्त्रयो [6]र्व्याख्या । ज्ञातीना प्रतिवादित्वराहित्याय [7]आज्ञाधारित्वमुग्रत्वम् । आज्ञामुल्लङ्घ्य प्रतिवादिनं [8]निरस्तुरत्व मभिभूत्वम् ॥

१–१ मै–उद्गूर्ण । २. मै– 'अथ' नास्ति ।

१ १ ना–शृ–ग्रामहर्ण । २ इ– ध्रुव । ३ हो१– धारयिता च ४– धन लब्धा च । ४ इ ग १,हो१– व्याप्यम् । ५ अ उ पा– अधरत्वमु° । ६ अ आ उ पा– तिरस्कृत्यम्, क जो इ ना हा हो– निरस्कृत्यम् ।

कामयन्ताऽ हृदा तान् म आमनसः कृधि स्वाहाऽऽमनमस्या(१)मनस्य देवा याः स्त्रियः समनसस्ता अहं कामये हृदा ता मा कामयन्ताऽ हृदा ता म आमनसः कृधि स्वाहा

ते। माम्। कामयन्ताम्। हृदा। तान्। मे। आमनस इत्या मनस। कृधि। स्वाहा। आमनमित्या मनम्। असि (१)। आमनस्येत्या मनस्य। देवाः। याः। स्त्रियः। समनस इति स मनस। ताः। अहम्। कामये। हृदा। ताः। माम्। कामयन्ताम्। हृदा। ताः। मे। आमनस इत्या-मनस। कृधि। स्वाहा।

इति द्वितीया। 'या स्त्रिय' इति तृतीया। तत्र 'आमनमसि' इत्यादिकं सर्वं द्वितीयेऽपि मन्त्रे विनियुज्यते। तृतीये तु मन्त्रलिङ्गाद्भेदात् सर्वं पुनराम्नायते एते। उपहोमाः साङ्ग्रहिण्या एवाङ्गभूता। आमनमिति च आमनकरं साङ्ग्रहिण्याख्यं कर्मोच्यते, हूयमानं वाऽऽज्यम्। अत्र सामर्थ्यात् समः समासे आकार आगतः। सङ्गृहीतं मनोऽस्मिन्निति आमनम्। छान्दसोऽन्त्यलोपः। यद्वा– आभिमुख्येन मननं करोतीत्यामनम्। पचाद्यच् (पा ३ १ १३४), छान्दसं पूर्वपदप्रकृतिस्वरत्वम्। पचाद्यजन्तेन वा प्रादिसमासः। ईदृशस्यास्य सम्बन्धिनो हे देवाः, यूयमपीदं श्रोतुम् अर्हथ यदामनं ब्रूमहे इति। देवेभ्य आवेद्य पुनरप्यामनमाह– ये सजाताः मया समानजन्मानः। कुमाराणां स्त्रीणां च वक्ष्यमाणत्वात् महान्तः पुमांस इति गम्यते। ब्राह्मणं च भविष्यति– 'एतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियः' इति। तत्र गोबदी

आमनमिति॥ परिधिमन्त्रानाम्नायोपहोममन्त्रान् पठति– 'आमनमस्यामनस्य देवा ये सजाता कुमाराः समनसस्तानहं कामये हृदा ते मा कामयन्ताऽ हृदा तान्म आमनसः कृधि स्वाहाऽऽमनमस्यामनस्य देवा या स्त्रियः समनसस्ता अहं कामये हृदा ता मा कामयन्ताऽ हृदा ता म आमनसः कृधि स्वाहा' इति॥ अत्र 'सजाता कुमाराः' इति पदभेदमवलम्ब्यावशिष्टानुषङ्गेण मन्त्रद्वयं द्रष्टव्यम्। सजातान् आकामयितुं मनुत इति आमनम्। हे हूयमानाज्य, त्वं तादृशम् असि। अत आमनस्य सजातान् आकामयितुं मन्वानस्य यजमानस्य ये सजाता ज्ञातिप्रभृतयः समनसः समनस्का अनुकूलाः सन्ति, हे देवाः, तान् सजातान् अहं हृदा चित्तेन कामये। ते च मा हृदा कामयन्ताम्। तान् सजातान् मे मदर्थम् आमनसः मामाकामयितुं मन्वानान् कुरु। इदमाज्यं स्वाहुतम्। एवं कुमारमन्त्रस्त्रीमन्त्रौ व्याख्येयौ॥

३ मै४– अनुषज्यते। ४-४ त१ त२ ल– 'तृतीये तु पुनराम्नायते' नास्ति। ५ मै– आमननकारणम्। ६ मै४– '°समास' इत्यस्यानन्तरम् 'ईदृश त्वमसि'। ७ त१ त२ मै ७– अर्हसि। ८ त१ त२ मै ले– पुंस।

७ अ इ उ जो पा ग्र हा– आकारयितुम्। ८ क जो ग हा– हे आमा। ९ अ उ जो पा ग्र हा– आकारयितुम्, इ– गो धारयितुम्। १० इ हो१– 'यजमानस्य' नास्ति। ११ इ हो१– समानमनस्का। १२ अ उ– मा तारयितुं पा– मामकारयितुं ग्र हो१– मामकारयितुं जो हा– मन्कार्यार्थं कारयितुं।

वैश्वदेवीꣳ साꣳग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति साꣳग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां ( २ ) गृह्णाति

वैश्वदेवीमिति वैश्व-देवीम्। साग्रहणीमिति सा-ग्रहणीम्। निरिति। वपेत्। ग्रामकाम इति ग्राम-काम। वैश्वदेवा इति वैश्व-देवा। वै। सजाता इति स-जाताः। विश्वान्। एव। देवान्। स्वेन। भागधेयेनेति भाग-धेयेन। उपेति। धावति। ते। एव। अस्मै। सजातानिति स-जातान्। प्रेति। यच्छन्ति। ग्रामी। एव। भवति। साग्रहणीति सा-ग्रहणी। भवति। मनोग्रहणमिति मनः-ग्रहणम्। वै। सुग्रहणमिति स-ग्रहणम्। मनः। एव। सजातानामिति स-जातानाम् ( २ )। गृह्णाति।

वर्दन्यायेन "प्रथमेन महता समानजातानां" ग्रहणम्। समनसः समानमनसः सगतमनसो वा ये सजाताः महान्तो मम समनस तान् अह कामये हृदा हृदयेन, समनस एव सदा कामये। ते अपि मा तादृशमेव कामयन्तां हृदा हृदयेन। अनुधानार्थं हृदयग्रहणम्। त्वमपि तान् आमनसः "आगतमनसः सगृहीतमनसः" कृधि कुरु। शपो लुकि "श्रुशृणुपृकृवृभ्य." (पा ६.४.१०२) इति धिभाव। स्वाहुतमिदं करोमीति ॥ अथ द्वितीय.—आमनमित्यादि ॥ बाल्ययौवनयोर्मध्ये वर्तमाना कुमारा। समानमन्यत्, स्वाहान्तम् ॥ अथ तृतीय— आमनमित्यादि ॥ सर्वं समानम्; स्त्रीलिङ्ग तु विशेषः ॥

इदानीमिष्टिं विदधाति— 'वैश्वदेवीम्' इत्यादि। मनस संग्रहणस्य हेतुत्वेन सर्वाग्निर्णी साग्रहणी इष्टिः। चरत्र श्रूयते ॥

वैश्वदेवीमिति ॥ इदानीमिष्टिं विधत्ते— 'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति' इति ॥ मनसा परस्परमेकत्वेन "सम्यक् स्वीकारः संग्रहणम्। तदस्यामिष्टावस्ति सा सांग्रहणी ॥

सांग्रहणीति ॥ तदेतदभिप्रेत्येष्टिविशेषणं प्रशंसति— 'सांग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां गृह्णाति' इति ॥ आत्मिमनस स्वाधीनत्वेन ग्रहणं "मनोग्रहणं, तदेव सांग्रहण- मित्युच्यते। तत सांग्रहणीष्टिः सजातानां मनः स्वाधीनं करोति ॥

१.-१. तै१ तै२ मै३ — प्रथमे महताम्। १०. स— 'स्वाहेति' इत्यस्यानन्तरं 'ते'। ११-११. ग— न(?)मनसः।

१३. ग१— 'मनस' नास्ति। १४ ग१ और— 'मनोग्रहणम्' नास्ति।

भ्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते परिधयः परिधीयन्ते

ध्रुवः। असि। ध्रुवः। अहम्। सजातेष्विति स जातेषु। भूयासम्। इति। परिधीनिति परि धीन्। परीति। दधाति। आशिषमित्या शिषम्। एव। एताम्। एति। शास्ते। अथो इति। एतत्। एव। सर्वम्। सजातेष्विति स-जातेषु। अधीति। भवति। यस्य। एवम्। विदुषः। एते। परिधय इति परि-धयः। परिधीयन्त इति परि धीयन्ते।

'ध्रुवोऽसि' इत्यादिना आम्नातानां मन्त्राणां विनियोगं दर्शयति। 'आशिषम्' इति 'ध्रुवो भूयासम्' इत्यादिकाम्। अथो अपि च सजातेषु मध्ये एतत् सर्वं भवति यत् ध्रुवश्च धीरश्च वसुविच्चमित्यादि। एतत् सर्वं यथा श्रूयते तथा भवति। [12]यद्वा– एतत् सर्वं प्राप्नोति। भू प्राप्तौ। न ग्रामप्राप्तिमात्रमेवेति[13] भावः। यस्य एवं विदुषः एतैर्मन्त्रैः एते परिधयः परिधीयन्ते॥

ध्रुव इति। आदावाम्नातान् मन्त्रान् विनियुङ्क्ते–'ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैव विदुष एते परिधयः परिधीयन्ते' इति॥ त्रिष्वपि मन्त्रेषु 'भूयासम्' इत्यभिधानादाशासनं गम्यते। किं च एवं विदुषः एतैर्मन्त्रैः परिधाने सति सजातेषु मध्ये मन्त्रैः प्रार्थितं सर्वमधिकं संपद्यते॥

आमनमिति॥ मन्त्रान्तराणि विनियुङ्क्ते– आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका या स्त्रियस्तानेवाव रुन्द्धे त एनमवरुद्धा उप तिष्ठन्ते' इति॥ अत्र 'सजाता' इत्यादिके मन्त्रभागे 'सुमनसः' इत्याद्युत्तरभागोऽनुषञ्जनीयः। 'कुमाराः' इत्यादिके मन्त्रभागे 'आमनमसि' इत्यादिमन्त्रपूर्वभागोऽनुषञ्जनीयः। तथा सति त्रिभिर्मन्त्रैराहुतित्रयं संपद्यते। स्वकुले स्वजातिषु मध्ये स्वग्रामे च ये महान्तः पुरुषाः प्रौढाः ये च क्षुल्लका बालाः याश्च पत्नीभगिनीमात्रादयः स्त्रियः एतावन्त एवापेक्षिताः सजाताः तान् अनयेष्ट्या स्वाधीनान् करोति। ते च जनाः स्वाधीना एव सन्तः एनं सेवन्ते॥

१२ तैर्, मै ल– 'यद्वा' नास्ति। १३ मै४– °प्राप्तिमेवेति।

१५ ड ग्रं हो१– तैर्मन्त्रैः।
१६ आ क ड ग्रं हो१– इत्यन्ते।
१७ अ आ उ क जो ना पा हा– इत्याद्युत्तभागो°।
१८ अ उ पा–°मन्त्रभागो°, क ड ग्रं हो१– इत्यादिपूर्वभागो°।
१९ ड– एभिर्मन्त्रै°, अ उ पा– प्रतिमन्त्रैः।
२०–२० ड ग्रं हो१–'स्वजातिषु मध्ये' नास्ति।
२१ ड– याः।
२२–२२ ग्रं हो१ ड– 'एव सन्तः' नास्ति।

आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवाव रुन्द्धे (३) त एनमवरुद्धा उप तिष्ठन्ते ॥ ९ ॥

[ स्वाहाऽऽमनमसि सजातानां॑ रुन्द्धे पञ्च च । ]

आमनमित्या-मनम् । असि । आमनस्येत्या - मनस्य । देवाः । इति । तिस्रः । आहुतीरित्या - हुतीः । जुहोति । एतावन्तः । वै । सजाता इति स - जाताः । ये । महान्तः । ये । क्षुल्लकाः । याः । स्त्रियः । तान् । एव । अवेति । रुन्द्धे (३) । ते । एनम् । अवरुद्धा इत्यव-रुद्धाः । उपेति । तिष्ठन्ते ॥९॥

[ मैसं २.३.२; कासं १२.२ ]

'आमनम्' इत्यादि स्विष्टकृतः पुरस्तात् [1]तिस्रः स्रुवाहुतीरुपजुहोति । [2]क्षुल्लकाः क्षुद्राः कुमाराः । [3]क्षुध क्लान्तीति *क्षुल्लकाः । कान्तात् कुत्सायां [4]'प्रागिवीयः कः'* ॥

तृतीये नवमोऽनुवाकः ॥

अत्र विनियोगसंग्रहः—

"सांग्रहण्यां तु परिधीन् परिधत्ते ध्रुवस्त्रयात् ।
[5]आमनेति त्रिभिस्तत्र उपहोमास्त्रयो मताः ॥
मन्त्रभेदः सजातेति कुमारेति पदद्वयात् ॥ १ ॥

अत्र मीमांसा ॥ दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आमनाहुतिभिर्बाध्या अनूयाजा न वाऽग्रिमः ।
[6]त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः " ॥ ( जैन्या १०.४.१० ) इति ॥

सांग्रहण्यिष्टौ श्रूयते– ' आमनमस्यामनस्य देवा ये सजाताः इति तिस्र आहुतीर्जुहोति " इति । एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनूयाजाः बाध्याः । कुतः ? त्रित्वलिङ्गात् । पूर्वाधिकरणे (१०.४.८.९) समुद्रतरंग्यादिविशिष्टप्राकृतपक्षभावेन मा भूद्बाध्यत्वम् । इह तु त्रित्वविशिष्टत्वादनूयाजा बाध्यन्ताम् । यद्वा- तदनुवादेन मन्त्रगुणविधानात् प्राकृतमन्त्रबाध इति पूर्वः पक्षः । किं त्रित्वमात्रमनूद्य मन्त्रसहिता आहुतयो विधीयन्ते, आहोस्वित् त्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः । आद्ये [7]त्रित्वमन्यादिष्वपि सत्येन नानूयाजलिङ्गम् । द्वितीये विशेषणविशेष्ययोर्द्वयोर्भेदेन वाक्यं भिद्येत । तस्मात् धर्मान्तरविधानान्न बाधः, किं तु समुच्चयः । तत्र मध्योक्तिर्लिङ्गम् । तथा चाऽऽम्नायते– " यत् प्रयाजानूयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद् बहिरात्मन् सजातानादधीत यन्मध्यतो जुहोति मध्यत एव सजातानात्मन् धत्ते " ( मैसं २.१.२ ) इति । तस्मादामनहोमानामनूयाजैः सह समुच्चयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत् सर्पिरभवद्यदध्रियत तद्घृतमभवदश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि

यत् । नवम् । ऐत् । तत् । नवनीतमिति नव-नीतम् । अभवत् । यत् । असर्पत् । तत् । सर्पिः । अभवत् । यत् । अध्रियत । तत् । घृतम् । अभवत् । अश्विनोः । प्राण इति प्र-अनः । असि । तस्य । ते । दत्ताम् । ययोः । प्राण इति प्र-अनः । असि ।

अथ "अग्निं वा एतस्य" ( तैसं २.३.११ ) इत्यादिपञ्चहविरिष्टिर्वक्ष्यते । तस्यामाज्यावेक्षण अनुवर्तयति– 'यन्नवमैत्' इत्यादि ॥ [v]यत् यस्मात् [v]नवम् [v]ऐत् नवमेव [v]उपलब्धि गच्छति उद्धृतमभवत् तस्मात् [v]नवनीतम् [v]अभवत् । नवनीतं गतम्[१] । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्( पा ६.२.४२ ) । यद्वा नव नीतमस्येति बहुव्रीहिः । यस्मात् [v]असर्पत् विसृतमभवत् तस्मात् सर्पणात् विसर्पणात् [v]सर्पिः [v]अभवत् । यस्मादुपरि तत् [v]अध्रियत तस्मादपि सृप्तं संहतमभवत्, तस्मात् [v]घृतम् [v]अभवत् । धृङ् अवस्थाने । छान्दसो वर्णविपर्यासः । तादृशं च त्वमसि[२] । तत्र त्वेता अवस्थाः परोक्षवन्निर्दिश्यन्ते ॥

अथोपहोमाः– 'अश्विनोः' इत्यादयश्चत्वारः ॥ [v]अश्विनोः [v]प्राणः त्वम् [v]असि, हे यजमान, [३]त्वदधीनजीवितत्वात् । प्राणितीति प्राणः, पचाद्यच् ( पा ३.१.१३४ ) । प्राणवायुर्वा ।

इष्टिः सांग्रहणी प्रोक्ता नवमे ग्रामकामिणः ॥

अथ व्यवहितेनैकादशानुवाकेनाऽऽयुष्कामेष्टिं विधित्सुर्दशमे तन्मन्त्रान् पठति ।

यदिति ॥ कल्पः– "यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्ष्य" (आपश्रौ १९.२३.१२) इति । अनेन प्राकृतः "आज्यमसि ( तैसं १.६.१ ) इत्यवेक्षणमन्त्रो बाधितः । पाठस्तु–"यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत् सर्पिरभवद्यदध्रियत तद्घृतमभवत्' इति ॥ [१]यत् यस्मात् कारणाद्दध्न उद्ध्रियमाणं [१]तत् [१]नवम् [१]ऐत् नवं[१] नूतनं [१]रूपमभवत् तस्मात् [१]"नवं च तन्नीतं चेत्युद्धृतस्य"[१] सारपिण्डस्य नवनीतनाम संपन्नम् । [१]यत् यस्मात् कारणादग्निसंपर्के सति पिण्डो विलीयमानः [१]असर्पत् [२]प्रसृतोऽभूत् तस्मात् [१]सर्पिः इति नाम । यस्मात् प्रसृतस्य शीतलप्रदेशस्थापनेन तत्पुनः [१]अध्रियत [३]"तत् घनीभूतमभवत् तस्मात् [१]घृतम् इति नाम । घृ क्षरणदीप्त्योरिति धातोर्नैतद्रूपं, किं तु [१]धृतमित्यस्य धकारस्य घकारादेशः ॥

अश्विनोरिति ॥ कल्पः– "उपहोमकालेऽश्विनोः प्राणोऽसीत्येतैः प्रतिमन्त्रं चतुर उपहोमान् जुहोति" ( आपश्रौ १९.२४.१ ) इति । पाठस्तु– 'अश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि

१. मै– त्वमित्यत्र । २–२. तं१.तं२.मै–'गतम्' इत्यस्यानन्तरं 'उद्धृतमिति । नवनीतम्' । ३. तं१.तं२.मै.क– [illegible]जीवनत्वात् ।

१. उ.श.ग्र– तत्नवं । २. ग्र– घृतमभवत् । ३–३. अ– नवनीतं तेन चोद्धृतस्य क.ञो.ना.श– नवं च तन्नीतं च नवनीतं तेन चोद्धृतस्य, ड.छो१–नवनीतं चेत्युद्धृतस्य । ४. क– [illegible] । ५. ड.ग्र– 'तत्' नास्ति । ६. आ– घृतमित्यस्य ।

स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि ( १ ) तस्य ते ददतु येषां प्राणोऽसि स्वाहा

घृतस्य धारामुमृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मुरुद्भिः ।
तत् त्वा विष्णुः पर्यपश्यत् तत् त्वेडा गव्यैरयत् ॥

---

स्वाहा । इन्द्रस्य । प्राण इति प्र अन । असि । तस्य । ते । ददातु । यस्य । प्राण इति प्र अन । असि । स्वाहा । मित्रावरुणयोरिति मित्रा वरुणयो । प्राण इति प्र अन । असि । तस्य । ते । दत्ताम् । ययो । प्राण इति प्र अन । असि । स्वाहा । विश्वेषाम् । देवानाम् । प्राण इति प्र-अन । असि (१) । तस्य । ते । ददतु । येषाम् । प्राण इति प्र अन । असि । स्वाहा । घृतस्य । धाराम् । अमृतस्य । पन्थाम् । इन्द्रेण । दत्ताम् । प्रयतामिति प्र यताम् । मरुद्भिरिति मरुत्-भि । तत् । त्वा । विष्णु । परीति । अपश्यत । तत् । त्वा । इडा । गवि । ऐरयत् ।

---

उपचारो वा, अश्विनो प्राणस्थानीयस्त्वमसि यागद्वारेणोपकारकत्वात् । तस्य तादृशस्य ते तव दत्ताम् अश्विनौ । कम् ? प्राण, सामर्थ्यात् आयुष्कामेष्टित्वात् । कौ ? अश्विनौ ययो प्राण त्वम् असि, अत आत्मार्थमेव तव प्राण दत्ताम् इति ॥ इन्द्रस्येत्यादि ॥ समानम् ॥

पुनराज्यमवेक्षयति – ' घृतस्य धाराम् ' इति ॥ त्रिष्टुबिय बृहती वा । हे आज्य, घृतस्य क्षरितस्य विलीनस्य तव धाराम् । यद्वा– उदकधारा वृष्टिहेतुम् । अमृतस्य अमृतत्वस्य पन्था यागद्वारेण प्राप्तिहेतुम् इन्द्रेण ईश्वरेण दत्ताम् उत्पादिताम् । यद्वा– इन्द्रेण यजमानेन देवेभ्य दत्ताम् । प्रयताम् प्रकर्षेणोत्पादिता शोधिता वा मरुद्भि । तत् तादृक्स्वभाव त्वा विष्णु

---

स्वाहेन्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयो प्राणोऽसि तस्य ते दत्ता ययो प्राणोऽसि स्वाहा विश्वेषा देवाना प्राणोऽसि तस्य ते ददतु येषा प्राणोऽसि स्वाहा ' इति ॥ हे यजमान, त्वम् अश्विनो प्राण असि प्राणवत् प्रियोऽसि, तस्मात् ययो प्राण असि तावश्विनौ तस्य ते प्रियस्य तवाऽऽयुर्हेतुभूत प्राण दत्ताम् । प्राणमित्येतत् सामर्थ्यात् लभ्यते । तयोरश्विनोरिदमाज्यं स्वाहा हुतमस्तु । एवमुत्तरेषु योज्यम् ॥

घृतस्येति ॥ कल्प – " यस्त्वादिर आज्य सदप्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणस्या वेदिश्रोण्या सादयति । तद्यजमानोऽवेक्षते घृतस्य धारामृतस्य पन्थामिति " ( आपश्री १९ २४ ३-४ ) इति ॥ पाठस्तु – ' घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्ता प्रयता मरुद्भि । तत् त्वा विष्णु पर्यपश्यत् तत् त्वेडा

---

४ तै१ तै२ तै– विम् । ५. मै८– क्षारितस्य ।

७ अ४– आत्मार्थ । ८ आ– पर्याहृत्य ते । ९ अ आ इ क– वेदिश्रोण्यामासादयति, हा–ने भेन्त गन्धर्वा ।

पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत् ( २ ) सृजतु जीवातवे जीवनस्यायै।

पावमानेन । त्वा । स्तोमेन । गायत्रस्य । वर्तन्या । उपांशोरित्युप अंशो । वीर्येण । देव । त्वा । सविता । उदिति । सृजतु । जीवातवे । जीवनस्यायै । बृहद्रथन्तरयोरिति बृहत्-रथन्तरयो । त्वा । स्तोमेन । त्रिष्टुभ । वर्तन्या । शुक्रस्य । वीर्येण । देव । त्वा । सविता । उदिति ( २ ) । सृजतु । जीवातवे । जीवनस्यायै ।

व्यापक यजमानो वा परि अपश्यत् । तत तादृश त्वाम् इडा पृथिवी गवि ऐरयत् यागादिक्रमेण ऐरयत् उदपादयत् ॥

ऋत्विज पर्याहु – 'पावमानेन' इत्यादि ॥ हे यजमान, त्वा पावमानेन, पवमाना बहिष्पवमानादय, तेषा सम्बन्धिना स्तोमेन स्तवनेन, गायत्रस्य छन्दस वर्तन्या मार्गेण सोमानयनमार्गेण, उपांशो ग्रहस्य वीर्येण त्वामुत्सृजत्विति, देव सविता त्वाम् उत् सृजतु आमयान्निर्गमयतु । प्रत्येकान्वयाय 'त्वा' इत्यस्यानुवृत्ति । पावमानेन स्तोमेन त्वामुत्सृजतु, गायत्रस्य वर्तन्या त्वामुत्सृजतु, उपांशोर्वीर्येण त्वामुत्सृजत्विति । जीवातवे जीवनहेतवे औषधादय, जीवनस्यायै जीवनप्रदायै । जीवनशब्दात् क्यच्, छन्दस्यसुगागम (पा ७ १ ५०), "अ प्रत्ययात्" (पा ३-३ १०२) इत्यकारप्रत्यय ॥ बृहद्रथन्तरयोस्त्वेत्यादि ॥ समानम् ॥

गव्यैरयत्' इति ॥ घृतस्य धाराम् । 'अवेक्षेत' इत्यध्याहार । कीदृशीं धाराम् ? अमृतस्य पन्थां कर्मफलस्य साधनत्वेन मार्गभूताम्, इन्द्रेण वृष्टिनृणोत्पत्त्यादिपरम्परया दत्तां संपादिताम्, मरुद्भि [11]वैश्याधिपै प्रयताम् [12] विक्रयाय भाण्डेषु प्रयत्नेन सचिताम्[13] । हे घृत, तत् त्वा तथाविधं त्वा विष्णुसदृशो यजमान पर्यपश्यत् परिपश्यति । इडा पश्वभिमानिनी देवता तादृशं त्वा गवि ऐरयत् प्रेरयति गोषु स्थापयति ॥

पावमानेनेति ॥ कल्प – "अथास्य मह्या दक्षिणं हस्तं गृह्णाति । महाग इतर ऋत्विजो हस्तमन्वारभ्य यजमानं पर्याहु पावमानेन त्वा स्तोमेनेति" (आपश्रौ १९. २४ ५-७) इति । पाठस्तु–"पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपांशोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै बृहद्रथन्तरयोस्त्वा

६-६ मै४– परिपश्यति तादृशम् । ७ तै१ तै२ मै ल – उदपादि° । ८ मै४– प्राधान्यात् तस्य वीर्यत्वात् । ९ तै१ तै२ – इत्याकार° ।

१०-१० को ना हा–अवेक्षेत इति शेष, ड–अवेक्ष इत्यध्याहार । ११ हो१– वैश्यपतिभि । १२-१२ आ क जो ना हा– क्रयभाण्डेषु प्रयत्नेन भृताम्, अ– विक्रयभाण्डेषु प्रयत्नेन सेविता । १३ हो१–तादृग्विधम् । १४-१४ अ ड– ऋत्विज, उ पा– इतरमहर्त्विज, को ना हा–इतरं महर्त्विज ।

अ॒ग्नेस्त्वा॒ मात्र॑या॒ जग॑त्यै वर्त॒न्याऽऽग्र॑य॒णस्य॑ वी॒र्ये॑ण
दे॒वस्त्वा॑ सवि॒तोत्सृ॑जतु जी॒वात॑वे जीवन॒स्याया॑
इ॒मम॑ग्न॒ आयु॑षे॒ वर्च॑से कृधि प्रि॒यꣳ रेतो॑ वरुण सोम राजन्।
मा॒तेवा॒स्मा अ॑दिते॒ शर्म॑ यच्छ॒ विश्वे॑ देवा॒ जर॑दष्टि॒र्यथाऽस॑त् ॥

अ॒ग्नेः। त्वा॒। मात्र॑या। जग॑त्यै। व॒र्त॒न्या। आ॒ग्र॒य॒णस्य॑। वी॒र्ये॑ण।
दे॒वः। त्वा॒। स॒वि॒ता। उदिति॑। सृ॒ज॒तु॒। जी॒वात॑वे। जी॒व॒न॒स्यायै॑।
इ॒मम्। अ॒ग्ने॒। आयु॑षे। वर्च॑से। कृ॒धि॒। प्रि॒यम्। रेतः॑। व॒रु॒ण॒। सो॒म॒। रा॒ज॒न्।
मा॒ता। इ॒व॒। अ॒स्मै॒। अ॒दि॒ते॒। शर्म॑। य॒च्छ॒।
विश्वे॑। दे॒वाः। जर॑दष्टि॒रिति॒ जर॑त्-अ॒ष्टिः। यथा॑। अस॑त्।

अग्नेस्त्वेत्यादि ॥ अग्निर्मीयते यया सा अग्नेः मात्रा अग्नेरात्मा अग्नेरात्मस्थानीयम् अग्निष्टोमसाम यज्ञायज्ञियम्। समानमन्यत्। जगत्यै इति षष्ठ्यर्थे चतुर्थी ॥

हिरण्याद्घृत निष्पिबन्तमनुमन्त्रयते–' इममग्ने ' इति। त्रिष्टुबेषा। हे अग्ने, इम घृतम्। उभयलिङ्गो घृतशब्दः। आयुषे वर्चसे [10]"बलाय चास्य"[10] कृधि कुरु। पूर्ववत् शपो लुक्

स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायै' इति ॥ हे यजमान, त्वां सविता देवः उत्सृजतु दीर्घरोगात् मोचयतु। केन साधनेन? बहिष्पवमानादीनां संबन्धिना त्रिवृदादिस्तोमसाध्येन स्तोत्रेण, गायत्रस्य वर्तन्या गायत्रच्छन्दसो यो मार्गस्तेन सोमाहरणरूपेण यज्ञाङ्गसंपादनेन, उपांशोः वीर्येण उपांशुग्रहहोमसाध्यसामर्थ्येन। अत्र प्रतिसाधनं वाक्यभेदेनान्वेतुं त्वेतिशब्दस्य पुनरुक्तिः। किमर्थम् उत्सृजतीति तदुच्यते। जीवातवे जीवनहेत्वौषधादिसंपादनाय। तदपि किमर्थमिति तदुच्यते। जीवनस्यायै चिरं जीवितुमिच्छा जीवनस्या तदर्थम्। एवं द्वितीयतृतीयमन्त्रौ योजनीयौ। अग्नेः मात्रया [15]मीयतेऽग्निर्यया गीयते या गीतिर्मात्रा [16]"यज्ञायज्ञियस्य गानमित्यर्थः"[16] ॥

इममिति ॥ कल्पः– "अथ यजमानो हिरण्याद्घृतं निष्पिबति। इममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते" (आपश्रौसू १९.२४.७-८) इति॥ पाठस्तु–'इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत' इति॥ हे अग्ने, इमं यजमानं दीर्घायुषे वर्णाय च कृधि समर्थं कुरु। हे वरुण, हे सोम राजन, [17]अस्य यजमानस्य प्रियं रेतः पुत्रोत्पादकं

१०-१०. मे॰– चास्यायुष्य।

१५. ख.ग.होर– अग्नीयते॰। १६-१६. ख.होर– यज्ञियसामगार्थमिति; गृ॰– ॰यज्ञियसामगानमित्यर्थः। १७. ख.होर– तस्य।

अ॒ग्निरायु॑ष्मा॒न्त्स व॒नस्पति॑भि॒रायु॑ष्मा॒न् तेन॑ त्वाऽऽयु॒षाऽऽयु॑ष्मन्तं करोमि॒ ॐसोम॑ आयु॑ष्मा(३)न्त्स ओष॑धीभिर्य॒ज्ञ॑ॐ आयु॑ष्मा॒न्त्स दक्षि॑णाभि॒र्ब्रह्माऽऽयु॑ष्म॒त्ॐ तद्ब्रा॑ह्म॒णैरायु॑ष्मद्दे॒वाॐ आयु॑ष्मन्त॒स्तेऽमृते॑न

अ॒ग्निः । आयु॑ष्मान् । सः । व॒नस्पति॑भि॒रिति॑ व॒नस्पति॑-भि॒ः । आयु॑ष्मान् । तेन॑ । त्वा॒ । आयु॑षा । आयु॑ष्मन्तम् । क॒रो॒मि॒ । सोम॑ः । आयु॑ष्मान् (३) । सः । ओष॑धीभि॒रित्योष॑धि-भि॒ः । य॒ज्ञः । आयु॑ष्मान् । सः । दक्षि॑णाभि॒ः । ब्रह्म॑ । आयु॑ष्मत् । तत् । ब्रा॒ह्म॒णैः । आयु॑ष्मत् । दे॒वाः । आयु॑ष्मन्तः । ते । अ॒मृते॑न ।

(पा २·४·७३), धिमावश्च (पा ६·४·१०२)। [v]प्रिय [v]रेत', सर्वस्य प्रकृतिभूतत्वात् प्रियत्वं रेतस्त्वं च। हे [v]वरुण हे सोमलताभिमानिन् हे [v]राजन् चन्द्र। यद्वा— वल्लीनिवृत्त्यर्थं राजशब्देन सोमो विशेष्यते। यूयमप्यस्यायुषे कुरुत। किं च— हे [v]अदिते, त्वमपि [v]अस्मै यजमानाय [v]माता [v]इव [v]शर्म सुखं [v]यच्छ देहि। हे [v]विश्वे [v]देवा', यूयमपि इदं कर्तुमर्हथ। किम्? [v]यथा अयं यजमानः [v]जरदष्टिः जीर्णत्वेन अष्टिर्व्याप्तिर्यस्य। जरामश्नुते इति वा जरदष्टिः। छान्दसी रूपसिद्धिः। [11-v]असत् भवेत्[11] दीर्घायुः यथा स्यात् तथा कुरुत। यद्वा— अस्य यजमानस्य [12]यथा जरदष्टिः जराव्याप्तिः [11-]असत् भवेत्[11] तथा कुरुत दीर्घायुषं कुरुत। जीर्यतेरतृन्प्रत्यय (पा ३·२·१०४) भावे द्रष्टव्यः। अस्ते. [13]लेटि अडागमः (पा ३·४·९४)॥

ब्रह्मा यजमानस्य हस्तं गृह्णाति— 'अग्निरायुष्मान्' इति॥ [v]अग्निः [v]आयुष्मान् दीर्घायुः। [v]सः [v]वनस्पतिभिः [v]आयुष्मान् तैर्हेतुभिः तैर्वा सह। [v]तेन [v]आयुषा उभयेनायुषा त्वाम् [v]आयुष्मन्तं

---

संपादय। हे [v]अदिते पृथिवि, मातृवत् [v]अस्मै सुखं प्रयच्छ। हे [v]विश्वे देवा', अयं यजमानो [v]यथा [v]जरदष्टिः [v]असत् तथा कुर्वन्तु। जराया अष्टिर्व्याप्तिर्यस्यासौ जरदष्टिः। बाल्ये यौवने च मरणरहितो जरामायुःसंपूर्तिपर्यन्तां यथा व्याप्नोति तथा कुर्वन्त्वित्यर्थः॥

अग्निरिति॥ कल्पः— "अग्निरायुष्मानित्यनुवाकशेषेणास्याध्वर्युर्दक्षिणं हस्तं गृह्णाति" (आपश्रौ १९·२४·११) इति॥ पाठस्तु—'अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि सोम आयुष्मान्त्स ओषधीभिर्यज्ञ आयुष्मान्त्स दक्षिणाभिर्ब्रह्माऽऽयुष्मत् तद्ब्राह्मणैरायुष्मद्देवा आयुष्मन्तस्तेऽमृतेन पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि' इति॥ [v]अग्निः [v]आयुष्मान्

---

११–११. तं१,तं२– असद्भवे। १२. तं१,तं२,मै,८– 'यथा' नास्ति। १३. मै८– लेट् वा।

*पितर् आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन् त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥१०॥

[ विश्वेषा देवाना प्राणोऽसि त्रिष्टुभो वर्तन्या शुक्रस्य वार्येण
देवस्त्वा सवितोत्सोम आयुष्मान् पञ्चविꣳशतिश्च । ]

---

पितर । आयुष्मन्त । ते । स्वधयेति स्व धया । आयुष्मन्त । तेन । त्वा । आयुषा ।
आयुष्मन्तम् । करोमि ॥ १० ॥

[ मैस २ ३ ४ कास ११ ७ ]

---

करोमि दीर्घायुष करोमि, हे यजमान । सोमादिषु ' आयुष्मान् तेन ' इत्याद्यनुषज्यते । सोम ओषधीभि , यज्ञ दक्षिणाभि , ब्रह्म ब्राह्मणै , देवा अमृतेन, पितर स्वधया ॥

इति द्वितीये तृतीये दशमोऽनुवाक ॥

---

भवति । तत्कथमिति तदुच्यते, स अग्नि वनस्पतिभि आयुष्मान् काष्ठेषु प्रक्षिप्यमाणेषु [18]ज्वालापरम्परया वर्धते न तूपशाम्यति । तेन अग्ने आयुषा अभिवर्धमानेन त्वाम् आयुष्मन्त करोमि । एवमुत्तरत्र योज्यम् । सोम सोमरस ओषधीष्वभिपूयमाणासु वर्धते । यज्ञ दक्षिणाभि वशीकृतेष्वृत्विक्षु वर्धते । वेदश्च ब्राह्मणेष्वध्यापकेषु अविच्छेदेन वर्धते । देवा च हवीरूपेण अमृतेन जीवन्ति । पितर च स्वधाकारपूर्वकेण पिण्डादिना जीवन्ति । प्रतिवाक्यमनुषङ्गद्योतनाय ' तेन त्वाऽऽयुषा ' इति पुन पठ्यते ॥

अत्र विनियोगसग्रह —

ज्योगामयाविनस्त्विष्टौ यद्यवेत्याज्यमीक्षते ।
अश्विनोरुपहोमा स्युर्घृत स्वाम्याज्यमीक्षते ॥ १ ॥
[19]रथ्यर्त्विजो ब्रह्मदस्न पायेति स्वामिन जगु ।
इम घृत पिबन्त तु स्वामिन मन्त्रयेत [20]हि ॥ २ ॥
अग्नि सोमश्च यज्ञश्च ब्रह्मदेवा पितेति षट् ।
पयोधिनानुषङ्गैर्गृह्यते[21] स्वामिहस्तकम् ।
दशमे त्वनुवाकेऽस्मिन्मन्त्रा षोडश वर्णिता ॥ ३॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाक ॥ १० ॥

---

[18] ट ठो१ – ज्वालाधिकम् , ॰ – ज्वालापरम् । [19] उ – ते चर्त्विजे, आ ना ह्य – ते चर्त्विजा , ट– गर्त्विजो । [20] ट–ते । [21] घ– °गृह्यते ।

अग्निं वा एतस्य शरीरं गच्छति सोम२ं रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपाल२ं सौम्यं चरुं वारुणं दशकपाल२ं सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं (१)

अग्निम्। वै। एतस्य। शरीरम्। गच्छति। सोमम्। रसः। वरुणः। एनम्। वरुणपाशेनेति वरुण-पाशेन। गृह्णाति। सरस्वतीम्। वाक्। अग्नाविष्णू इत्यग्ना विष्णू। आत्मा। यस्य। ज्योक्। आमयति। यः। ज्योगामयावीति ज्योक्-आमयावी। स्यात्। यः। वा। कामयेत। सर्वम्। आयुः। इयाम्। इति। तस्मै। एताम्। इष्टिम्। निरिति। वपेत्। आग्नेयम्। अष्टाकपालमित्यष्टा-कपालम्। सौम्यम्। चरुम्। वारुणम्। दशकपालमिति दश-कपालम्। सारस्वतम्। चरुम्। आग्नावैष्णवमित्याग्ना-वैष्णवम्। एकादशकपालमित्येकादश-कपालम्। अग्नेः। एव। अस्य। शरीरम्। निष्क्रीणातीति निः-क्रीणाति। सोमात्। रसम् (१)।

इदानीं तां पञ्चहविषमिष्टिं विदधाति– 'अग्निं वा' इत्यादि॥ [१]यस्य [१]ज्योक् [१]नित्यम् [१]आमयति आमयः तस्य शरीरादीनि अग्न्यादीन् देवान् गच्छन्ति स्वकारणानुप्रवेशात् [२]कार्यरूपनाशात् कर्तरि कार्यशक्त्युपसंहारः स्यात्। "रुजार्थानाम्°" (पा २.३.५४) इति यस्येति कर्मणि षष्ठी। यो[१] ज्योगामयावीत्यादि॥ गतम्॥

अग्नेरेवेत्यादि॥ यत्र यत्र शरीरादीनि गतानि तेभ्य तानि [१]निष्क्रीणाति हविःप्रदानेन। ततोऽसौ यजमान. [१]यदि अपि गतासु. [१]भवति [१]जीवति [१]एव, किं पुनरायुःशेषवतामामय-

इष्टेर्विधास्यमानाया दशमे मन्त्र ईरित.॥

अग्निमिति॥ अथैकादशी तामिष्टिं विधातुं प्रस्तौति– 'अग्निं वा एतस्य शरीरं गच्छति सोम२ं रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति' इति॥ [१]'यं दीर्घव्याधिः पीडयति'[१] [१]एतस्य [१]शरीरम् [१]अग्निं प्रविशति, मांसभक्षणेन कृशत्वात्। सोमेन रसस्वीकारात् बलक्षयः। [१]वरुणपाशेन ग्रहणादुदराद्रिव्यथा। [१]सरस्वतीम् एतदीया [२]वाक् भाषा [१]गच्छति, तेनायं भाषितुं न शक्नोति। जीवात्मा तु [१]अग्नाविष्णू प्राप्नोति, तेन मुमूर्षति॥

य इति॥ [३]इदानीं विधत्ते– 'यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपाल२ं सौम्यं चरुं वारुणं दशकपाल२ं सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसं वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव' इति॥ ज्योगामयाविनो रोगपरिहारार्थमरोगस्य [४]चाऽपमृत्युपरिहारार्थमियं पञ्चहविष्केष्टिः॥

१–१. तं१,तं२– 'नित्यम्,........यो' इत्येतावान् अंशो नास्ति। २. मै४–तत्कार्य°।

१. इ हो,१–'यं दीर्घव्याधि पीडयति' नास्ति। २. इ–'वाक्' नास्ति। ३, हो१–इष्टिम। ४. आ–चाऽप°।

वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टेऽश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां ( २ ) भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति

वारुणेन । एव । एनम् । वरुणपाशादिति वरुण पाशात् । मुञ्चति । सारस्वतेन । वाचम् । दधाति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताभिः । च । एव । एनम् । यज्ञेन । च । भिषज्यति । उत । यदि । इतासुरितीत असुः । भवति । जीवति । एव । यत् । नवम् । ऐत् । तत् । नवनीतमिति नव नीतम् । अभवत् । इति । आज्यम् । अवेति । ईक्षते । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्ट इति वि आचष्टे । अश्विनोः । प्राण इति प्र अनः । असि । इति । आह । अश्विनौ । वै । देवानाम् (२) । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । इन्द्रस्य । प्राण इति प्र अनः । असि । इति । आह । इन्द्रियम् । एव । अस्मिन् । एतेन । दधाति । मित्रावरुणयोरिति मित्रा वरुणयोः । प्राण इति प्र अनः । असि । इति । आह । प्राणापानाविति प्राण अपानौ । एव । अस्मिन् । एतेन । दधाति ।

निवृत्ति भवतीति । यद्वा यागबलेन आमयश्च नश्यति, सर्वं चाऽऽयु शतसंवत्सरप्रमाण लभते ॥ आज्यमवेक्षत इति ॥ अस्य मन्त्रस्य 'एतत् 'रूपम् 'एव विनैव व्याख्यानम् आज्यस्य 'महिमान 'व्याचष्टे 'व्याकरोति अवस्थात्रयविवरणात् ।

अश्विनोरित्यादि ॥ पुरस्तात् 'स्विष्टकृत स्रुगाहुत्युपहोममन्त्रा एते ॥

यदिति ॥ मन्त्र विनियुङ्क्ते–'यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमान व्याचष्टे' इति ॥ मन्त्रोक्तैर्नवनीतसर्पिर्घृतनिर्वचनैरस्याऽऽज्यस्य 'एतत् विद्यमानमेव' 'रूप 'महिमानं व्याख्यानाय मन्त्र 'व्याचष्टे । यद्वा–मन्त्रस्यैतत्स्वरूपमेव एतस्य महिमान व्याचष्टे । मन्त्रान्तरैरेव स्पष्टं प्रतीयते नात्र पृथग्वक्तव्यमस्तीत्यर्थः ॥

अश्विनोरिति ॥ उपहोममन्त्रान् व्याचष्टे– 'अश्विनो प्राणोऽसीत्याहाश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयो प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति ' इति ॥

३ ११ १२– स्विष्टकृतम् ।

५ आ ऽ क ख ग घ पाठा 'एव' नास्ति ।

विश्वे॑षां दे॒वानां᳚ प्रा॒णो॑ऽसी॒त्या॑ह वी॒र्य॑मे॒वास्मि॑न्ने॒तेन॑ द॒धाति घृ॒तस्य॒ धारा॑म॒मृत॑स्य प॒न्था॒मित्या॑ह यथाय॒जुरे॒वैतत् पाव॑मानेन॑ त्वा॒ स्तोमे॑ने॒त्या( ३ )ह प्रा॒णमे॒वास्मि॑न्ने॒तेन॑ दधाति बृहद्रथन्त॒रयो॑स्त्वा॒ स्तोमे॑ने॒त्याहौज॑ ए॒वास्मि॑न्ने॒तेन॑ द॒धात्य॒ग्नेस्त्वा॒ मात्र॑ये॒त्या॑हा॒ऽऽत्मान॑मे॒वास्मि॑न्ने॒तेन॑ द॒धात्यृ॒त्विज॑ः प॒र्या॑हु॒र्याव॑न्त ए॒वर्त्विज॒स्त ए॒नं भि॑षज्यन्ति

विश्वे॑षाम्। दे॒वाना᳚म्। प्रा॒ण इति॑ प्र–अ॒न । अ॒सि॒ । इति॑ । आ॒ह॒ । वी॒र्य॑म् । ए॒व । अ॒स्मि॒न् । ए॒तेन॑ । द॒धा॒ति॒ । घृ॒तस्य॑ । धारा॑म् । अ॒मृत॑स्य । प॒न्था᳚म् । इति॑ । आ॒ह॒ । य॒था॒य॒जु॒रिति॑ य॒था–य॒जु॒ । ए॒व । ए॒तत् । पाव॑मानेन॑ । त्वा॒ । स्तोमे॑न । इति॑ ( ३ ) । आ॒ह॒ । प्रा॒णमिति॑ प्र–अ॒नम् । ए॒व । अ॒स्मि॒न् । ए॒तेन॑ । द॒धा॒ति॒ । बृ॒ह॒द्र॒थ॒न्त॒रयो॒रिति॑ बृ॒ह॒त्–र॒थ॒न्त॒रयो᳚ः । त्वा॒ । स्तोमे॑न । इति॑ । आ॒ह॒ । ओज॑ः । ए॒व । अ॒स्मि॒न् । ए॒तेन॑ । द॒धा॒ति॒ । अ॒ग्नेः । त्वा॒ । मात्र॑या । इति॑ । आ॒ह॒ । आ॒त्मान॑म् । ए॒व । अ॒स्मि॒न् । ए॒तेन॑ । द॒धा॒ति॒ । ऋ॒त्विज॑ः । परीति॑ । आ॒हु॒ । याव॑न्त । ए॒व । ऋ॒त्विज॑ । ते । ए॒न॒म् । भि॒ष॒ज्य॒न्ति॒ ।

घृतस्य धारामित्यादि ॥ अनेन यजमानमाज्यमवेक्षयति । यथायजुरिति । अमृतत्वप्राप्तिहेतुत्वमस्य यथा यजुर्वदति एतत् एव भवति ॥

पावमानेनेत्यादि ॥ ब्रह्मण हस्तम् अन्वारभ्य ऋत्विज पर्याहु इमान् मन्त्रान् । तदेवाह– ' ऋत्विज पर्याहु ' इति । परित आसीना आहु ।

घृतस्येति ॥ यजमानस्याऽऽज्यावेक्षणमन्त्रे स्पष्टार्थता दर्शयति– ' घृतस्य धारामगृतस्य पन्थामित्याह यथायजुरेवैतत् ' इति ॥

पावमानेनेति ॥ ऋत्विग्भि पठनीयाना मन्त्राणा तात्पर्यं दर्शयति– ' पावमानेन त्वा स्तोमेनेत्याह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथंतरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवास्मिन्नेतेन दधाति ' इति ॥ पवमानस्य वायो प्राणरूपत्वात् तेन प्राणस्थापन, बृहद्रथतरयो पृष्ठस्तोत्रप्रकृतित्वेन सारत्वात् तेनौजोधारणम् । अग्निरात्मा, मीयतेऽनयेत्युक्तत्वात् तेनाऽऽत्मस्थापनम् ॥

ऋत्विज इति ॥ एतेषा त्रयाणा पाठ विधत्ते– ' ऋत्विज पर्याहुर्यावन्त एवर्त्विजस्त एन भिषज्यन्ति ' इति ॥

ब्रह्मण इति ॥ पाठकाले हस्तग्रहण विधत्ते– ' ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमाने आयुर्दधति यदेव तस्य तत् ' इति ॥ एकधा एव सर्वेषामृत्विजामेकमत्येनैव तस्य यजमानस्य यत् एव आयु सपादनीयमस्ति तत् सर्वं तस्मिन् यजमाने स्थापयन्ति ॥

६ इ–°मन्वस्य । ७. आ– पठ्यमानाना । ८ अ इ ड हो१–त्रयाणा मन्त्राणा । ९ ड हो१– ' तस्मिन् ' नास्ति ।

ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधाति यदेव तस्य तद्धिरण्याद् (४) घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यथो खलु यावतीः समा

ब्रह्मणः । हस्तम् । अन्वारभ्येत्यनु - आरभ्य । परीति । आहुः । एकधेत्येक - धा । एव । यजमाने । आयुः । दधाति । यत् । एव । तस्य । तत् । हिरण्यात् (४) । घृतम् । निरिति । पिबति । आयुः । वै । घृतम् । अमृतम् । हिरण्यम् । अमृतात् । एव । आयुः । निरिति । पिबति । शतमानमिति शत - मानम् । भवति । शतायुरिति शत - आयुः । पुरुषः । शतेन्द्रिय इति शत - इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अथो इति । खलु । यावतीः । समाः ।

ब्रह्मण इति । 'हस्तमन्वारभ्य' इति वचनात् सर्वमस्य आयुः एकधा कृत्वा अस्मिन् दधाति, यत् एव तस्य आयु. तत् एव दधाति ।

हिरण्यादिति ॥ अयमत्र प्रयोग – यावतीः समाः एष्यन् मन्येत तावन्मान सौवर्णं प्रवर्तं कुण्डलम् उपकल्प्य खादिरे नवे पात्रे उपस्तीर्णाभिघारित निधाय सह हविर्भिरन्तर्वेदासाद्य उपहोमान् हुत्वा संस्रावं. प्रवर्तमभिघार्य अग्रेणाहवनीय पर्याहृत्य दक्षिणतो निधाय यजमानमवेक्षयति । "अथायमवेस्यास्माद्धिरण्यान्निष्पतत् घृत" पिबति । यद्वा - हिरण्यलग्न घृत निःशेष पिबति । आयुर्वा इति । उभयत्रापि तद्धेतुत्वात् ताच्छब्द्यम् । शतमानमिति । शतगुञ्जाप्रमाणं प्रवर्ताकार सुवर्णं भवति । गुञ्जफलाकार कर्णवेष्ट । प्रवर्तस्य शतसंख्यान्वयात् तत्प्रमाणायुर्वीर्य-

हिरण्यादिति ॥ यदुक्तं सूत्रकारेण– "पात्रसम्सादनकाले खादिरं पात्रं चतुःस्रक्ति "प्रमुनक्ति । सौवर्णस्य "प्रवर्तं शतमानस्य वृत्तम् । अथो खलु यावतीः समा एष्यन्मन्येत तावन्मानं स्यात्" ( आपश्रौ १९·२३·११-१२ ) इति; "आज्यग्रहणकाले तूष्णीं "खादिरे चतुर्गृहीतं" गृहीत्वा सादनकाल उपरिष्टात् ध्रुवां खादिरं सादयित्वा तस्मिन् प्रवर्तमवदधाति" ( आपश्रौ १९·२३·१३ ) इति च, "प्रवर्तं कर्णाभरणं कुण्डलम्; [ तत्र ] वृते अवसिताय "प्रवर्तांश्रित्पीडितस्य घृतस्य पाने विधत्ते– 'हिरण्याद्घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति' इति ॥

शतमानमिति ॥ तस्य परिमाणं द्वेधा विधत्ते– 'शतमानं भवति शतायुः पुरुष. शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानꣳ स्यात् समृद्ध्यै' इति ॥ 'शतमानं

काम्या इष्टय ]

एष्यन् मन्येत तावन्मानꣳ स्यात् समृद्ध्या इममग्न आयुषे ,वर्चसे कृधीत्याहाऽऽयु-रेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्या(५)ह जरदष्टिमेवैनं करोत्यग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति ॥ (११) ॥

[ रसं देवानाꣳ स्तोमेनेति हिरण्यादसदिति द्वात्रिꣳशतिश्च । ]

एष्यन् । मन्येत । तावन्मानमिति तावत्-मानम् । स्यात् । समृद्ध्या इति सम्-ऋद्ध्यै । इमम् । अग्ने । आयुषे । वर्चसे । कृधि । इति । आह । आयुः । एव । अस्मिन् । वर्चः । दधाति । विश्वे । देवाः । जरदष्टिरिति जरत्-अष्टिः । यथा । असत् । इति (५) । आह । जरदष्टिमिति जरत्-अष्टिम् । एव । एनम् । करोति । अग्निः । आयुष्मान् । इति । हस्तम् । गृह्णाति । एते । वै । देवाः । आयुष्मन्तः । ते । एव । अस्मिन् । आयुः । दधति । सर्वम् । आयुः । एति ॥ ११ ॥

[ मैत्र २३५, काम ११८ ]

लाभः[1] । अथो खल्विति पक्षान्तरं दर्शयति । यावतः संवत्सरान् [v]एष्यन् जीवितुं [v]मन्येत [v]तावन्मानं कुर्यात् [1]प्रवर्तकम् । यजमानस्य गतानि सर्वाणि शताच्छोधयित्वा [11]शिष्टसमितकम-निर्मितं कुर्यात्[11] । एवं हि अभिमतसंख्याऽन्वयात् [v]समृद्ध्यै भवति ॥

इममग्न आयुष इति ॥ घृतं निष्पिबन्तमनुमन्त्रयते । जरदष्टिमेवेति । जराप्राप्त्या दीर्घायुष्ट्वं लक्ष्यते ॥

अग्निरायुष्मानिति । ब्रह्मा यजमानस्य हस्तं गृह्णाति ॥

इति द्वितीये तृतीये एकादशोऽनुवाकः

[1]पञ्चपणपरिमितमित्यसकृदुक्तम् । अथवा रुग्णो यजमानो यावतो भाविनः संवत्सरान् प्राप्नोत्वित्यध्वर्युः [v]मन्येत तावद्भिर्मानैः परिमितं कर्तव्यम् । मानशब्दो गुञ्जाबीजं ब्रूते । रुग्णस्यातीतमायुः परित्यज्याऽऽगामिनः आयुषो यावन्तः संवत्सरा एतस्य मनसि निश्चितास्तावद्भिर्गुञ्जाबीजैः परिमितमित्यर्थः ॥

इममिति ॥ प्राभतो [1]यजमानस्याभिमन्त्रणमन्त्रे प्रथमचरमभागयोरभिप्रायं दर्शयति– 'इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्याह जरदष्टिमेवैनं करोति' इति ॥ आयुषश्चरमभागस्थाया जराया अष्टिर्व्याप्तिर्यस्य । अथवा जीर्यत्यष्टिरशनं यस्यासौ [v]जरदष्टिः, नीरोग इत्यर्थः ॥

अग्निरिति ॥ अध्वर्योर्यजमानदक्षिणहस्तग्रहणं विधत्ते– 'अग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

१०. मै४–प्रवर्तम् । ११–११ मै४– शिष्टवत्सरं निर्मिमीत निर्मितं कुर्यात् ।

१५. क– पञ्चपलपरि°, ङ– पञ्च पञ्चपण° । १६ क ङा– °स्यानुमन्त्रण° ।

प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव

प्रजापतिरिति प्रजा - पतिः । वरुणाय । अश्वम् । अनयत् । सः । स्वाम् । देवताम् । आर्च्छत् । सः । परीति । अदीर्यत । सः । एतम् । वारुणम् । चतुष्कपालमिति चतुः - कपालम् । अपश्यत् । तम् । निरिति । अवपत् । ततः । वै । सः । वरुणपाशादिति वरुण - पाशात् । अमुच्यत । वरुणः । वै । एतम् । गृह्णाति । यः । अश्वम् । प्रतिगृह्णातीति प्रति - गृह्णाति । यावतः । अश्वान् । प्रतिगृह्णीयादिति प्रति - गृह्णीयात् । तावतः । वारुणान् । चतुष्कपालानिति चतुः - कपालान् । निरिति । वपेत् । वरुणम् । एव ।

*-" प्राजापत्यो वा अश्व "-* इति ॥ Vप्रजापतिः आत्मदेवत्यम् Vअश्वम् Vवरुणाय Vअनयत् अददात् । Vसः अश्व ददत् VIस्वाम् आत्मानम् अश्वस्य Vदेवताम् Vआर्च्छत् 'आर्तिमकरोत्, ईशितव्यापगमात् देवतात्वहानिरेवार्तिः । ततश्च Vसः प्रजापतिः विगलितदेवताभावः परितः सर्वतः Vअदीर्यत विपन्नोऽभवत् वरुणपाशैर्गृहीत इत्यर्थः । तदेवाह— ' वरुणो वा एतम् ' इत्यादि । ननु प्रतिग्रहीतुरिदमुच्यते, प्रतिगृह्णातीति दर्शनात् । नैवम् । उपक्रमावगतदातृश्रुतिविरोधात्, दातृविषयमेवेद विपरिणाम्यते । उक्तं चेद न्यायविद्भिः — " अवैदिकं [ अचोदित ] च कर्मभेदात् " इत्यत्र— " सा लिङ्गादार्त्विजे स्यात् " ( मीसू ३·४·३०-३१ ) इति । तस्मादुपक्रमोपसंहारा-

एकादशे त्विष्टिरुक्ता दीर्घरोग्यायुरर्थिनो. ॥

प्रजापतिरिति ॥ अथ द्वादशेऽश्वदानवत इष्टिं [1]विधास्यन् प्रस्तौति—' प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत ' इति ॥ 'अनयत् दत्तवान् । देवस्य भावो देवता । 'सः प्रजापतिः स्वकीयं देवत्वम् [2]'आर्छत् आर्तमकरोत् । " प्राजापत्यो वा अश्वः " ( द्र तैस ५·१·२ ) इति श्रुतेः प्रजापतिरेव पूर्वमश्वस्य देवता । तस्मिन्नश्वे वरुणाय दत्ते सति स्वकीयमश्वस्वामित्वमपगतं, तन्निमित्तेन दुःखेन 'सः प्रजापतिः 'पर्यदीर्यत तदीयं शरीरं परितो दीर्णं [3]'दीर्घरोगग्रस्तमभूत् । स च रोगो 'वरुणपाशरूपत्वाद्वारुण्येष्ट्या निवृत्तः ॥

वरुण इति ॥ इदानीमिष्टिं विधत्ते— ' वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान् मुञ्चति ' इति ॥ 'प्रतिगृह्णाति इत्यस्यान्तर्भावितण्यर्थत्वात् प्रतिग्राहयति ददातीत्ययमर्थः संपद्यते ॥

*-* [ द्र. तैसं ५·१·२ ]। १. मै१– स्वम् । २. मै४.ले–आर्तम° । ३. मै– ' एतम् ' नास्ति, मै१.मं– एतमिति ।

१. अ.१– विधातुं । २. अ१.उ.ड.पा – ' आर्च्छत् ' नास्ति । ३. ड– ' दीर्घ° ' नास्ति । ४. अ.१– °पञ्जरत्वा° ।

स्वेनँ भागुधेयेनोपँ धावति स एुवैनँ वरुणपाशान्मुँञ्चति (१) चर्तुष्कपाला भवन्ति चर्तुष्पाद्धयश्वः समृद्धया

स्वेनँ। भागधेयेनेति भाग-धेयेन। उपेति। धावति। स। एन। एनम्। वरुणपाशादिति वरुण-पाशात्। मुञ्चति (१)। चर्तुष्कपाला इति चर्तु-कपाला। भर्वन्ति। चतुष्पादिति चतु-पात्। हि। अश्व। समृद्धया इति सम् ऋद्धयै।

निरोधात्मकाग्निमनेन प्रतिग्राहयतीयर्थो युज्यते। तस्मात् दाता प्रजापति वारुणेन चतुष्कपालेन [४]वरुणपाशात् [४]अमुच्यत। तस्मादन्योऽपि [४]यावत [४]अश्वान् [४]प्रतिगृह्णीयात् प्रतिग्राहयेत् [५]तावत [६]वारुणान् [६]चतुष्कपालान् [६]नि [६]र्वपेत् इति। इद वैदिकेऽश्वप्रतिग्रह इति वेदितव्यम्। उक्त हि "दोषात् त्विष्टिर्लौकिके स्यात्" इत्यत्र "अर्थवादो वाऽनुपपादात् तस्माद्यज्ञे प्रतीयेत" (मीसू ३ ४ २८ २९) इति। तत्रात्तर्भावितण्यर्थो गृह्णातिर्निर्दितव्य। यद्वा–ण्यन्तादत्र छकारे "बहुल मन्त्रापि" (उ १९०) इति णिलुक्, तत्र व्यत्ययेन श्नाप्रत्यय। केचिदाहु–"वारुणो वा अश्व" (तैब्रा ३ ९ १६) इति, वरुणदेवत्योऽश्व, स प्रजापतिना वरुणाय दीयमानो वरुण स्वा देवतामपि आत्मीयदेवतात्वेन वर्तमानमपि [७]प्रतिग्रहस्य दुष्टत्वात् आर्तमकरोत्। स वरुण पर्यदीर्यत वरुणपाशैर्गृहीतो व्यापद्यत। अथ [८]स वरुणो वारुण चतुष्कपाल दृष्ट्वा वरुणाय [९]त निरवपत्। ततो वरुणो वरुणपाशादमुच्यत। वारक वा पाप वरुण। यो नाम कश्चित् वरुणाख्यो वा अश्व प्रतिगृह्णाति [७]वरुण एन गृह्णाति[७]। तस्मात् "यावतोऽश्वान् [८]प्रतिगृह्णीयात्" इति प्रतिग्रहीतुरेव विधीयते इति। [१०]तदिद न्यायविरुद्धम् [१०]इति नाद्रियामहे। ननु कथमेकस्यैव [११]देवतात्व यजमानत्व च स्यात्? नैष दोष। "इन्द्रो वै सदृङ् देवताभिरासीत्" (तैस २ २ ८) इत्यत्र यथा [१२]"इन्द्र आत्मार्थम्[१२] ऐन्द्रमानुपूर्वमेकादशकपाल निरवपत्" इति, यथा–"वरुण सुषुवाणम्" (तैस २ १ ९) इत्यत्र वरुणो वारुणीं [१३]वशामा लभते एवमिद भविष्यति॥

चतुष्कपाला इति॥ कपालसंख्या प्रशसति–'चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्व समृद्ध्यै' इति॥

४ त१ त२–अप्रतिग्राह्य। ५ त१ त२–'स' नास्ति। ६ त१ त२ मै ल–'त' नास्ति। ७-७ ल–'वरुण एन गृह्णाति' नास्ति। ८ त१ त२ मै ल–'प्रतिगृह्णीयात्' नास्ति। ९ त१ त२ ल–यदिदम्। १० त१ त२ मै ल–इत्यादिना। ११ मै४–दातृत्वम्। १२-१२ मै४–इन्द्रार्थम् ऐन्द्रामग्र। १३-१३ त१ त२–'वशामालभते अश्वप्रतिग्रही कृत्वापि' इत्येतावान् भाग नास्ति।

एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चारं कुरुते-

एकम्। अतिरिक्तमित्यति रिक्तम्। निरिति। वपेत्। यम्। एव। प्रतिग्राहीति प्रति ग्राही। भवति। यम्। वा। न। अध्येतीत्यधि-एति। तस्मात्। एव। वरुणपाशादिति वरुण पाशात्। मुच्यते। यदि। अपरम्। प्रतिग्राहीति प्रति ग्राही। स्यात्। सौर्यम्। एककपालमित्येक कपालम्। अनु। निरिति। वपेत्। अमुम्। एव। आदित्यम्। उच्चारमित्युत् चारम्। कुरुते।

एकमतिरिक्तमिति ॥ यावतोऽश्वान् प्रतिगृह्णीयात् तेभ्य अतिरिक्त नि वपेत्, यथा षट् प्रतिगृह्य सप्तम निर्वपेदिति। यमेवेति। य प्रतिग्रहीष्यन् भवति य वा पूर्वप्रतिगृहीत न अध्येति नाधिगच्छति न स्मरति वा, तस्मात् सर्वस्मान्निमित्तात् उपजातात् वरुणपाशात् मुच्यते। "अकेनोर्भविष्यदाधमर्ण्ययो" (पा २ ३ ७०) इति षष्ठीप्रतिषेध ॥

यद्यपरमिति ॥ अश्वप्रतिग्राही कृत्वाऽपि वारुणीमिष्टिं यदि भूयोऽपि प्रतिग्रहीष्यन् स्यात् सौर्यम् एककपालम् अनु नि वपेत्। अपरमिति क्रियाविशेषणम्। अमुम् आदित्यम उच्चारम् उच्छ्रिताचारम् उपरि चरन्त वा कुरुते, तत स एव वरुणपाशादिदोष परिहरिष्यतीति।

एकमिति ॥ अश्वसख्यातोऽधिक पुरोडाश विधत्ते- 'एकमतिरिक्त निर्वपेद्यमेव प्रतिग्राही भवति य वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते' इति ॥ यम् एव अश्वमित ऊर्ध्वं यदा कदाचित् कालान्तरे प्रतिग्रहीष्यति दास्यति, अथवा य कचिदश्व प्रतिगृहीत न अध्येति विस्मरति तदर्थोऽयम् अतिरिक्त पुरोडाश ॥

यदीति ॥ निमित्तविशेषणाङ्गाधिक्य विधत्ते- 'यद्यपर प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चार कुरुते' इति ॥ कश्चिदश्वान दत्त्वा तदानीमेवेष्ट्यनुष्ठाने सत्येवेनातिरिक्तेन सहिता तावन्त तत्र पुरोडाशा दत्ताश्वपर्याप्ता। यत्र तु दानानन्तरमेवेष्टिर्नानुष्ठिता किं तु कचित् कालम् अतिक्रम्य पुनरप्यपरोऽश्वो दत्तस्तदा सातिरिक्तान दत्ताश्वसख्यातान् पुरोडाशान्निरूप्य सौर्यम् अनु निर्वपेत्। तेन आदित्यम् एव उर्ध्वचारिण कुरुते। स चाऽऽदित्यो विलम्बदोष परिहर्तुमपरिहार्येण इत्यभिप्राय ॥

१४ मे ल- 'अश्वान्' नास्ति। १५ ल- °प्रतिगृहीतारम्। १६ प२ल-प्रतिग्राहयिष्यन्।

५. अ इ-कालान्तरे। ६ जो ना हा- गृहीत्वा। ७ आ ह ग हो१- पुरोडाशा पर्याप्ता, इ- पुरोडाशा दत्ताश्वपर्याप्ता क-तत्र पुरोडाशा पर्याप्ता। ८ अ इ-दानादूर्ध्वं न तदानीमेवेष्टि कृता, क आ ना हा- दानानन्तरमेवेष्टिर्नानुष्ठिता। ९ ग- निरूप्य। १०. क हा- नातिरिक्तान।

ऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजतेऽपोनप्त्रीयं चरुं (२) पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनꣳ शान्त उप तिष्ठते ॥१२॥

[ मुञ्चति चरुꣳ सप्तदश च । ]

अप । अवभृथमित्यव भृथम् । अवेति । एति । अप्स्वित्यप्-सु । वै । वरुण । साक्षादिति स-अक्षात् । एव । वरुणम् । अवेति । यजते । अपोनप्त्रीयमित्यप –नप्त्रीयम् । चरुम् (२) । पुन । एत्येत्या - इत्य । निरिति । वपेत् । अप्सुयोनिरित्यप्सु योनि । वै । अश्व । स्वाम् । एव । एनम् । योनिम् । गमयति । स । एनम् । शान्त । उपेति । तिष्ठते ॥ १२ ॥

[ मैस २३३ कासं १२६ ]

अप अवभृयकर्मार्थम् अवैति । अपोनप्त्रीय चरुम् अवभृयात् एत्य पुन नि वपेत् । " अपोनप्त्रपानप्तृभ्या घ " (पा ४ २ २७), " छ च " ( पा ४ २ २८ ) इति छप्रत्यय । अपानप्ता चतुर्थ अपोनप्ता । छान्दस सुगागम । अप्सुयोनिरिति । " अपो योनियन्मतुपु सप्तम्या अलुक् " ( पा ६ ३ १ वा ७ ) इत्यलुक् । शान्त इति । निवृत्तवरुण पाशादिदोप सुखहेतुरेव उपतिष्ठते मित्रवदुपसप्राप्नोति ॥

इति तृतीये द्वादशोऽनुवाक ॥

अप इति ॥ दृष्टाङ्गत्वेनावभृथ विधत्ते– 'अपोऽवभृथमवैत्यप्सु वै वरुण साक्षादेव वरुणमव यजते ' इति ॥ अप प्राप्य तत्र अवभृथ कर्म कुर्यात् । तेन वरुणो निराकृतो भवति ॥

अपोनप्त्रीयमिति ॥ अङ्गान्तर विधत्ते– ' अपोनप्त्रीय चरु पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्व स्वामेवैन योनि गमयति स एनꣳ शान्त उप तिष्ठते ' इति ॥ अपोनप्ता देवता यस्य सोऽयमपोनप्त्रीयस्त चरुम् अवभृथदेशाद्यज्ञभूमौ समागत्य निर्वपेत् । अप्सु योनिरुत्पत्तिर्यस्याश्वस्य सोऽयम् अप्सुयोनि । उच्चै श्रवसोऽश्वस्य समुद्रादुत्पत्ति पुराणेषु प्रसिद्धा । तस्मादपोनप्त्रीयचरुणा तमश्व स्वकीययोनिगामिन करोति । स चाश्व शान्त सन् रोगमनुत्पाद्य एन यजमान सेवते ॥

अत्र मीमासा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम् –

" अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥
अविशेषाद्द्वयोर्यद्वा न देय केसरील्यत ।
निषेधाल्लौकिके तत्र प्रायश्चित्तिरिय भवेत् ॥
न जलोदरहेतुत्व प्रमित लौकिके क्वचित् ।
वैदिके तु श्रुत "तस्मात् तत् प्रायश्चित्तयेऽत्र सा " ॥ ( जैन्या ३ ४ २६ २८ ) ॥

इदमाम्नायते " यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेत् " इति । तत्र प्रतिग्रहशब्दो दानपर इत्यनन्तरमेव वक्ष्यते । तत्र "विशेषाश्रवणाल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टि रित्येक पक्ष । ' न केसरिणो ददाति ' इति स्मृत्या मित्रज्ञात्यादिभ्य प्रीत्या क्रियमाणमश्वदान लौकिक निषिद्ध, तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिरिति द्वितीय पक्ष । " वरुणो वा एत गृह्णाति योऽश्व प्रतिगृह्णाति "

१७ त१ त२– उपतिष्ठति ।

११ ङ–यस्मात् । १२ उ पा– विशेषेणाश्रवणा° ।

इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम्। वैदिकस्य तु[13] जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सेष्टिः प्रायश्चित्तम्। अस्ति हि वैदिकमश्वदानं, "वडबा दक्षिणा" (तैस १·८·२१) इत्यादिश्रवणात्॥

[14]तत्रैवान्यच्चिन्तितम्–

"यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि॥
असजातविरोध्यर्थवादात् [15]दातुः प्रजापतेः।
इष्टिः श्रुता ततो [16]दातुर्णिजर्थेऽपि विधि नयेत्" ॥ (जैन्या ३·४·२९-३०)॥

पूर्वोदाहृते वाक्ये 'प्रतिगृह्णीयात्' इति [17]विधिपदश्रवणात् प्रतिग्रहीतुरिष्टिरिति चेत्। न। उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः। उपक्रमश्चैवं श्रूयते– "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत" (तैस २·३·१२) इति। अनयद्दत्तवान्। स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्। तेन च रोगेण ग्रस्तः प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रोगादमुच्यतेत्यत्र दातुरिष्टिरित्यवगम्यते। असजातविरोध्युपक्रमानुसारेण विधायकपदमपि प्रतिग्राहयेदित्येवमन्तर्भावितणिजर्थपरतया व्याख्येयम्॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्–

"[18]प्रतिग्रहे तु बह्वश्वे[18] पूर्वन्यायोऽस्ति वा न वा।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य [19]शोषतः" ॥ (जैन्या ५·२·३)॥

"यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान् निर्वपेत्" इति। अत्र [20]शतसङ्ख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशोपूदाहृतप्रत्ययश्रवणेन साहित्यं प्राप्तम्। तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनुष्ठेय इति चेत्। मैवम्। [21]तप्तेषु कपालेषु क्रमेण पुरोडाशानधिश्रित्य [22]यावता कालेन[22] प्रथमपुरोडाशे द्वितीयसंस्कारं कर्तुमागच्छति तावता [23]कालेनासौ शुष्को [24]भस्मीभवति। तस्मादेकैकस्मिन् पुरोडाशे कृत्स्नधर्मसमापनमित्येवं काण्डानुसमयोऽभ्युपेतव्यः॥

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"तन्त्रं चतुष्कपालानां भेदो वा तन्महत्त्वतः।
कुम्भीवत् तन्त्रता मैवं भेदः स्यात् प्रकृताविव" ॥ (जैन्या ११·४·१८)॥

इदं श्रूयते– "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणाञ्चतुष्कपालान्निर्वपेत" इति। यथा प्राजापत्येषु कुम्भ्या महत्त्वेन तन्त्रं तथाऽत्रापि कपालमहत्त्वेन तन्त्रमिति चेत्। मैवम्। प्रकृतौ प्रतिपुरोडाशं कपालभेदेन तद्वदत्रैव चोदकप्राप्तेः। किं चात्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्थापितेष्वेकस्यैव कपालस्यैकदेशे पुरोडाशस्यैकस्य समासेन कोऽपि पुरोडाशश्चतुष्कपालः निर्वपेत्। तस्मात् प्रतिपुरोडाशं [25]कपालचतुष्कभेदः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

१३. हो१– तत्र°। १४. आ– अत्रैव। १५. ठ.हो१–धातुः। १६. ठ– धातु स्यात् निज°। १७. ठ.हो१– 'विधि°' नास्ति। १८–१८. उ. क.जा.पा.हा– प्रतिग्रहीतुर्बह्वश्वे। १९. हो१– दोषतः; उ.ओ.जा.प.हा– दोषतः। २०. उ.पा– °दिदक्षु°। २१. आ.हा– तप्तेषु च। २२–२२. क– यावता कालेन। २३. गे– 'कालेन' नास्ति। २४. गे–भस्मीभवति। २५. क.गे.हो१–°चतुष्कभेदः।

**या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतं या वामिन्द्रावरुणा सहस्याꣳ रक्षस्याꣳ तेजस्याꣳ तनूस्तयेममꣳहसो मुञ्चतं**

या । वाम् । इन्द्रावरुणेतीन्द्रा - वरुणा । यतव्या । तनूः । तया । इमम् । अꣳहसः । मुञ्चतम् । या । वाम् । इन्द्रावरुणेतीन्द्रा - वरुणा । सहस्या । रक्षस्या । तेजस्या । तनूः । तया । इमम् । अꣳहस । मुञ्चतम् ।

"यः पाप्मना गृहीत स्यात् तस्मा एतामैन्द्रावरुणीं पयस्या निर्वपेत्" (तैस २·३ १३) इत्यादि कारण वक्ष्यति । ता पुरोडाशात् चतुर्धा कृत्वा व्यूहति– 'या वामिन्द्रावरुणा' इति चतुर्भिर्मन्त्रैः ॥ यतव्या सहस्या रक्षस्या तेजस्येति चतुर्णां विशेष· । शेषस्तुल्य । हे इन्द्रावरुणा इन्द्रावरुणौ । "सुपा सुलुक्°" (पा ७·१ ३९) इत्याकार । "देवताद्वन्द्वे च" (पा ६·३ २६) इति पूर्वपदस्यानङ् । वा युवयोः या यतव्या तनूः शरीरम् । यातूनि यातुधाना. रक्षासि तेषा हननी रक्षोयातूना हन्त्रीति यावत् । तया तन्वा इम यजमानम् अꣳहसः पापात् मुञ्चत शोधयतम् ॥ या वामित्यादि ॥ या सहस्या तनूः । सहो बलम् अभिभवितृत्व तद्वती । "मत्वर्थे मासतन्वो" (पा ४·४·१२८) इति यत् । समानमन्यत् ॥ या वामित्यादि ॥ या रक्षस्या तनूः रक्षसां हननी । स एव यत् । ततोऽनुपङ्ग ॥ या वामित्यादि ॥ या तेजस्या तनू तेजस्विनी । पूर्वन्मत्वर्थीयो यत् । स्पष्टमन्यत् ॥

चतुष्कपाला विहिता द्वादशी स्वश्ववानिनः ॥

अथ त्रयोदशे पाप्मना गृहीतस्येष्टि विधित्सुरादौ मन्त्रान् पठति । कल्पः– "ऐन्द्रावरुणं पुरोडाशं निरुप्यैन्द्रावरुणीं पयस्यां निर्वपेत् । उद्वास्यालकृत्य पयस्याया [1]पुरोडाशमवदधाति । एतयैव प्रच्छायाऽऽसादयति । अथास्मात् प्रतिदिशं पयस्या व्यूहति । या वामिन्द्रावरुणा यतव्या तनूरित्येतैरेव पुन समूहति । [2]"अमुक्तमिति मन्त्रान्तान्[2] सनमति । सहैव [3]पयस्याया पुरोडाशस्यावद्यति । यो वामिन्द्रावरुणावग्नौ स्राम इत्युपहोमा." (आपश्रौ १९.२५·१-८) इति ।

येति ॥ तत्र प्रथमस्य व्यूहनमन्त्रस्य पाठस्तु– 'या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतम्' इति ॥ हे इन्द्रावरुणौ, वा युवयो या तनू यतव्या पापात् पालयितुं प्रयत्नवती तया तन्वा यजमानं पापात् [4]मोचयतम् ॥

येति ॥ द्वितीयतृतीयचतुर्थमन्त्राणा पाठस्तु – 'या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूस्तयेममꣳहसो मुञ्चतम्' इति ॥ 'सहस्या' इत्यत्र 'तनूः' इत्यस्यान्त्यभागस्यानुषङ्ग· । 'तेजस्या' इत्यत्र 'या वाम्' इत्याद्यभागस्यानुषङ्ग । 'रक्षस्या' इत्यत्रोभयोर्भागयोरनुषङ्ग· । सहो बलं तदर्हतीति सहस्या । रक्षो रक्षण तदर्हतीति रक्षस्या । तेजो रोचनशक्तिस्तदर्हतीति तेजस्या ॥

१. इ- °दधातीति । २-२. आ- मुञ्चतमित्यस्य स्थानेऽमुक्तमिति मन्त्रान्तान् क- मुञ्चतमिति मन्त्रान् । ३. अ इ- पयस्यया । ४ आ- मोचने ।

यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे यो वामिन्द्रावरुणा द्विपात्सु पशुषु* चतुष्पात्सु* गोष्ठे* *गृहेष्व*प्स्वोषधीषु* वनस्पतिषु* स्रामस्तं वामेतेनाव यजे

---

य । वाम् । इन्द्रावरुणाविर्तीन्द्रा वरुणौ । अग्नौ । स्रामं । तम् । वाम् । एतेनं । अवेति । यजे । य । वाम् । इन्द्रावरुणेतीन्द्रा-वरुणा । द्विपात्स्विति द्विपात् सु । पशुषु । चतुष्पात्स्विति चतुष्पात् सु । गोष्ठ इति गो स्थे । गृहेषु । अप्स्वित्यप् सु । ओषधीषु । वनस्पतिषु । स्रामं । तम् । वाम् । एतेनं । अवेति । यजे ।

---

अथोपहोमा अष्टौ–' यो वाम् ' इत्यादय । अग्न्यादयो वनस्पत्यन्ता विशेषा । शिष्टमष्टस्वप्यनुपज्यते । स्रावयति नाशयतीति स्राम पाप्मा येनाय गृहीत । य[2] वा युवयो सबन्धिनो यजमानस्य अग्नौ स्राम अग्न्याधार पाप्मा तेन कृत त वा युवयो सबन्धिनाऽनेन कर्मणा अव यजे नाशयामि हे इन्द्रावरुणौ । अवपूर्वो यजिर्विनाशकर्मा । य द्विपात्सु पशुषु स्राम इति द्वितीये । द्विपदो मनुष्या । " सख्यासुपूर्वस्य " ( पा ५ ४ १४० ) इति लोप समासान्त । " पाद पत् " ( पा ६ ४ १३० ) इति पद्भाव, " द्वित्रिभ्या पाद्न्° " ( पा ६ २ १९७ ) इत्युत्तरपदान्तोदात्तत्वम् । य चतुष्पात्सु पशुषु स्राम इति तृतीये । स्वरवर्जं पूर्ववत् । गवादय चतुष्पाद । य गोष्ठे इति चतुर्थे । गावस्तिष्ठन्त्यस्मिन्निति " सुपि स्थ " ( पा ३ २ ४ ) इति क । " अम्बाम्ब° " ( पा ८ ३ ९७ ) इत्यादिना षत्वम् । य गृहेषु इति पञ्चमे । " गेहे क " ( पा ३ १ १४४ ) इति क । य अप्सु इति षष्ठे । " ऊडिदम्° " ( पा ६ १ १७१ ) इति विभक्तेरुदात्तत्वम् । य ओषधीषु इति सप्तमे । यवादय ओषधय । " ओषधेश्च विभक्तौ° " ( पा ६ ३ १३२ ) इति दीर्घत्वम् । य वनस्पतिषु

---

य इति ॥ उपहोमेषु प्रथममन्त्रस्य पाठस्तु– ' यो वामिन्द्रावरुणावग्नौ स्रामस्त वामेतेनाव यजे ' इति ॥ हे इन्द्रावरुणौ अग्नौ वा युवयो य स्राम पापविशेषो युवयोर्होमार्थे वह्नौ यजमानेन य अपराध कृत तम् अपराध वा युवयो सबन्धिनम् एतेन होमेन अव यजे विनाशयामि ॥

य इति ॥ द्वितीयादीना सप्ताना मन्त्राणा पाठस्तु– ' यो वामिन्द्रावरुणा द्विपात्सु पशुषु चतुष्पात्सु गोष्ठे गृहेष्वप्स्वोषधीषु वनस्पतिषु स्रामस्त वामेतेनाव यजे ' इति ॥ ' द्विपात्सु पशुषु ' इत्यत्र ' स्रामस्त वाम् ' इत्याद्युत्तरभागस्यानुषङ्ग । ' वनस्पतिषु स्राम ' इत्यत्र ' यो वाम् ' इत्यादे प्रथम भागस्यानुषङ्ग । ' चतुष्पात्सु ' इत्यादिषु पञ्चसु पूर्वोत्तरभागयोरनुषङ्ग । हे इन्द्रावरुणौ, युवयो सबन्धी य यजमानस्य द्विपात्सु पशुषु मनुष्यादिरूपेषु य स्राम पापविशेष तं पापविशेषं युवयो संबन्धिना एतेन कर्मणा विनाशयामि । एव सर्वत्र योज्यम् ॥

---

१ मै८– तेनायम् । २ मै८– ' य ' इत्यस्यानन्तरम् ' अन्य ' । ३ मै– द्विपाद ।

---

५ आ– उपहोमे । ६ अ इ– अग्नौ, क जो ना हा– अग्नौ यज्ञौ । ७ आ ठ क जो ना पा ८ हा शो १– ' याम् ' नास्ति । ८ आ– संबन्धिना ।

इन्द्रो वा एतस्य(१)न्द्रियेणापं क्रामति वरुण एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत् पयस्या भवति पय एवास्मिन् तया दधाति

इन्द्रः । वै । एतस्य ( १ ) । इन्द्रियेण । अपेति । क्रामति । वरुण । एनम् । वरुणपाशेनेति वरुण-पाशेन । गृह्णाति । य । पाप्मना । गृहीत । भवति । य । पाप्मना । गृहीत । स्यात् । तस्मै । एताम् । ऐन्द्रावरुणीमित्यैन्द्रा वरुणीम् । पयस्याम् । निरिति । वपेत् । इन्द्र । एव । अस्मिन् । इन्द्रियम् । दधाति । वरुण । एनम् । वरुणपाशादिति वरुण पाशात् । मुञ्चति । पयस्या । भवति । पय । हि । वै । एतस्मात् । अपक्रामतीत्यप क्रामति । अथ । एष । पाप्मना । गृहीत । यत् । पयस्या । भवति । पय । एव । अस्मिन् । तया । दधाति ।

इत्यध्मे । पलाशादयो वनस्पतय । वनस्पत्यादित्वात् पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ( पा ६ २ १४० ) । पारस्करप्रभृतित्वात् सुट् (पा ६ १ १५७) ॥

अथात पयस्या विदधाति [4]ब्राह्मणम्– 'इन्द्रो वा एतस्य ' इत्यादि ॥ अस्य इन्द्रियेण सह इन्द्र अप क्रामति, वरुण च एन वरुणपाशेन गृह्णाति, य पाप्मना गृहीत भवति । यस्मादेव तस्मात् य पाप्मना गृहीत स्यात् तस्मै तत्पापशमनार्थं ऐन्द्रावरुणीं पयस्या नि वपेत् । पयसि भवा पयस्या आमिक्षा । अत्राय प्रयोग *– इन्द्रावरुणाभ्या चतुरो मुष्टीन् व्रीहीणा निरुप्य दक्षिणार्धे गार्हपत्यस्यैकादश कपालान्युपदधाति । यदैव(त) पुरोडाशमधि वृ(धृ)णक्ति तदा एतामामिक्षा गार्हपत्ये अधि [5]श्रपयति । अथैन पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य [6]आमिक्षया सम्प्रच्छाद्य [6]अन्तर्वेद्यामासादयतीति ॥ पयस्या भवतीत्यादि ॥ गतम् ॥

इन्द्र इति ॥ अथेष्टिं विधत्ते– 'इन्द्रो वा एतस्येन्द्रियेणाप क्रामति वरुण एन वरुणपाशेन गृह्णाति य पाप्मना गृहीतो भवति य पाप्मना गृहीत स्यात् तस्मा एतामैन्द्रावरुणीं पयस्या निर्वपेदिन्द्र एवास्मिन्निन्द्रिय दधाति वरुण एन वरुणपाशान्मुञ्चति ' इति ॥ [9]य पापगृहीत एतदीयेन इन्द्रियेण सह इन्द्र अपगच्छति,[9] [10]वरुण रोगेण एन बाधते [10] [11]अत [12]पाप्मना गृहीतस्य तदुभय विषयेष्टि [12] । पयसि प्रभवाऽऽमिक्षा पयस्या ॥

पयस्येति ॥ ता प्रशसति– 'पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत् पयस्या भवति पय एवास्मिन् तया दधाति ' इति ॥ पय शब्देन क्षीरादिसात्त्विकाहारजनितश्रद्धया

४ ल–'ब्राह्मणम्' नास्ति । * (बौश्री १३ ३३ ) । ५. त१ त२ मै ल– श्रयति । ६–६ तै१ त२ मै ल– आमिक्षाया सम्वेश्य ।

९–९ जो पा– 'य पाप गच्छति ' नास्ति । १०–१० जो ना पा–एन वरुणपाशेन गृह्णाति । ११ जो पा–'अत ' नास्ति । १२–१२ जो– पाप्मना गृहीतस्य तस्मात् तदुभयविषयेष्टि , पा– पाप्मना गृहीतस्य तस्य तदुभयविषयेष्टि , क ड श्रे हो१–पापगृहीतस्य तदुभयविषयेष्टि , हा–पाप्मना गृहीतस्य तस्मादुभयविषयेष्टि ।

**पयस्यायां ( २ ) पुरोडाशमवं दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति**

पयस्यायाम् (२)। पुरोडाशम्। अवेति। दधाति। आत्मन्वन्तमित्यात्मन्-वन्तम्। एव। एनम्। करोति। अथो इति। आयतनवन्तमित्यायतन-वन्तम्। एव। चतुर्धेति चतुः-धा। वीति। उहति। दिक्षु। एव। प्रतीति। तिष्ठति। पुनः। समिति। उहति। दिग्भ्य इति दिक्-भ्यः। एव। अस्मै। भेषजम्। करोति।

पयस्यायामिति॥ आमिक्षाया सम्प्रच्छाद्य पुरोडाशम् आसादयति। आत्मन्वन्तमिति। आत्मवत्त्व बलवत्त्वम्। "अनो नुट्" (पा ८.२.१६), "ह्रस्वनुड्भ्याम्°" (पा ६.१.१७६) इति मतुप उदात्तत्वम्। अथो अपि च आयतनवन्त गृहवन्तम् एव एन करोति, अनेन प्रच्छादनेन पयस्याया पिधानेन॥

चतुर्धेति॥ प्रतिदिश पयस्या व्यूहति पुरोडाश चतुर्धा कृत्वा व्यूहति। एतेन दिक्षु प्रतिष्ठितो भवति॥

पुनः समूहतीति॥ "दिग्भ्य अवकृष्य" समूहीकरोति। दिग्भ्य एव आकृष्य अस्मै यजमानाय भेषज पापरोगशमन करोति॥

कृतं [13]पुण्यमुपलक्ष्यते। [14]तत्पुण्यानुष्ठानमेव एतस्मात् यजमानात् [15]यदि अपक्रामति तदानीम् एष पाप्मना गृहीतः भवति। यदि अत्र हवि पयस्या भवेत् तर्हि अस्मिन् यजमाने तया पयस्यया [16]आहारोपलक्षितं पुण्यमाहित[16] भवति॥

पयस्यायामिति॥ [17]अथाप्रास [18]कंचिदंशविशेष विधत्ते–'पयस्यायां पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव' इति॥ शरीरसदृशस्य कठिनस्य पुरोडाशस्य [19]प्रक्षेपेण एनं यजमानम् आत्मन्वन्तं दृढशरीरोपेतं करोति। सति हि पापे तज्जन्यरोगेण शरीरस्यादार्ढ्यम्। किं च [20]पयस्याया आधारत्वेन[20] [21]यजमानोऽप्यायतनवान् गृहग्रामादिरूपाधारवान् भवति[21]॥

चतुर्धेति॥ 'या वामिन्द्रावरुणा' इत्यादिमन्त्रैर्हविषो विभागं विधत्ते–'चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति' इति॥

पुनरिति॥ विभक्तस्यैकीभाव विधत्ते–'पुन. समूहति दिग्भ्य एवास्मै भेषजं करोति' इति॥

७-७. तै१ तै२– कर्तव्यमपकृष्य, ल– कर्तव्य चापकृष्य।

१३. हा–प्रभावमु°। १४. द.हो१– तत्पुण्यमेव। १५. क.शं– यदा। १६–१६. अ.इ.शं– शरीरोपलक्षितं पुण्यं। १७. ह–'अथ' नास्ति। १८. शं– कंचिदङ्गविशेषं। १९. क.हा– प्रक्षेपेन। २०–२०. अ.आ.इ– पयस्याधारत्वेन। २१–२१. आ.ना.जो–यजमानमप्यायतनवन्तं गृहग्रामादिरूपाधारवन्तं, अ–यजमानो...रूपाधारोपेतो भवति।

समूह्यावं द्यति यथाऽऽविद्धं निष्कृन्तति तादृगेव तद्यो वामिन्द्रा-
वरुणावग्नौ स्रामस्तं वामेतेनाव यज इत्याह दुरिष्ट्या एवैनं
पाति (३) यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनाव यज

समूह्येति सम् ऊह्य। अवेति। द्यति। यथा। आविद्धमित्या विद्धम्। निष्कृन्ततीति नि-कृन्तति। तादृक्। एव। तत्। य। वाम्। इन्द्रावरुणाविती न्द्रा वरुणौ। अग्नौ। स्रामः। तम्। वाम्। एतेन। अवेति। यज। इति। आह। दुरिष्ट्या इति दुः-इष्ट्या। एव। एनम्। पाति (३)। य। वाम्। इन्द्रावरुणेतीन्द्रा-वरुणा। द्विपात्स्विति द्विपात् सु। पशुषु। स्रामः। तम्। वाम्। एतेन। अवेति। यज।

समूह्येति॥ पयस्यया सह पुरोडाशस्य अवद्यति। यथेति। आविद्ध दोषेण पीडित निष्कृन्तति कर्तनेन निष्कालितदोष करोति तादृक् इद समूह्यावदानम्।

'यो वाम्' इत्यादय उक्ता उपहोमा। दुरिष्ट्या इत्यादि। अग्नौ कृत पाप दुरिष्टिरेवेति। "तादौ च°" (पा ६ २ ५०) इति गते प्रकृतिस्वरत्वम्॥

'यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्राम' इति द्वितीयमन्त्र दर्शयति। उपलक्षण चैतत् तृतीयादीनाम्। एतावतीर्वा इत्यादि। प्रजायन्त इति प्रजा। "अन्येष्वपि दृश्यते" (पा ३

समूह्येति॥ मिश्रितयो पुरोडाशामिक्षयो सहावदान विधत्ते– 'समूह्याव द्यति यथाऽऽविद्ध निष्कृन्तति तादृगेव तत्' इति॥ यथा लोके वैरिणा मुक्तम् आविद्ध स्वशरीरे बाणादिकं शस्त्रादिना निष्कृष्य छिनत्ति तादृक् एव तत् समूह्य अवदान सम्पद्यते॥

य इति॥ उपहोमेषु प्रथममन्त्र व्याचष्टे– 'यो वामिन्द्रावरुणावग्नौ स्रामस्त वामेतेनाव यज इत्याह दुरिष्ट्या एवैन पाति' इति॥ होमाधारे अग्नौ कृतेन स्रामेणापराधेन दुरिष्टिर्भवति तम् अपराधम् अव यज इति उक्त्या तस्या दुरिष्टे सकाशात् एन यजमान रक्षति॥

य इति॥ अवशिष्टाना मन्त्राणा तात्पर्य दर्शयति– 'यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्त वामेतेनाव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतय प्रजा पशव उपजीवनीयास्ताभ्य एवास्मै वरुणपाशान्मुञ्चति' इति॥ 'पशुषु स्रामस्त वाम्' इत्येवमनुपन्नो योनमिया प्रदर्शित। प्राणिभिरुपजीवनयोग्या

८. तै१ तै२ प२ ल– निष्कालितदोषम्। ९–९. तै१ त२ मै ल– तादृशीदम्। १०. त१ तै२ मै ल– इति।

२२ अ इ– सहृदवदान। २३ उ पा हा– स्वशरीरादिके। २४ क हा हो१–आच्छिनत्ति। २५ आ–उपहोमे। २६ क ड बो ना पा हा–कृतेन। २७ आ उ क बो ना पा हा हो१–प्राण्युप°, अ इ– माणिनामुप°।

इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति ॥ १३ ॥

[ एतस्य पयस्याया पाति षड्त्रिंशतिश्च । ]

इति । आह । एतावती । वै । आप । ओषधय । वनस्पतय । प्रजा इति प्र जा । पशव । उपजीवनीया इत्युप - जीवनीया । ता । एव । अस्मै । वरुणपाशादिति वरुण पाशात् । मुञ्चति ॥ १३ ॥

[ मैस २ ३ १, कास ११ ११ ]

२ १० १ ) इति ड । आप ओषधय वनस्पतय पशव च द्विप्रकारा इत्येतावत्य प्रजा प्राणिनाम् उपजीवनीया । [११]तस्मादुपजीव्यत्वात् एषामेव मन्त्रेषूपादान, न [१२]सर्पादीनामिति भाव । [१३]एताश्च एतैरुपहोमै वरुणपाशात् मुञ्चति अस्मै यजमानाय । यथास्यापहत पाप्मान [१४]उपजीव्या स्युरिति ।

इति द्वितीये तृतीये त्रयोदशोऽनुवाक ॥

अबादय पञ्च पदार्था । तत्र पशुशब्देन द्विपादश्चतुष्पादश्च गृह्यन्ते । [२८]गृहा अप्यत्रोपलक्ष्यन्ते[२८] । या एतावत्य उपजीवनीया ता सर्वा अपि यजमानार्थं वरुणपाशात् उपद्रवान्मोचयति ॥

अत्र [२९]विनियोगसंग्रह

या वामिति चतुर्मन्त्रैश्चतुर्धा व्यूहते हवि ।
यो [३०]वामित्यष्टभिर्मन्त्रैरुपहोमा [३१]इहेरिता ॥ १ ॥
द्विपादित्यादिना मन्त्रभेद सप्तविधो भवेत् ।
त्रयोदशेऽनुवाकेऽस्मिन् मन्त्रा द्वादश [३२]वर्णिता ॥ २ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाक ॥ १३ ॥

११ त१ त२ मै ७ – °पजीवनत्वात् । १२ त१ त२ मै ल – सर्वादीनाम् । १३ मै४– 'एताश्च' नास्ति । १४ त१ त२ मै ल– उपजीवा ।

२८–२८ अइ– 'गृहा लक्ष्यन्ते' नास्ति । २९ गृ– संग्रहश्लोका । ३० अइढगृ हो१– यामित्यादिभिर्मन्त्रैरुपहोमा । ३१ अआइउजोनापा– उदीरिता । ३२ उकजोनापा हा– कीर्तिता ।

स प्रत्नवन्*नि काव्ये*न्द्रं वो विश्वतस्परी*न्द्रं नरः* ॥

स॰ । प्रत्नवदिति प्रत्न वत् । नीति । काव्या । इन्द्रम् । व । विश्वत । परीति । इन्द्रम् । नर ॥

अथेष्टिकाण्डे याज्याकाण्डम् । तत्र– "यो यज्ञविभ्रष्ट स्यात् तस्मा एतामिष्टि निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपाल सौम्य चरुम्" (तैस २ ३ ३) इत्येतस्या त्रिहविष आग्नेयस्य पुरोऽनुवाक्या– 'स प्रत्नवत्' इति गायत्री ॥ व्याख्यातेय– "हिरण्यगर्भ" (तैस २ २ १२) इत्यत्र । इह तु प्रतीकग्रहणम् । हे [V]अग्ने, [V]स त्व [V]प्रत्नवत् प्रागिव । यद्वा पुराणो हि । [V]नवीयसा नवतरेण [V]द्युम्नेन यशसा [V]सयता त्वामेव सगच्छता [ [V]भानुना भासनशीलेन ] [V]बृहत् [V]ततन्थ भृश विश्व विस्तारयेति ॥

तत्रैव याज्या– 'नि काव्या' इति त्रिष्टुप् ॥ इयमपि तत्रैव (तैस २ २ १२) व्याख्याता । इद च प्रतीकग्रहणम् । [V]काव्या कवित्वेन द्रष्टृत्वेन आत्मीयेन [V]वेधस यजमानान् [V]शश्वत॰ अविच्छिन्नयागान् [V]नि [V]क नियमेन करोतु । [V]नर्या नर्याणि नरेभ्यो हितानि [V]पुरूणि बहूनि धनानि [V]हस्ते [V]दधान ददान । एव कुर्वन्नयम् [V]अग्नि [V]रयीणा सर्वेषा सबन्धी [V]रयिपति भवतु । विश्वान्यपि [V]अमृतानि अमरणहेतुभूतानि [V]सत्रा सहभूतानि हिरण्यादीनि [V]चक्राण सोऽस्माक यज्ञविभ्रेषदोषम् अपनयत्विति ।

अथैन्द्रस्य पुरोऽनुवाक्या– 'इन्द्र व' इति गायत्री ॥ इयमपि [1]पञ्चान्ते (तैस १ ६ १२) व्याख्याता । प्रतीकमत्र गृह्यते । हे ऋत्विग्यजमाना, [V]व युष्माक [V]जनेभ्य पुत्रादिभ्य युष्मभ्यमस्मभ्य च सर्वार्थं [2V]विश्वत उपरि स्थितम् [V]इन्द्र [V]हवामहे आह्वयाम । यद्वा–[3]विश्वस्मात् उपरि आह्वयाम । [V]अस्माकम् एव [V]केवल साधक यज्ञविभ्रेषादिदोषापनयनेन स्वामी भवत्विति ॥

तत्रैव याज्या– 'इन्द्र नर' इति त्रिष्टुप् ॥ इयमपि तत्रैव (तैस १ ६ १२) व्याख्याता । प्रतीकग्रहणमिदम् । [V]नर मनुष्या [V]इन्द्रम् एव [V]नेमधिता सर्वेषा हविषामर्धेन

विहिता पापिनस्त्विष्टिरनुवाके त्रयोदशे ॥

स इति ॥ अथास्मिन्नन्तिमे चतुर्दशेऽनुवाके काम्ययाज्या[ पुरोनुवाक्या ] उच्यन्ते ॥ तत्र त्रिहविष्का [1]'सेय यज्ञविभ्रष्टेष्टि' तृतीयानुवाके समाम्नाता, तस्या प्रथमद्वितीययोर्हविषो क्रमेण [2]याज्यानुवाक्ययो प्रतीक दर्शयति–'स प्रत्नवन्नि काव्येन्द्र वो विश्वतस्परीन्द्र नर' इति ॥ 'स प्रत्नवन्नवीयसा' [3]इत्यनुवाक्या, 'नि काव्या वेधस' इति याज्या । एतदुभयमाग्नेये हविषि द्रष्टव्यम् । तच्च "[4]हिरण्यगर्भ

१. मै४– इष्यन्ते । २ मै४– विश्वस्य । ३ मै४– विश्वस्या ।

१–१ उ क जो ना पा हा– विभ्रष्टेष्टि, ग्रं.हो–यज्ञविभ्रष्टेष्टि । २ अ इ– याग्यानुवाक्यामु, जो हा–याज्यानुवाक्याया । ३ इ ग्रं.हो१– इति पुरोनुवाक्या । ४ इ–पूर्वमेव, अ– उभयमपि द्वितीयपाठके ।

त्वं नः॑ सोम विश्वतो रक्षा॑ राजन्नघायुतः । न रि॑ष्येत् त्वाव॑तः सखा॑ ॥

त्वम् । नः । सोम । विश्वतः । रक्ष॑ । राजन् । अघायत इत्यघ यत ।
न । रिष्येत् । त्वावत इति त्व वत । सखा ॥

धार्यं भवते आह्वयामि [ आह्वयति ] । ᵛकदा ᵛ यदा ᵛपार्या परलोकाय हिता ᵛपरप्राप्तेर्या साध्वीर्या ᵛधिय कर्माणि ᵛता इन्द्रमेवापेक्षमाणा ᵛयुनजते युञ्जते । तस्मात् स ᵛत्व ᵛशूर ᵛनृपाता नृभि सभक्ता ᵛशवस बलस्य नृभ्यो दाता ᵛतेन वा ᵛ, इत्थभूत ᵛचकान तृप्तिशील ᵛगोमति ᵛव्रजे अस्मान् ᵛआ ᵛभज यज्ञविभ्रेषदोषापनयनेन गोमतोऽस्मान् कुर्विति ॥

अथ सौम्यस्य पुरोऽनुवाक्या– ' त्व न ' इति गायत्री । हे ᵛसोम ᵛराजन्, ᵛन ᵛ अस्मान् ᵛविश्वत विश्वस्मात् ᵛअघायत अघ पापम् अस्माकमिच्छत जनात् ᵛरक्ष । " छन्दसि परेच्छायामपि " ( द पाभा ३ १ ८ ) इति क्यच्, " अश्वाघस्यात् " ( पा ७ ४ ३७ ) इत्यात्वम्, " शतुरनुम ° " ( पा ६ १ १७३ ) इति विभक्तेरुदात्तत्वम् । ᵛत्वावत त्वत्सदृशस्य । " युष्मदस्मद्भ्या छन्दसि सादृश्य उपसख्यानम् " ( पा ५ २ ३९ वा १ ) इति वति, " आ सर्वनाम्न " ( पा ६ ३ ९१ ) इत्यात्वम् । त्वावत हि ᵛसखा कश्चिदपि ᵛन ᵛरिष्येत् यज्ञविभ्रेषादिभि हिंस्यो भवितु नार्हति । तस्मात् तदनुरूपमस्मान् रक्ष । " द्व्यचोऽतस्तिङ " ( पा ६ ३ १३५ ) इति सहिताया रक्षेत्यस्य दीर्घत्वम् ॥

आपो ह " ( तैस २ २ १२ ) इत्यस्मिन्ननुवाके ' व्याख्यातम् । ' इन्द्र वो विश्वतस्परि ' इत्यनुवाक्या, ' इन्द्र नरो नेमधिता ' इति याज्या । एतदुभयमैन्द्रे हविषि द्रष्टव्यम् । तच्च प्रथमकाण्डस्य षष्ठप्रपाठके, व्याख्यातम् ( तैस १ ६ १२ ) ॥

त्वमिति ॥ अथ सौम्यस्य हविष पुरोनुवाक्यामाह–' त्व न सोम विश्वतो रक्षा राजन्नघायत । न रिष्येत् त्वावत सखा ' इति ॥ अघं पापम् अस्मदुपद्रवमिच्छन्नघायस्तस्मात् पापसघात् ᵛविश्वत सर्वस्मात् ᵛन अस्मान् हे सोमराजन, ᵛत्व ᵛरक्ष । ᵛत्वावत त्वादृशस्य प्रभो ᵛसखा कश्चित् समर्थोऽपि त्वदनुग्रहात् न ᵛरिष्येत् अस्मात् हिनस्ति ॥

४ तै१ तै२– तदा । ५–५ मै४– दु ग्गप्राप्ती साधवो वा । ६–६ त१ तै२– वा ।
७ तै१ तै२– ' न ' नास्ति ।

५ गै– तदुभय' ।

काम्येष्टियाज्यापुरोनुवाक्या ]

या ते धामानि दिवि या पृथिव्या या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय ॥
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥

या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्स्वित्यप् सु ।
तेभि । न । विश्वै । सुमना इति सु-मना । अहेडन् । राजन् । सोम । प्रतीति । हव्या । गृभाय ॥
अग्नीषोमेत्यग्नी सोमा । सवेदसेति स वेदसा । सहूती इति स हूती । वनतम् । गिर ।
समिति । देवत्रेति देव त्रा । बभूवथु ॥

तत्रैव याज्या– 'या ते' इति त्रिष्टुप् ॥ हे सोम राजन्, या यानि ते तव धामानि स्थानानि नामानि वा, जन्मानि वा तेजांसि वा दिवि सन्ति, यानि च पृथिव्या यानि च पर्वतेषु, यानि ओषधीषु, यानि वा अप्सु, तेभि तै विश्वै धामभि नामभि सर्वामनाऽस्मभ्यम् उपकुर्वद्भि, स्थानैर्वा सर्वत्र सन्निधानहेतुभि, जन्मभिर्वा नानोपकारहेतुभि, तेजोभिर्वा सर्वदोषोपशमने अहेडन् अक्रुध्यन् आह्वानादिक सहमान अपि तु सुमना सानुग्रहमना एव भूत्वा। "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम्। हेडृ अनादरे। अस्माक हव्यानि प्रति गृभाय प्रतिगृहाण। "छन्दसि शायजपि" (पा ३ १ ८४), "हृग्रहोर्भ °" (पा ८ २ ३२ वा १) इति भत्वम्। प्रतिगृह्य चास्माक श्रेषदोषम् अपनयेति॥

"अग्नीषोमीयमेकादशकपाल निर्वपेद्य कामो नोपनमेत्" (तैस २ ३ ३) इत्यस्या पुरोनुवाक्या– 'अग्नीषोमा' इति गायत्री ॥ हे अग्नीषोमा अग्नीषोमौ। पूर्ववदाकार, "ईदग्ने सोमवरुणयो" (पा ६ ३ २७) इति ईकार, "अग्ने स्तुत्स्तोमसोमा" (पा ८ ३ ८२)

येति॥ तत्रैव याज्यामाह– 'या ते धामानि दिवि या पृथिव्या या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वै सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय' इति॥ हे सोम राजन्, ते तव दिवि पृथिव्यादिषु च प्रदेशेषु यानि धामानि स्थानानि सन्ति, प्रतिप्रदेश पृथगनुवादार्थां यच्छब्दावृत्ति। तेभि विश्वै तै सर्वै स्थानैर्युक्त शोभनमनस्क क्रोधरहित सन् न अस्माक हव्या हवींषि प्रति गृभाय प्रतिगृहाण। यस्मिन् स्थाने त्व स्थितस्तत आगत्य हवि स्वीकुर्वित्यर्थ ॥

अग्नीषोमा इति॥ "अग्नीषोमीयमेकादशकपाल निर्वपेद्य कामो नोपनमेत्" (तैस २ ३ ३) इत्यत्र पुरोनुवाक्यामाह – 'अग्नीषोमा सवेदसा सहूती वनत गिरः। स देवत्रा बभूवथु' इति॥ हे

८ मै४ 'वा' नास्ति। ९ मै४– 'पृथिव्याम्' इत्यस्यानन्तर 'सन्ति'। १० ल–'नामभि' नास्ति। ११ त१ त२ मै ल– सर्वदोषशान्त्यै। १२ त१ त२ मै– अस्थानादिक (?), प२– आस्थानादीक (?) १३. मै४– अपनयत्विति। १४ त१ त२ मै ल–इत्यस्य।

युवमे(१)तानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥

युवम् ( १ )। एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति स क्रतू । अधत्तम् ।
युवम् । सिन्धून् । अभिशस्तेरित्यभि शस्तेः । अवद्यात् ।
अग्नीषोमाविल्यग्नी - सोमौ । अमुञ्चतम् । गृभीतान् ॥

इति पदम् । युवा सवेदसा सवेदसौ समानधनौ सहूती समानहूतौ समानाह्वानौ । " समानस्य छन्दसि° " ( पा ६ ३ ८४ ) इति सभाव । ईदृशौ युवा वनत भजतम् अस्माक गिर स्तुतिवचनानि । देवत्रा देवाश्च स बभूवथु सगतौ भवत । प्रमाणानतिरेक सभव । देवानाम् अप्याराध्यत्वेन वर्तेथाम् । यद्वा—युवा सवेदसा सहूती देवत्रा देवेष्वपि देवोपकारेष्वपि सबभूवथु सगतौ भवत. । " देवमनुष्य° " ( पा ५ ४ ५६ ) इति त्राप्रत्यय । तौ युवाम् अस्माकमपि काममुपनयतमिति ॥

तत्रैव याज्या—' युवमेतानि ' इति त्रिष्टुप् ॥ हे सोम, त्व च अग्नि च युव युवाम् एतानि प्रसिद्धानि दिवि स्थितानि रोचनानि दीपनशीलानि ग्रहनक्षत्रादीनि अधत्तम् अधारयताम् । छान्दसो लङ् । यद्वा—युवामेव रोचनानि दिवि अधत्त स्थापितवन्तौ । सक्रतू समानकर्माणौ । किं च युवामेव सिन्धून् नदी । स्यन्दनात् सिन्धव । रुत्वानुनासिकौ उक्तौ । अभिशस्ते पातकाद्यारोपात् पापात् अवद्यात् परिवादपापाच्च तत्स्थानीयात् कालुष्यादिदोषात् अमुञ्चतम् । गृभीतान् तेन दोषेण गृहीतानपि तान् सिन्धूनपि अमुञ्चतम् । तस्मादेव महानुभावौ युवामस्माक काममुपनयतम् इति ॥

अग्नीषोमौ गिर अस्मदीया स्तुती वनत भजतम् । कीदृशौ ? सवेदसा समानज्ञानयुक्तौ सहूती समानाह्वानयुक्तौ । देवत्रा देवेषु मध्ये स बभूवथु युवा । सभूयैव भवतौ न कदाचिदप्यन्योऽन्यं वियुक्तावित्यर्थ ॥

युवमिति ॥ तत्रैव याज्यामाह—' युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् । युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चत गृभीतान् ' इति ॥ हे सोम, त्वम् अग्नि च इत्येतौ युवां सक्रतू समानकर्माणौ सन्तौ दिवि एतानि रोचनानि नक्षत्रादीनि अधत्तम् अस्थापयतम् । हे अग्नीषोमौ, युवां गृभीतान् सिन्धून् मण्डोदकादिनिमित्तेनापूर्णत्वापवादेन पङ्कादिरूपेण अवद्येन दोषेण च गृहीता सर्वा नदी अभिशस्ते तस्मादवद्यादात् अपवादात् पङ्कादिदुष्टदोषाच्च अमुञ्चतं मोचितवन्तौ । यद्यप्येवम् सर्वसाधारण्यं तथापि तदुपकर्तेनौ स्तुवेते ॥

१५. तै१ तै२ सै७— धारयत ।

६-६ ग१.ग्र१-भिशूर्तार्सग्नौ। ७ क२ग२—स्थोदकादि°, [ द्र ० मुद्रितपुस्तके तान्दिष्यन्तो —' मण्डोदकादि ' ]। ८ आ क— दृष्टा। ९. आ पा— दोषिताय। ३ ड— दूषिताय।

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥
आऽन्यं दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥

---

अग्नीषोमावित्यग्नी-सोमौ । इमम् । स्विति । मे । शृणुतम् । वृषणा । हवम् ।
प्रतीति । सूक्तानीति सु उक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ॥
एति । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परीति । श्येनः । अद्रेः ।
अग्नीषोमेत्यग्नी सोमा । ब्रह्मणा । वावृधाना । उरुम् । यज्ञाय । चक्रथुः । ऊं इति । लोकम् ॥

---

“ अग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकाम ” (तैस २ ३ ३) [16]इत्यस्य पुरोऽनुवाक्या– ‘ अग्नीषोमौ ’ इत्यनुष्टुप् ॥ हे अग्नीषोमौ वृषणा कामाना वर्षितारौ । “ सुपा सुलुक्° ” ( पा ७ १ ३९ ) इत्याकार । इम मे हवम् आह्वान सु शृणुत सुष्ठु शृणुतम् आह्वानप्रयोजन यथावत् कुरुतम् इति यावत् । “ भावेऽनुपसर्गस्य ” ( पा ३ ३ ७५ ) इति ह्वयते अप्, सम्प्रसारण च । किं च–श्रुत्वाऽऽह्वानम् अस्माक सूक्तानि प्रति हर्यत मनसा प्रतिगृह्णीतम् । हर्य गतौ । तथा कृत्वा दाशुषे हविर्दत्तवते [17]तस्मै यजमानाय मयः [18]सुख तद्धेतू[18] भवतम् ॥

[19]अत्रैव याज्या–‘आऽन्यं दिव ’ इति त्रिष्टुप् ॥ उपरिष्टाल्लक्षणत्वात्[20] (द्र तैस २ ६ २) त्रिष्टुप्त्वाच्च केचिदिमां याज्यामाहु । आचार्यस्तु इमां विहाय “ अग्नीषोमा हविष ” इत्युत्तरां याज्यां दर्शितवान् (बौश्रौ १३ २६) । तत्र विकल्प । अन्यम् एक युवयोर्मध्ये अग्नि

---

अग्नीषोमाविति ॥ “ अग्नीषोमीयमष्टाकपाल निर्वपेद्ब्रह्मवर्चसकाम ” ( तैस २ ३ ३ ) इत्यत्र पुरोनुवाक्यामाह– ‘ अग्नीषोमाविमं सु मे शृणुत वृषणा हवम् । प्रति सूक्तानि हर्यत भवत दाशुषे मय ’ इति ॥ हे अग्नीषोमौ वृषणा कामाना वर्षयितारौ, युवा मे मदीयम् इम हवम् आह्वानं सुष्ठु शृणुत सूक्तानि [10]अस्मदीयानि प्रति हर्यत मनसा प्रतिगृह्णीत, दाशुषे हविर्दत्तवते यजमानाय मय सुख भवत सपादयतम् ॥

एति ॥ तत्रैव याज्यामाह– ‘ आऽन्य दिवो मातरिश्वा जभारामथ्नादन्य परि श्येनो अद्रे । अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ’ इति ॥ मातरिश्वा वायु अन्य युवयोरेकमग्निं दिव द्युलोकस्थादादित्यात् आ जभार आहृतवान् । तथा चान्यत्र मन्त्र आम्नायते– “ आ दूतो अग्निमभरद्विवस्वतो वैश्वानर मातरिश्वा परावत ” (ऋस ६ ८ ४) इति । श्येन गायत्र्या पक्षिरूपापन्नारो

---

१६ मै४–इत्यस्या । १७ मै४– अस्मै । १८–१८ तं१ त२ मै ल– सुखहेतू । १९ मै४– तत्रैव । २० त१ त२ मै ल– °लक्षणा ।

---

१० इ उ जो पा– सूक्तसदृशानि ।

अग्नीषोमा हुविषः प्रस्थितस्य वीतः (२) हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥

अग्नीषोमेत्यग्नी सोमा । हविषः । प्रस्थितस्येति प्र-स्थितस्य ।
वीतम् ( २ ) । हर्यतम् । वृषणा । जुषेथाम् ।
सुशर्माणेति सु-शर्माणा । स्ववसेति सु-अवसा । हि । भूतम् ।
अथ । धत्तम् । यजमानाय । शम् । योः ॥

ᵛदिव आदित्यात् ᵛमातरिश्वा वायुः ᵛᵛप्राणप्रवृत्तिरूप ᵛआ ᵛजभार आजहार आनीतवान्, यथा—"आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः" (ऋस ६ ८ ४) इति। ᵛअन्यम् एक सोम ᵛश्येन, गायत्री श्येनो भूत्वा ᵛअद्रेः उच्छ्रितात् स्थानात् तृतीयस्या दिवः ᵛपरि ᵛअमथ्नात् आहरत्। तस्मात् हे[२१] ᵛअग्नीषोमौ एव महानुभावौ ᵛब्रह्मणा ऋगादिना मन्त्रेण परिवृढेन वा अनेन हविषा ᵛवावृधाना वावृधानौ वर्धमानौ। ताच्छीलिकश्चानश् (पा ३ २ १२९), "तुजादीनाम्°" (पा ६ १ ७) इत्यभ्यासस्य दीर्घत्वं, पूर्ववदात्वम्। ᵛउरु विस्तीर्णं लोकं स्थान यत्र यजमानो गच्छति तादृशं ᵛयज्ञाय यजते यजमानाय। यद्वा— यज्ञाय यज्ञफलभोगार्थं यजमानाय। ᵛलोकं ᵛचक्रथुः ᵛᵛउरु कुरुतम्। ᵛउ इति पादपूरण अवधारणार्थो वा। तदर्थमस्मै ब्रह्मवर्चसं दत्तमिति ॥

अथ याज्याविकल्प— 'अग्नीषोमा हविषः' इति त्रिष्टुप् ॥ हे ᵛअग्नीषोमौ, ᵛहविषः ᵛप्रस्थितस्य उपस्थितस्य प्रारब्धस्य वा ᵛवीत खादतम्। वी गत्यादिषु, आदादिक । ᵛहर्यत मनसा

ᵛअन्यं युवयोरेक सोमम् ᵛअद्रेः ᵛपरि ᵛᵛपर्वतवदुन्नततमस्य द्युलोकस्योपरि ᵛअमथ्नात् सोमरक्षकाणा तत्रत्याना मन्थन विलोडन पराजयरूप क्षोभ कृत्वा समानीतवानित्यर्थः ॥ एतच्च—"कद्रूश्च वै सुपर्णी च" (तैस ६ १ ६) इत्यस्मिन्ननुवाके समाम्नातम्। हे ᵛअग्नीषोमौ, युवां ᵛब्रह्मणा ᵛवावृधाना मन्त्रेण वर्धमानौ यज्ञार्थम् ᵛउरु ᵛलोक विस्तीर्णं स्थान[१२] ᵛचक्रथुः उ-[११] कृतवन्तावेव यजमानस्य फलभूत लोकं संपादितवन्तावित्यर्थः ॥

अग्नीषोमा इति ॥ तत्रैव विकल्पिता याज्यामाह— 'अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यत वृषणा जुषेथाम्। सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः' इति ॥ हे अग्नीषोमौ ᵛवृषणा कामाना वर्षयितारौ युवा ᵛप्रस्थितस्य समर्पितस्य ᵛहविषः सार ᵛवीत प्राप्नुत ᵛहर्यत प्रतिगृह्णीत ᵛजुषेथां सेवथां, ᵛसुशर्माणा शोभनसुखयुक्तौ ᵛस्ववसा शोभनरक्षणोपेतौ ᵛभूत भवतम्। ᵛहि यस्मादेवं तस्मात् ᵛअथ अनन्तरं ᵛयजमानाय यजमानार्थं ᵛशं सुखं ᵛयो दुःखादिमिश्रण च धत्तं कुरुतम् ॥

२१ तै१ तै२ मै ख— प्राणवृत्ति°। २०. मै—चे। २३ तै१ तै२ मै ख— 'उरु' नास्ति।

११ दा— पर्वतस्य तदुन्नत°। १२–१२ द दो१— चक्रथु, गे— चक्रथु उरु।

आ प्यायस्व* सं ते*॥

एति। प्यायस्व। समिति। ते॥

प्रतिगृहीत स्पृहयतम्। "°अदुपदेशात्°" (पा ६ १ १८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वर । [v]जुषेथा नित्य सेवेथाम्। पूर्ववल्लसार्वधातुकानुदात्तत्वे शस्योदात्तत्वम्। हे [v]वृषणा वर्षितारौ कामाना युवा [v]सुशर्माणा सुशर्माणा सुग्रहौ सुसुखा वा [v]स्ववसा स्ववसौ शोभनरक्षणा। उभयत्र पूर्ववदात्वम्। "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम्। ईदृशौ युवा यजमानौ [v]भूत भवतम्। "बहुल छन्दसि" (पा २ ४ ७३) इति शपो लुक्, "हि च" (पा ८ १ ३४) इति निघाताभाव । [v]अथ अनन्तर [v]यजमानाय [v]धत्त दत्त [v]श शमन रोगाणा [v]यो यावत्वश्च आगामिना भयानाम्। शाम्यतियौतिभ्या व्यत्ययेन भावे विचि वचनव्यत्यय । यौतेर्वा असुनि अडादशाभाव । अपदान्तेऽपि पूर्ववत्कुत्व, णिद्वद्वारामावश्च। ब्रह्मवर्चसिन च कुरुतमिति॥

"सोमाय राजिने श्यामाक चरु निर्वपेद्य क्ष्व्यात् बिभीयात्" (तैस २ ३ ३) इत्यस्य पुरोऽनुवाक्या–'आ प्यायस्व' इति गायत्री॥ इयमग्निकाण्डे व्याख्यास्यते यत्राऽऽम्नायते प्रकृतौ "[24]मा नो हिꣳसीत्[25]" (तैस ४ २ ७) इत्यत्र। इह तु प्रतीकग्रहणम्। हे [v]सोम, तव प्रसादात् [v]वृष्णिय वीर्यं [v]विश्वत [v]समेतु [v]समागच्छतु। तदर्थं च माम् [v]आ [v]प्यायस्व। किं च [v]वाजस्य अन्नस्य [v]सगथे सगमनार्थं [v]भव इति॥

तत्रैव याज्या– 'स ते' इति त्रिष्टुप्॥ इमामपि तत्रैव (तैस ४ २ ७) व्याख्यास्याम । इह तु प्रतीकग्रहणमस्या । हे [v]सोम तव प्रसादात् [v]पयासि [v]वाजा [v]वृष्ण्यानि च मा समागच्छन्तु[26]। [v]अभिमातिषाह, अभिमाति पाप्मा क्लैब्यहेतु, तस्याभिभवितु तव। किं च [v]अमृताय अमृतत्वार्थम् [v]आप्यायमान [v]दिवि [v]श्रवासि अन्नानि [v]उत्तमानि [v]धिष्व स्थापयेति॥

"ब्राह्मणस्पत्यमेकादशकपाल निर्वपेद्ग्रामकाम" (तैस २ ३ ३) इत्यस्य[27] पुरोऽनुवाक्या–'गणाना त्वा' इति जगती॥ हे [v]ब्रह्मण परिवृढस्य कर्मणो वा [v]पते पालयित । "षष्ठ्या पतिपुत्र°" (पा ८ ३ ५३) इति सत्वम्, "सुबामन्त्रिते°" (पा २ १ २) इति

एति॥ "सोमाय वाजिने श्यामाक चरु निर्वपेत्" (तैस २ ३ ३) इत्यत्र याज्यानुवाक्ययो प्रतीके दर्शयति–'आ प्यायस्व स ते' इति॥ 'आ प्यायस्व समेतु ते' इत्येषा पुरोनुवाक्या, 'स ते पयाꣳसि' इत्येषा याज्या। एते उभे चतुर्थकाण्डस्य द्वितीयप्रपाठके "मा नो हिꣳसीज्जनिता" (तैस २५ ४ २ ७) इत्यस्मिन्ननुवाके समाम्नास्येते अतस्तत्रैव व्याख्यास्येते॥

२४–२५ ल– हि हीयु। २५ त१ त२ मै – समागच्छताम्। २६ पं१ त२ मै ल–सगच्छन्तु। २७ मै४ – इत्यस्या।

गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

गणानाम् । त्वा । गणपतिमिति गण-पतिम् । हवामहे ।
कविम् । कवीनाम् । उपमश्रवस्तममित्युपमश्रवः-तमम् ।
ज्येष्ठराजमिति ज्येष्ठ-राजम् । ब्रह्मणाम् । ब्रह्मणः । पते ।
एति । नः । शृण्वन् । ऊतिभिरित्यूति-भिः । सीद । सादनम् ॥

पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते । त्वां गणानां सर्वेषां संबन्धिनं गणपतिं ग्रामादिसघातस्वामिन हवामहे आह्वयामः । पूर्ववत् सप्रसारणम् । कवीनां क्रान्तदर्शनानामपि कविं क्रान्तदर्शिनम् । उपमश्रवस्तमम् उपमीयते अनेन इत्युपमः, सर्वेषां श्रवसामन्नानाम् उपमानं यस्य श्रवः, न तु केनचिदुपमीयते प्रसिद्धमुपमानमिति, स उपमश्रवाः । "आतश्चोपसर्गे" (पा ३·३·१०६) इत्यङ्, "ङ्यापोः सञ्ज्ञाच्छन्दसोः°" (पा ६·३·६३) इति ह्रस्वत्वम् । [28]यद्वा –करणस्य[28] कर्मविवक्षायाम् "आतश्चोपसर्गे" (पा ३·१·१३६) इति कः । यद्वा—श्रूयते इति श्रवः [29]यस्य *सर्वदा श्रूयते, अत एवोपमश्रवाः न कदाचिद्दृश्यते[29] स उपमश्रवाः, श्रूयमाणोपम इति यावत् । [30]आहिताग्न्यादिः (पा २·२·३७) द्रष्टव्यः[30] । अनुभवाभावार्थेन श्रूयमाणत्वोक्तिः*, 'विषं भुङ्क्ष्व' [31]इतिवदन्यपरत्वात् । सर्वानुपमश्रवसः अतिशेते इति [32]उपमश्रवस्तमः तम्[32] । ज्येष्ठराज ज्येष्ठ [33]प्रशस्ततम राजतीति ज्येष्ठराट् । स त्वम् एवं महानुभावः अस्माकं स्तुतीः शृण्वन् ऊतिभिः रक्षणैः तर्पणैर्वा हेतुभूतैः ताभिर्व्याप्रियमाणाभिरुपलक्षितः सादनम् आत्मीयमासनम् आ सीद अधितिष्ठ । सीदन्त्यस्मिन्निति सादनं, छान्दस दीर्घत्वम् । तया ग्रामाधिपतिरिवासीदन् अस्मभ्यं ग्रामं देहीति ॥

गणानामिति ॥ "ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकामः" (तैसं २·३·२) इत्यत्र पुरोनुवाक्यामाह–'गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्' इति । ब्रह्मणां ब्रह्मणस्पते हे कृत्स्नमन्त्रपते, गणानां गणपतिं कृत्स्नदेवगणस्वामिनं त्वां हवामहे आह्वयामः । कीदृशं त्वाम् ? कविं कवीनां विदुषां मध्ये प्रकर्षेण विद्वांसम्, उपमश्रवस्तमम् उपमानत्वेन श्रवः कीर्तिर्यस्यासावुपमश्रवाः, सर्वगुणसंपन्नत्वेनायमेव सर्वेषां पदार्थानामुपमानमित्येतादृशी कीर्तिः, अतिशयेनोपमश्रवा उपमश्रवस्तमः तादृशं, राज्ञां मध्ये ज्येष्ठो ज्येष्ठराजः तादृशम् । यथोक्तगुणोपेतस्त्वं नः अस्माकम् ऊतिभिः पालनैर्निमित्तभूतैर्युक्तः सन् सादनम् अस्मिन् कर्मण्युपवेशनम् आ सीद प्राप्नुहि ॥

२८. तै१.तै२– यद्विवरणस्य, मै– यद्वि [ द्रा-स्यन् ] विवरणस्य । २९.–२९. मै४—यस्य सर्वाः श्रुताः पयोऽनघा न कादिर् दृश्यो । *–* [ तै– 'यस्य सर्वदा ...... श्रूयमाणत्वोक्तिः' इत्येतावान् भागः नास्ति । ] । ३०. तै१. तै२मै– आहिताग्निर्द्रष्टव्यः । ३१. तै१.तै२– इति यदन्य° । ३२–३२. तै१ तै२मै.तै– °श्रवस्तमम् । ३३. तै१.तै२मै.तै– प्रशस्तम् ।

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति (३) श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥
स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥

स । इत् । जनेन । स । विशा । स । जन्मना ।
स । पुत्रैः । वाजम् । भरते । धना । नृभिरिति नृ-भिः ।
देवानाम् । यः । पितरम् । आविवासतीत्या विवासति (३) ।
श्रद्धामनेति श्रद्धा मना । हविषा । ब्रह्मण । पतिम् ॥
स । सुष्टुभेति सु स्तुभा । स । ऋक्वता । गणेन । वलम् । रुरोज । फलिगम् । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यसूद इति हव्य सूदः । कनिक्रदत् । वावशतीः । उदिति । आजत् ॥

तत्र याज्या– 'स इज्जनेन' इति जगती ॥ [v]स एव [v]जनेन परिजनेन किंकरादिना, [v]स एव [v]विशा विड्भिरुपजीवनीभिः [34]प्रजाभिः, [v]स एव [v]जन्मना [35]जनो जन्मप्रभृति[35], [v]स एव [v]पुत्रैः पुत्रपौत्रादिभिः एतैः सर्वैः सह [v]वाजम् [36]अन्नं [v]भरते दधाति । [v]धना धनानि च [v]नृभिः अन्यैश्च बन्धुसुहृदादिभिः सह स एव दधाति । " नृ चान्यतरस्याम् " (पा ६ १ १८४) इति विभक्तेरुदात्तत्वाभावः, " सावेकाचः° " (पा ६ १ १६८) इति हि [37]प्राप्नोति । स एव दधातीति । क इत्याह ? [v]यः [v]श्रद्धामना श्रद्धायुक्तमना [v]देवानां [v]पितरं पातारं [v]ब्रह्मणस्पतिं [v]हविषा [v]आविवासति परिचरति । आविवासतिः परिचरणकर्मा ॥

अथ बार्हस्पत्य उपहोमः – 'स सुष्टुभा' इति ॥ त्रिष्टुबेषा ॥ [v]स बृहस्पतिः [v]सुष्टुभा [38]शोभनं स्तुवता[38] । स्तोभतिः स्तुतिकर्मा । स्तौतेर्वा क्विपि वर्णव्यत्यये तुको भत्वम्, " उप

स इति ॥ तत्रैव याज्यामाह–'स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्' इति ॥ [v]सः [v]इत् स एव यजमानः [v]जनेन किंकरादिना युक्तः [v]वाजम् अन्नम् [v]भरते दधाति । [v]स एव [v]विशा करप्रदया प्रजया, सहितः वाजं भरते । [v]स एव ब्राह्मणादिजन्मना सहितः [13]वाजं भरते । [v]स एव [v]पुत्रैः सहितः [13]वाजं भरते । स एव [v]नृभिः बन्धुभिः सहितानि [v]धना द्रव्याणि भरते । [v]यः यजमानः [14v]श्रद्धामना श्रद्धायुक्तमनस्कः [v]देवानां [v]पितरं पालयितारं [v]ब्रह्मणस्पतिं [v]हविषा स्वकीयेन [v]आ विवासति आ समन्ताद्विशेषेण परिचरति, स इज्जनेनेति पूर्वत्रान्वयः ॥

स इति ॥ अत्रैव विकल्पितां याज्यामाह । यद्वा–[15]तत्रैवोपहोमार्थं मन्त्रमाह[15]–'स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण । बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्' इति ॥

३४ त१ त२– 'प्रजाभिः' नास्ति । ३५ मै४–जननेन । ३६ त१ त२ मै ल– 'अन्न' नास्ति ।
३७ मै४– 'प्राप्नोति' इत्यस्यानन्तरम् 'उत्तमम्' । ३८ त१ त२ मै– शोभनस्तुवता ।

१३. हो१– अन्नम् । १४ क हा– 'श्रद्धामना' नास्ति । १५–१५ ड थ हो१– °होममन्त्रमाह ।

मरुतो यद्ध वो दिवो*

मरुत । यत् । ह । व । दिव ।

सर्गात् सुनोति° " ( पा ८ ३ ६५ ) इत्यादिना षत्वम्। ^v ऋक्वता स्तुतिमता मन्त्रवता वा। " झय " ( पा ८ २ १० ) इति मतुपो वत्वम्, अयस्मयादित्वेन ( पा १ ४ २० ) पदत्वात् कुत्वम्, भत्वाज्जश्त्वाभाव । ईदृशेन ^v गणेन सहित ^v वल मेघम्। वृणोते पचाद्यच् (पा ३ १ १३४)। कपिलकादित्वात् लत्वम् ( द्र पाभा ८ २ १८ )। ^v रुरोज भिनत्ति ^v फलिग स्वच्छोदकपूर्णं, "फलम् उदक वा ^v रवेण शब्देन उपलक्षितम्" । रवेण वा फलिग गिरिगुहादिषु प्रतिफलन्तम्। किं च अय ^v बृहस्पति ^v हव्यसूद "हविषा भोक्ता। कर्मणि " कूलसूद स्थलकर्षा° " (पा ६ २ १२९) इत्युत्तरपदाद्युदात्तत्वम्।" ^v कनिक्रदत् अत्यर्थं क्रन्दन् हविरशनेन शब्द कुर्वाण । यद्वा–हविष आस्वादनेन अहो स्वादिष्ठमिति प्रशसाशब्द कुर्वाण । दाधर्त्यादौ (पा ७ ४ ६५ ) निपात्यते। अभ्यस्तानामादि (पा ६ १ १८९ ) इत्याद्युदात्तत्वम्"। ^v उस्रिया "गा ^v वावशती अत्यर्थं कामयमाना । वशेर्यङि " न वश " ( पा ६ १ २० ) इति सम्प्रसारणाभाव । पूर्ववदाद्युदात्तत्वम्। ^v उत् ^v आजत् भञ्जनानन्तर बलात् उद्गमयति। अज गतिक्षेपणयो , छान्दसो लुङ् ॥

" एतामेव निर्वपेद्य कामयेत ब्रह्मन् विश विनाशयेयमिति मारुती याज्यानुवाक्ये कुर्यात् " ( तेस २ ३ ३ ) इत्यस्या पुरोनुवाक्या– ' मरुतो यद्ध व ' इति गायत्री ॥

^v स देव ^v सुष्टुभा शोभना स्तुभ सामावयवा स्तोभा यस्य मन्त्रगणस्य सोऽय सुष्टुप् तेन सुष्टुभा, ^v ऋक्वता, ऋचो बहुविधा यस्मिन् मन्त्रगणे स ऋक्वास्तेन ऋक्वता, ^v रवेण ध्वनियुक्तेन ^v गणेन मन्त्रसमूहेन युक्त सन् ^v रुरोज बभञ्जेत्यन्वय । के बभञ्ज" ? ^v फलिग, फलमस्यास्तीति फली यजमान , त गच्छति प्राप्नोतीति फलिग तादृश ^v वल प्रबल प्रतिबन्धं रुरोज। ^v हव्यसूद हविर्भोक्ता ^v कनिक्रदत् अहो स्वादुतम हविरिति क्रन्दनं कुर्वाण ^v बृहस्पति ^v वावशती प्रस्नुतस्तनत्वेन वत्सान् प्रति "हम्भारव कुर्वती ^v उस्रिया गा उत्कर्षेणैतदीयगृह प्रति प्रेरयति। स इत्यभ्यास आदरार्थ ॥

मरुत इति ॥ " एतामेव निर्वपेद्य कामयेत ब्रह्मन् विशं वि नाशयेयमिति मारुती याज्यानुवाक्ये कुर्यात् " ( तैस २ ३ ३ ) इति विहितयो प्रतीक दर्शयति– ' मरुतो यद्ध वो दिवो या व शर्म ' इति ॥ ' मरुतो यद्ध व ' "इत्यनुवाक्या, ' या व शर्म ' इति याज्या। एतद्द्वयमपि प्रथमकाण्डस्य पञ्चमप्रपाठके (तैस १-५ ११ ) व्याख्यातम् ॥

३९ तै१ तै२ मै– ' मन्त्रवता ' नास्ति। ४०, तै१ तै२ मै ल– वल्यत्। ४१ तै१ तै२ मै ल– ' उपलक्षितम् ' इत्यस्यानन्तरं ' वल्' ४२. तै१ तै२ मै ल – हविषा। ४३-४३ तै१ तै२ मै ल– ' कनिक्रद्                मादिरित्याद्युदात्तत्वम् ' नास्ति । ४४ तै१ तै२ मै– अप ।

१६ आ– पर्ण। १७ द– राम। १८ द ग्र– पुरोनुवाक्या।

या वः॒ शर्म॑ ।
अ॒र्य॒माऽऽ या॑ति वृष॒भस्तु॒विष्मा॑न् दा॒ता वसू॑नां पुरुहू॒तो अर्हन्॑ ।
स॒ह॒स्रा॒क्षो गो॑त्र॒भिद्वज्र॑बाहुर॒स्मासु॑ दे॒वो द्रवि॑णं दधातु ॥

या । व॒ । शर्म॑ ॥
अ॒र्य॒मा । एति॑ । या॒ति॒ । वृ॒ष॒भ । तु॒विष्मा॑न् । दा॒ता । वसू॑नाम् । पु॒रु॒हू॒त इति॑ पुरु हू॒त । अर्ह॑न् ।
स॒ह॒स्रा॒क्ष इति॑ सहस्र-अ॒क्ष । गो॒त्र॒भिदिति॑ गोत्र भित् । वज्र॑बाहु॒रिति॑ वज्र बा॒हु ।
अ॒स्मासु॑ । दे॒व । द्रवि॑णम् । द॒धा॒तु ॥

व्याख्याता चेय "वैश्वानरो न" (तैस १ ५ ११) इयत्र । इह त्वस्या प्रतीकग्रहणम् । हे [v]मरुत, [v]व युष्मान् यस्मात् वय [v]सुम्नाय त सुखमिच्छन्त [v]हवामहे आह्वयाम तस्मात् [v]न अस्मान् क्षिप्र [v]दिन [v]आ [v]उपगन्तन अस्मत्सकाशमागच्छत[45] ब्रह्मणि निश स्थापयितुमिति ॥

तत्रैव याज्या–'या व शर्म' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १ ५ ११)। प्रतीकग्रहणमिह[46] । हे [v]मरुत, युष्माक यानि शर्माणि सुखानि [v]त्रिधातूनि त्रिलोकस्थानानि [v]शशमानाय युष्मान् भजमानाय दातु [v]सन्ति भवन्ति, यानि च [v]दाशुषे हविर्दत्तवते यजमानाय अधिक [v]यच्छत प्रयच्छत, [v]तानि [v]अस्मभ्य [v]वि [v]यन्त विशेषेण दत्त । किं च हे [v]वृषण कामाना वर्षितार, [47]अस्मभ्य [v]सुवीर शोभनपुत्रादिक [v]रयिं [48][v]धत्त इति ॥

"अर्यम्णे चरु निर्वपेत् सुवर्गकाम" (तैस २ ३ ४) इत्यस्या पुरोऽनुवाक्या–'अर्यमाऽऽ याति' इति त्रिष्टुप् ॥ अरीन् [49] यमयतीति [v]अर्यमा[49] इन्द्र उच्यते, वक्ष्यमाणेभ्यो लिङ्गेभ्य ।

अर्यमेति ॥ "अर्यम्णे चरु निर्वपेन सुवर्गकाम" (तैस २ ३ ४) इति चतुर्थेऽनुवाके यद्विहित तत्र पुरोनुवाक्यामाह–'अर्यमाऽऽ याति वृषभस्तुविष्मान् दाता वसूना पुरुहूतो अर्हन् । सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविण दधातु' इति ॥ 'असौ वा आदित्योऽर्यमा" (तैस २ ३ ४) इतिश्रुतेरर्यमशब्द आदित्य ब्रूते । स चेन्द्राभेदोपचारेणन्द्रधर्मै स्तूयते । [v]वृषभ कामाना वर्षयिता । [v]तुविष्मान् महाबल, [v]वसूना धनाना [v]दाता, पुरुषु बहुषु यज्ञेषु [v]हूत आहूत । [v]अर्हन् स्वर्ग दातु योग्य । सहस्राक्षत्वादिक स्पष्टम् ॥

४५ त१ त२ मै ल–°गच्छतेति । ४६ त१ त२ मै ल–°मिदम् । ४७ मै–असम्य सुवर्यम्'। ४८ मै–दत्त । ४९–४९ त१ त२ मै ल–यमयति उपयतीत्यर्यमा ।

१९. शं–हूयते ।

ये तेऽर्यमन् बहवो देवयानाः पन्थानो(४)राजन् दिव आचरन्ति ।
तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे ॥

ये । ते । अर्यमन् । बहवः । देवयाना इति देव याना ।
पन्थान (४)। राजन् । दिवः । आचरन्तीत्या - चरन्ति ।
तेभिः । नः । देव । महि । शर्म । यच्छ ।
शम् । नः । एधि । द्विपद इति द्वि पदे । शम् । चतुष्पद इति चतु पदे ॥

स आ याति आगच्छति आगच्छतु वा । वृषभ वर्षिता कामाना तुविष्मान् महाबल दाता वसूना धनाना पुरुहूत बहुभिर्यजमानैराहूत , बहुषु वा स्थानेषु आहूत । तेन "तृतीया कर्मणि" (पा ६ २ ४८) इत्यस्याप्रसङ्ग । अर्हन् दानादिक कर्तुमर्हन् । अर्हच्छब्द पूज्यवाची, हे पूजनीय । सहस्राक्ष बहिन्द्रिय बहुकार्यकरणसमर्थेन्द्रियो वा [50]"सहस्रनेत्र एव वा"[50], गोत्रभित्[51] मेघाना पर्वताना वा भेत्ता विदारयिता वज्रबाहु वज्रपाणि । "प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ भवत" (पाभा २ २ ३६ वा १) इति परनिपात । ईदृश देव अस्मासु द्रविण स्वर्गाख्य धन दधातु ॥

तत्रैव याज्या–'ये तेऽर्यमन्' इति त्रिष्टुप् ॥ हे अर्यमन् राजन् दीप्यमान, ते तव ये बहव देवयाना देवा [52]यादृशै गच्छन्ति, देवान् वा यैर्गच्छन्ति तादृशा , दिव द्युलोकात् आचरन्ति आभिमुख्येन यागकर्मस्थानम् आतन्यन्ते तेभि तै पथिभि न अस्मभ्य, हे देव देवनादिमत्[53], महि महत् शर्म सुख यच्छ देहि । किं च न अस्माक द्विपदे चतुष्पदे च [54]शम् एधि सुखहेतुर्भव, तादृशमार्गगम्यस्वर्गहेतुर्भवेति यावत् । स्वरसमासा तावुक्तौ ।

य इति ॥ तत्रैव याज्यामाह– 'ये तेऽर्यमन् बहवो देवयाना पन्थानो राजन् दिव आचरन्ति । तेभिर्नो देव महि शर्म यच्छ श न एधि द्विपदे श चतुष्पदे' इति ॥ हे अर्यमन् राजन्, ते त्वदीया देवयाना देवैर्गन्तुमर्हा ये बहव पन्थान आ दिव स्वर्गपर्यन्त चरन्ति गच्छन्ति, हे देव, तेभि तै पथिभि न अस्माक महि शर्म महत् सुख यच्छ, द्विपदे मनुष्याय न अस्माक संबन्धिने शम् एधि सुखकरो भव । चतुष्पदे गवादिरूपाय शम् एधि । "अर्यम्णे चरुं निर्वपेत् कामयेत दानकामा मे प्रजा स्यु" (तैस २ ३ ४), "अर्यम्णे चरु निर्वपेत् य कामयेत स्वस्ति जनतामियाम्" (तैस २ ३ ४) इत्यनयोरपि एत एव याज्यानुवाक्ये ॥

५०–५० ते१ त२ मै ८– 'सहस्रनेत्र एव वा' नास्ति । ५१ मै– गोत्रभृत् । ५२ ते१ त२ मै ८– मै । ५३ मै ८– दानादिमत् । ५४ ते१ त२– शर्म ।

बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् ।
रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार ॥

बुध्नात् । अग्रम् । अङ्गिरोभिरित्यङ्गिरः—भिः । गृणानः । वीति । पर्वतस्य । दृꣳहितानि । ऐरत् । रुजत् । रोधाꣳसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥

"यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत् बुध्नवती अग्रवती याज्यानुवाक्ये भवतः" (तैस २·३·४) इत्यस्याः पुरोऽनुवाक्या— 'बुध्नादग्रमङ्गिरोभिः' इति त्रिष्टुप् ॥ बुध्नात् मूलादारभ्य यावत् अग्रम् उपक्रमादारभ्य यावत्समाप्ति [55]उग्रानदानानि गृणानः गृणानैः स्तुवद्भिः अङ्गिरोभिः इत्थंभूत. । "सुपां सुलुक्°" (पा ७·१·३९) इति तृतीयाया [56]बहुवचनस्य स्वादेश । यद्वा— व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अङ्गिरोभिः स्तूयमानः । पर्वतस्य मेघस्य दृꣳहितानि स्तम्भितानि[57] रोधांसि उदकस्य रोधनानि द्वारपिधानानि रुजत् भिनत् प्रथम ततः वि ऐरत् विविध प्रेरयति विश्लेषयति यथोदक पतति । यद्वा—उदकमेव व्यैरत् विकिरति । "बहुल सज्ञाछन्दसोः" (द्र. उ १९०) इति णिलुक् । कीदृशानि रोधांसि ? कृत्रिमाणि कृत्रिमाण्येव [58]आत्मकृतानीन अयत्नेन[58] भिनत्ति एषा मेघाना सबन्धीनि । पर्वतस्येति [59]वचनव्यत्ययेनैकवचनम् । इत्येवंविधानि यानि कर्माणि तानि सर्वाण्यपि सोमस्य मदे सोमपाननिमित्ते मदे सति इन्द्रः चकार करोति । एव महानुभाव इन्द्र इम राजन्य समानानामग्र परिणयत्विति ॥

बुध्नादिति ॥ "यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेत्" (तैसं २·३·४) इत्यत्र पुरोनुवाक्यामाह— "बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् । रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार' इति ॥ बुध्नात् अग्रं [20]कर्मोपक्रममारभ्य [21]कर्मसमाप्तिपर्यन्तम् अङ्गिरोभिः गृणानः अङ्गिरोनाम्ना मुनिना सदृशैरृत्विग्भिः स्तूयमान इन्द्रः पर्वतस्य पर्वतवत् सर्वाधारस्य [22]राजन्यस्य दृꣳहितानि समानैरन्यैः क्रियमाणान् द्रोहविशेषान् व्यैरत् [23]विफलानकरोत् । किं कुर्वन् ? एषां समानानां कृत्रिमाणि बलात् संपादितानि रोधांसि ऐश्वर्यप्रतिबन्धकान्यवरोधनानि रुजत् [24]भञ्जयन् । कदैतत्सर्वमकरोदित्युच्यते । सोमस्य मदे सोमपानसंबन्धिनि मदे सति इन्द्रः ता चकार तानि द्रोहनिवारणादीनि कृतवान् ॥

५५. मै४— इन्द्रापवदानानि । ५६. तं१.तं२— एकवचनस्य । ५७–५७. ल— 'स्तंभितानि' नास्ति । ५८. पं२— आत्मकृतानि घटयत्नेन । ५९. तं१.तं२.मै.ल— वचनस्य तृतीयैकवचनम् ।

२०. श्रे—कर्मोपक्रमादारभ्य । २१. आ— समाप्ति° । २२. आ— राज्ञः । २३. क.ड.शं.हो१— विगतान° । २४. आ.उ.पा— जम्भयन् ।

बुध्नादग्रे॑ण वि मि॑माय मानै॒र्वज्रे॑ण खान्य॑तृणन्न॒दीना॑म्।
वृथा॑ऽसृजत् पथिभि॑र्दीर्घया॒थैः सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार (५) ॥

बुध्नात्। अग्रे॑ण। वीति॑। मि॒माय॒। मानैः॑। वज्रे॑ण। खानि॑। अ॒तृ॒ण॒त्। न॒दीना॑म्।
वृथा॑। अ॒सृ॒ज॒त्। पथिभि॒रिति॑ पथि॒ भिः॒। दा॒र्घ॒या॒थैरिति॑ दीर्घ॒ या॒थैः।
सोम॑स्य। ता। मदे॑। इन्द्रः॑। च॒का॒र॒ (५) ॥

तत्रैव या॒या–'बुध्नादग्रेण वि मिमाय' इति त्रिष्टुप् ॥ मूलादारभ्य [v]अग्रेण सह यावदग्र [v]माने [60]मानरज्जुभिरिव [v]वि [v]मिमाय विविध परिच्छिनत्ति मेघान्। अथ तथा निर्मितेषु मेघेषु [v]नदीनाम् अपा, नदनान्नद्य, [v]खानि द्वाराणि [v]वज्रेण [v]अतृणत् भिनत्ति [61]पिहितानि विदारयति। उतृदिर् हिंसायां रौधादिक । यद्वा–नदीनामिति चतुर्थ्यर्थे षष्ठी, नदीभ्य । नद्यो यथा प्रवहेयु इत्येवमर्थमभिनत् भिनत्ति द्वाराणि, सामर्थ्यादुदकस्येति [62]गम्यते । तत [v]वृथा भित्त्वा तथा क्रीडन्निव [v]असृजत् नदी प्रवर्तयति [v]पथिभि [v]दीर्घयाथै चिरप्रवृत्तै । तादृग्विधानि कर्माणि [v]सोमस्य [v]मदे सति [v]इन्द्र [v]चकार इति । गतम् ॥

अथोपहोमादिष्वन्यत्र विनियोगा द्रष्टव्या – 'प्र यो जज्ञे' इति त्रिष्टुप् ॥ वक्ष्यमाण एव बार्हस्पत्य । आचार्येण (बौश्रौ १३ २७) तु [63]त्यक्त्वेमामुत्तरेण बार्हस्पत्ये विनियुक्ते। [64][v]य देव *[v]विद्वान् [65]आत्माधिकारज्ञ सर्वज्ञो वा [v]अस्य मेघस्य [v]बुधु बन्धन, [66]यत्राय

बुध्नादिति ॥ तत्रैव याज्यामाह– 'बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्। वृथाऽसृजत् पथिभिर्दीर्घयाथै सोमस्य ता मद इन्द्रश्चकार' इति ॥ [v]इन्द्र [v]नदीना [v]बुध्नात् [v]अग्रेण [25]मूलादग्रपर्यन्त [v]माने मानदण्डै [26] [v]वि [v]मिमाय विशेषेण [27] निश्चितवान्। निश्चित्य च [28] नदीना [v]खानि जलप्रवाहार्थान् अवकाशान् प्रति [v]वज्रेण [v]अतृणत् [28]जलप्रवाहनिरोधकान् [29]पर्वतादीन् वज्रेण हिंसितवान्। [30]दीर्घयाथै दीर्घाणा प्रवाहाणा गमनोपयुक्तै [v]पथिभि मार्गयुक्तान् नदीविशेषान् [v]असृजत्। न [31]चात्रास्य भूयान् प्रयास किं तु [v]वृथा। यथा लोके नरैस्तृणच्छेदादिव्यर्थचेष्टाम् आयास मन्तरेण जना कुर्वन्ति तद्वदित्यर्थ । 'सोमस्य' इत्यादि पूर्ववत्। [32]तदालम्भनमात्रेण महतीर्नदी सृजत इन्द्रस्य श्रेष्ठप्रापणे च प्रयास इत्यभिप्राय ॥

६० मै–मानयिष्टीभि । ६१ त१ त२ मै८– विहितानि, मै४ पिहितानीव। ६२ तं१ त२ मै ८–लभ्यते। ६३ मै४–प्रथमामुत्तरे था। ६४ त१ त२ मै ८– 'य:' नास्ति। *–* [ तं१ त२– 'विद्वान् अथ हि' नास्ति।]। ६५ मै४–अधिकारज्ञ । ६६ मै ८– यात्रायाम्।

२५. ब ग१ हो१–मूलादारभ्याम°। २६–२६ इ–मानैर्दण्डै, अ आ उ क जो ना पा हा–मानदण्डै। २७–२७ हा– निश्चित्य। २८ आ– °निरोधक।° २९ आ हा– पर्वतान्। ३० हा– 'दीर्घयाथै' नास्ति। ३१ इ क जो ना हा– तत्रास्य। ३२ ब ग१– तदालम्भा।°

प्र यो ज॒ज्ञे वि॒द्वाँ अ॒स्य बन्धुं॒ विश्वा॑नि दे॒वो जनि॑मा विवक्ति ।
ब्रह्म॒ ब्रह्म॑ण॒ उज्ज॑भार॒ मध्या॑न्नी॒चादु॒च्चा स्व॒धया॒ऽभि प्र त॑स्थौ ॥

प्रेति॑ । यः । ज॒ज्ञे । वि॒द्वान् । अ॒स्य । बन्धु॑म् । विश्वा॑नि । दे॒वः । जनि॑मा । वि॒वक्ति॑ ।
ब्रह्म॑ । ब्रह्म॑णः । उदिति॑ । ज॒भा॒र॒ । मध्या॑त् ।
नी॒चा । उ॒च्चा । स्व॒धयेति॑ स्व - धया॑ । अ॒भि । प्रेति॑ । त॒स्थौ॒ ॥

बध्यते [६७]मेवेन वाऽस्य बध्यते[६७], तद्विद्वान्, यो [६८]निबन्धनमस्य [v]जज्ञे जानाति। कथ ज्ञायते निबन्धनमस्याय जानातीति? तत्राह—[v]विश्वानि [v]जनिमा जन्मानि अय हि * [v]देव [६९]अस्य [v]विवक्ति ब्रूते [७०]परेभ्य कथयति, [७१]त जनमय[७१] जानातीति[७२] जानाम । वचे "बहुल छन्दसि" (पा २ ४ ७६) इति शप श्लु, अभ्यासस्य [७३]चेत्वम्। एवमुत्पादित भूयिष्ठमुदकम् एतद्ब्रह्मेत्युच्यते, एतत्[७३] एवमुत्पादित [v]ब्रह्म परिवृढम् उदक [v]ब्रह्मण [७४]उपरि परिवृढाया पृथिव्या [v][७५]उत् [v]जभार[७५] उद्धरति। [v]मध्यात् मध्यप्रदेशात् [v]नीचा [७६]नीचप्रदेशात् । पञ्चम्येकवचनस्य "सुपा सुलुक्°" (पा ७ १ ३९) [७७]इत्याजादेश । साहितिको दकारोपजन छान्दस । उक्त च प्रातिशाख्ये— "नीचापूर्वो दकार उच्चापर" (तैप्रा ५ ८) इति। [v]उच्चा उच्चात् प्रदेशात् । पूर्ववदाजादेश । एव [७८]सर्वस्मात् उद्धृतम् उदक [v]स्वधया अन्नेन सह [v]अभि [v]प्र [v]तस्थौ आदित्ये अभिप्रतितिष्ठतु

प्रेति ॥ "यो ब्राह्मण आनुजावर स्यात् तस्मा एत बार्हस्पत्यमानुषूक चरु निर्वपेत्' (तैस २ ३ ४) इत्यत्र पुरोनुवाक्यामाह 'प्र यो जज्ञे विद्वा" अस्य बन्धु विश्वानि देवो जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ' इति ॥ [v]विद्वान् सर्वज्ञ [३३][v]य बृहस्पति [v][v]अस्य ब्राह्मणस्य [३४] यजमानस्य [v]बन्धु समानाना मध्येऽनुकूल [v]प्र [v]जज्ञे प्रकर्षेण जानाति। तदीयमभिज्ञत्व कथ निश्चीयत इति चेदुच्यते। यतोऽय [v]देव [v]विश्वानि [v]जनिमा सर्वेषा प्राणिना सर्वाणि जन्मानि [३५]विविनक्ति पुन पुन [३६]ब्रूते [३७]तस्मादभिज्ञत्व निश्चीयते। अभिज्ञो बृहस्पति [v]ब्रह्मण वेदस्य [v]मध्यात् नीचात् [v]उच्चा मध्यमभागात् प्रथमभागात् उत्तमभागाच्च [v]ब्रह्म परिवृढ कर्म [v]उज्जभार उद्धृतवान्। [v]स्वधया अमृतेन श्रैष्ठ्यप्रापणलक्षणेन [v]अभि [v]प्र [v]तस्थौ, एन यजमानमभिलक्ष्य प्रस्थान कृतवान्। समानाना मध्ये श्रैष्ठ्य दातु यजमानसमीपे समागतवानित्यर्थ ॥

६७–६७ मै४ 'मेवेन वाऽस्य बध्यते' नास्ति, ल– मेघे। ६८ मै– बधन°। ६९ मै– 'अस्य' नास्ति। ७० मै– पत्रै। ७१–७१ मै– न नूनमयम्। ७२ मै– जानाति कि वयम्। ७३ ७३ त१ त२ मै ऊ–दीर्घत्वम्। ७४ त१ त२ मै– 'उपरि' नास्ति। ७५–७५ त१ त२ मै–उज्जहार। ७६ मै४– निम्नात्। ७७ मै४– इत्याकार। ७८ त१ त२ मै ल– सर्वस्य।

३३ अ इ उ ना जो पा हा–'य' नास्ति। ३४–३४ हा१– ब्रह्मण, ङ–परम ब्रह्मण। ३५ अ इ उ जो ना पा हा– विविनक्ति। ३६ आ– कथयति। ३७ हा– एतस्माद°।

महान् मही अस्तभायद्वि जातो द्याᳬ सद्म पार्थिवं च रजः ।
स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट् ॥

महान् । मही इति । अस्तभायत् । वीति । जातः । द्याम् । सद्म । पार्थिवम् । च । रजः ।
स । बुध्नात् । आष्ट । जनुषा । अभीति । अग्रम् ।
बृहस्पतिः । देवता । यस्य । सम्राडिति सम्-राट् ॥

आभिमुख्येन प्रकृष्ट तिष्ठतु । स्वधया [79]वा हेतुभूतया। यद्वा– स्वधया हविषा सह [80]तिष्ठतु स्थितिहेतुना आदित्ये उदक [81]तिष्ठत्विति यावत्। [80-82]पक्वमिति ततो वर्षति[82] ततोऽन्नमुत्पद्यते, सोऽस्माकमभिमत सपादयतु बृहस्पतिरिति ॥

" यो ब्राह्मण आनुजावर स्यात् तस्मा एत बार्हस्पत्यमानुपूक चरु निर्वपेत् ...बुध्नवती अग्रवती याज्यानुवाक्ये भवतः" (तैस २ ३ ४) इत्यस्याः पुरोऽनुवाक्या–'महान्मही' इति त्रिष्टुप्॥ [v]महान् बृहस्पति [v]मही महत्यौ पृथिवीमन्तरिक्ष च [v]वि [v]अस्तभायत् त्रिविधमस्तम्भयत्। [v]जात जातमात्र एव [v]द्या [83]द्युलोक व्यस्तम्भयत् इत्येव। [v]सद्म सदन स्थानमुदकस्य [84]मध्यमाख्य तत्र स्थित [v]पार्थिव च [v]रजः उदक व्यस्तम्भयत्। [v]स महानुभाव [v]बृहस्पति [v]बुध्नात् मूलादारभ्य [v]अभ्यग्र यावदग्रम् [v]आष्ट व्याप्नोतु। [v]जनुषा जन्मनैव अयत्नेनैव तेजस्विन करोतु। कम्? [v]यस्य [85]असौ [v]देवता ईश्वर. [v]सम्राट् सगतदीप्तिः त यजमान तेजसा व्याप्नोतु। [86]यद्वा–[87]यस्याय देवता तस्याय देवता बृहस्पतिः[87]। [88]यसर्वमेवमय व्याप्तवान् तस्मात् [89]महानुभावोऽयम्

महानिति ॥ तत्रैव याज्यामाह–'महान् मही अस्तभायद्वि जातो द्याᳬ सद्म पार्थिवं च रजः। स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्' इति ॥ [v]महान् सामर्थ्येनाधिको बृहस्पतिः [v]मही प्रौढे पृथिव्यन्तरिक्षे [v]द्या द्युलोकं [v]सद्म मनुष्याणा गृहं [v]पार्थिवं [v]रज. [v]च [v]जातः उत्पत्तिमात्रेण [v]वि [v]अस्तभायत् विविधं स्तम्भितवान्। यद्यप्येतत् सर्वमीश्वरस्यैव कर्म तथापि तदभेदेन बृहस्पति. स्तूयते। यद्वा– परमेश्वरानुग्रहादयमेव एतन्त्रयादिकं स्वस्वव्यापारक्षममकरोत्। [v]यस्य यजमानस्य [v]सम्राट् यथोक्तरीत्या साम्राज्यं प्राप्तः [v]बृहस्पतिः [v]देवता [v]स. यजमान. [v]जनुषा जन्ममात्रेणैव [v]बुध्नात् अग्रमभि आयुषोऽनुष्ठीयमानकर्मणो वा मूलादारभ्य समाप्तिपर्यन्तम् [v]आष्ट [38]सर्वं [39]व्याप्तवान्। ईदृशेन बृहस्पत्यनुग्रहेण युक्तो यजमान. सर्वथा श्रेष्ठं प्राप्नोत्येवेत्यभिप्रायः ॥

७९. मै८– स्वधा°। ८०. मै.८– 'तिष्ठतु' नास्ति। ८१. मै४–तिष्ठतीति। ८०–८२. मै– पक्वमिति (!)। ८३. तै१.तं२.मै.८– 'द्युलोकम्' इत्यस्यानन्तरं 'च'। ८४. तं१.तं२.मै.८– मध्य मुख्यम्। ८५. तं१.तं२.मै८– अयम्। ८६ तं१.तं२.मै.८– 'यद्वा' नास्ति। ८७–८७. मै– यस्याय देवता बृहस्पति°। ८८. मै८–तत्सर्वमेव जयम्। ८९. तं१.तं.२– महानुभावो यत्।

३८. आ– 'सर्वं' नास्ति। ३९. हो१– प्राप्तवान्।

बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः (६)।
भिनद्वलं वि पुरो दर्दरीति कनिक्रदत् सुवरपो जिगाय ॥ १४ ॥

[ युर वीतमाविवासति पर्यानो दीर्घयाथै सोमस्य ता मदु इन्द्रश्चकार देवा नरं च । ]
आदित्येभ्यो देवा वै सुयोर्देवा वै सुवर्मर्यम्णे प्रजापतिस्त्रयस्त्रिंशत्प्रजापतिर्देवेभ्योऽन्नाद्य देवासुरास्तान् रर्जनो ध्रुवोऽसि यन्नवमैदग्नि वै प्रजापतिर्वरणाय या वामि दानरणा स प्रत्नुनवतुर्दश ]
[ आदित्येभ्यस्त्वष्टुरस्मै दानकामा एतानं स्न्देऽग्नि वै स प्रत्नुनत् पट्पञ्चाशत् ]
[ आदित्येभ्य सुवरपो जिगाय ]

---

बुध्नात् । य । अग्रम् । अभ्यर्तीत्यभि अर्ति । ओजसा । बृहस्पतिम् । एति । विवासन्ति । देवा (६)। भिनत् । वलम् । वीति । पुर । दर्दरीति । कनिक्रदत् । सुर । अप । जिगाय ॥१४॥
[ मैस काम ]

---

अस्माकम् आनुजावरत्व निवर्त्य समानानामग्र परिणयत्विति । अश्नोतेर्लेडि “बहुल छन्दसि” (पा २ ४ ७३) इति शपो लुक् ।

तत्रैव याज्या—‘बुध्नाद्यो अग्रम्’ इति त्रिष्टुप् ॥ [v]बुध्नात् आरभ्य यावत् [v]अग्र [v]य अयम् [v]ओजसा बलेन [v]अभ्यर्ति आभिमुख्येन प्राप्नोति इद विश्वमात्मीयेन तेजसा व्याप्नोति । [90]यद्वा—यजमान[90] वा आत्मीयम् । [91]त तादृशं देव [v]बृहस्पति [v]देवा [92]अपि [v]आ [v]विवासति[93], परिचरन्ति, ऋत्विजो वा । स च एव देवै परिचर्यमाण [v]वल मेघ [v]भिनत् भिनत्ति वृष्ट्यर्थम् । [v]पुर असुरनगराणि च [v]वि [v]दर्दरीति अत्यर्थं विदारयति । दृ विदारणे, यङ्लुकि “रुग्रिकौ च लुकि” (पा ७ ४ ९१) इति रुक्, “यङो वा” (पा ७ ३ ९४) इति ईडागम । [v]कनिक्रदत् अत्यर्थं शब्द कुर्वन् अत्यर्थं क्रन्दन् । दाधर्त्यादो निपात्यते (पा ७ ४ ६५)। [94]तत [v]सुर आदित्यम् [95-v]अप च[95] [v]जिगाय जयति । आदित्यादाकृष्य मध्यमस्थाने उदक [96]वृष्ट्युमुख प्रवर्तयति पर्जन्यात्मना । छान्दसे लिटि (पा ३ ४ ६) “सन्लिटोर्जे” (पा ७ ३ ५७) इति जयते कुत्वम् । एव महानुभावोऽयम् अस्मदीय यजमानमानुजावरत्वा मुक्त्वा समानामग्र परिणयत्विति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे तृतीये प्रश्ने चतुर्दशोऽनुवाक ॥

---

९०-९० मै४—यजमान एकम्। ९१ मै—‘त’ नास्ति। ९२ मै४—‘अपि’ नास्ति।
९३ त१ त२ ल—आविवासयन्ति। ९४ मै४ तेन। ९५ मै४—एव। ९६ प२—वृष्ट्युदकम्।

बुध्नादिति ॥ तत्रैव विकल्पितां याज्यामाह–'बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः। भिनद्वलं वि पुरो दर्दरीति कनिक्रदत् सुवरपो जिगाय' इति ॥ यः बृहस्पतिर्जगतो [40]देहस्य कर्मणो वा बुध्नात् आरभ्य अग्रम् अभ्यर्ति अवसानम् ओजसा स्वबलेन प्राप्नोति तं बृहस्पतिम् इतरे देवाः आ विवासन्ति आगत्य विशेषेण वासयन्ति परिचरन्तीत्यर्थः। [41]स बृहस्पतिः बलं [42]यजमानसंबन्धिनां [43]समानानां मध्ये प्रबलं पुरुषं भिनत् भिनत्ति प्रातिकूल्यात् निवारयति, पुरः समानानां पुराणि विशेषेण दर्दरीति प्रातिकूल्यनिवारणाय पुनः [44]पुनर्दारितवान्। कनिक्रदत् उत्साहेन शब्दं कुर्वन् सुवः [45]स्वर्गसदृशं श्रैष्ठ्यम् अपः तत्साधनं सर्वं जलक्षेत्रादिकं जिगाय जितवान् [46]यजमानार्थे संपादितवानित्यर्थः ॥

अत्र विनियोगसंग्रहः—

"यन्त्रविभ्रष्टयागे तु [47]याज्याः स प्र निकेति [47] च।
इन्द्रमिन्द्रं चैन्द्रयागे त्वं नः सौम्यचरौ तथा ॥ १ ॥
अग्नी कामप्रापकेऽग्नी [48]ब्रह्मवर्चसिनस्त्रयम्।
आ प्या सं ते चरौ सौम्ये गणा [49]ग्रामप्रदे त्रयम् ॥२ ॥
मरु यागे [50]नाशकेऽष्टावर्यमाऽऽर्यमणे चरौ।
[51]बुध्नादैन्द्रे प्रयस्त्रिस्रो[51] बार्हस्पत्यानुपूर्वके।
[52]पञ्चविंशतिरत्रोक्ता अनुवाके चतुर्दशे ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन
माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे तृतीयः प्रपाठकः ॥

---

४०. अ.उ.ह.पा.श्रृं.हो१– वेदस्य। ४१. आ–'सः' नास्ति। ४२.श्रृं– °संबन्धिनं। ४३. आ.उ.क.जो.ना.पा– 'समानाना' नास्ति। ४४. क.हा.हो१– पुनर्वारितवान्। ४५. आ– तत्सदृशं। ४६. ह– यजमानार्थं। ४७–४७. क.हा–आद्ये याज्याः स प्रत्नके, ह–याज्या स प्रत्न नीति च; श्रृं.हो१– याज्या स प्रनिकेति च। ४८. क.हा– °वर्चसगे त्रयम्। ४९. क– ग्रामदने। ५०. ह.हो१– नाशिकेष्ट°। ५१–५१. हा–बुध्नादैन्द्रे प्रयस्त्रियः। ५२. क– °तिमन्त्रोक्ताः।

# ( अथ द्वितीयकाण्डे चतुर्थः प्रपाठकः )

हरिः ॐ ॥

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्सुब्धान् मृतानभि व्यौच्छत्

देवा । मनुष्याः । पितरः । ते । अन्यतः । आसन् । असुराः । रक्षाꣳसि । पिशाचाः । ते । अन्यतः । तेषाम् । देवानाम् । उत । यत् । अल्पम् । लोहितम् । अकुर्वन् । तत् । रक्षाꣳसि । रात्रीभिरिति रात्रि भिः । असुभ्नन् । तान् । सुब्धान् । मृतान् । अभि । वीति । औच्छत् ।

देवा मनुष्या इत्यादि ॥ [v]अन्यत एकस्मिन् पक्षे देवादयोऽभवन् । असुरादयोऽप्येकस्मिन् [1][v]आसन् । "नपुंसकमनपुंसकेन°" ( पा १ २ ६९ ) इत्येतत् व्यत्ययेन [2]न प्रवर्तते । अथ [v]तेषां [v]देवानां शरीरेषु [3]असुरादयः [v]यत् [v]अल्पम् अपि [v]लोहितम् [v]अकुर्वन् व्रणमुदपादयन् [v]तत् असुरपक्षपातीनि [v]रक्षांसि [v]रात्रिभिः [v]असुभ्नन् रात्रिष्वागम्य [4]धर्षितमकुर्वन्, येन सुभ्नन्तः ते मृता स्युः । ततः [v]तान् [v]सुब्धान् निर्व्रणान् तेनैव हेतुना [v]मृतान् [v]अभि [v]वि [v]औच्छत् रात्रिरुपरताऽभवत्, रात्र्यवसाने मृतानपश्यन्निति यावत्, प्राणाद्युक्षोभस्य रक्षोहेतुत्वात् ॥

> यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
> निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
> प्रपाठके द्वितीये च तृतीये चेष्टयः क्रमात् ।
> प्रोक्तास्तत्रावशिष्टास्तु वक्ष्यन्तेऽस्मिंश्चतुर्थके ॥ २ ॥

चतुर्थस्य प्रथमानुवाके भ्रातृव्यवता स्पर्धमानस्य त्रिहविष्का काचिदिष्टिं विधातुं प्रस्तौति– 'देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्सुब्धान् मृतानभि व्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन् वरं वृणामहै यदसुराञ्जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुराञ्जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्यासन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन्

१ त१ त२ मै ल– 'आसन्' नास्ति । २ त१ त२– 'न' नास्ति । ३ मै४ ल–असुरा । ४ मै४– कुपित° ।

ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षा॑ऽसि वा इमं घ्नन्तीति ते रक्षा॑ऽस्युपा-मन्त्रयन्त तान्यब्रुवन् वरं वृणामहै य( १ )दसुराञ्जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुराञ्जित्वा रक्षा॑ऽस्यपानुदन्त तानि रक्षा॑ऽस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं

ते। देवा । अविदु । य । वै । न । अयम्। म्रियते। रक्षा॑ऽसि। वै। इमम्। घ्नन्ति। इति। ते। रक्षा॑ऽसि। उपेति। अमन्त्रयन्त। तानि। अब्रुवन्। वरम्। वृणामहै। यत् (१)। असुरान्। जयाम। तत्। न। सह। असत्। इति। ततः। वै। देवा। असुरान्। अजयन्। ते। असुरान्। जित्वा। रक्षा॑ऽसि। अपेति। अनुदन्त। तानि। रक्षा॑ऽसि। अनृतम्। अकर्त। इति। समन्तमिति सम्-अन्तम्। देवान्। परीति। अविशन्। ते। देवा। अग्नौ। अनाथन्त। ते। अग्नये। प्रवत इति प्र वते। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्।

ते देवा इत्यादि॥ गतम्। तन्न सहेति। अस्मत्पक्षे युष्माभिर्वर्तितव्यमिति। [v]तत रक्षोभि सहाये [v]देवा [v]असुरान् [v]अजयन्। जयानन्तर [v]रक्षासि [v]अप [v]अनुदन्त॥

अथ देवैरपनुन्नानि [v]रक्षासि [v]देवान् [v]समन्त [v]परि [v]अविशन्। परीय [v]अविशन्। सर्वत्र[1] [2]देवाना शरीरादिष्वनुप्रविश्य अवाधन्त। किं [v]वदन्त इत्याह—[v]अनृतम् असत्यम् [v]अकर्त कृतवन्तो यूयमिति [3]अन्याय्य ख्यापयन्त[3] [v]पर्यविशन्। [4]निरुद्धयेव स्थितानि[4] इति वा॥ अथैव तैरभिभूयमाना [v]देवा [v]अग्नौ [v]अनाथन्त ऐश्वर्यमारोपयन् अग्निं नाथयन्ति स्मेति यावत्। यद्वा— अग्नौ याचितृत्वेनावर्तन्त। नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु। त्वया वय रक्ष्या इति। [5]तत एता त्रिहविष्कामिष्टिम्[5] [v]अग्नये [v]नि [v]अवपन् देवा। [v]प्रवते। प्रवत्,

पराऽसुरा ' इति॥ [1]देवादीनामसुरादीना च सैन्यद्वय युद्धाय सनद्धमासीत्। असुराणा रक्षसा [2]चास्त्येवा चान्तरजातिभेद। तदीये युद्धे [3]स्वल्पप्रहारेण [v]देवाना शरीरे [v]यत् [v]लोहितम् इतरे [v]अकुर्वत [v]तत् लोहितस्थान [v]रक्षासि प्रतिनिशि रात्रिष्वागत्य केनचिद्विपाग्निप्रयोगेण [v]असुम्नन [4]क्षुमित कृतवन्त[4]। तदानीमेव तेन क्षोभेण देवा म्रियन्ते। [v]तान् [v]मृतान अभिलक्ष्य पश्चात् [v]व्यौच्छत् रात्रि प्रभात प्राप्तवती। तत [v]देवा रक्षसा [5]कृत्यमिदमित्यवगत्य [v]रक्षासि [v]उपामन्त्रयन्त उत्कोचं प्रतिश्रुत्य स्वाधीनानि कृतवन्त।

५–५. मै– 'अविशन्। सर्वत्र' नास्ति, त१ त२ ल – सर्वत्रा ६. ल– 'देवानामपि विशन' नास्ति। ७ त१ त२ मै ल–वदन्ति। ८–८. त१ त२ मै ल – अन्याय्यं ख्यापयन्ति॥ ९. मै–'पर्यविशन्। १०–१० मै४– निरुद्धयैव स्थिता। ११–११. मै४– त एव त्रिहविषम।

१ आ– देवाना°। २ आ क– चान्त्येवान्तर°, इ– चान्त्यवान्तरभेद, जो ना ग१– चान्त्यान्तर°। ३ ग१– 'स्वल्पप्रहारेण' नास्ति। ४–४ हो१– क्षुभितवन्त। ५. ड ग१– °मिदमित्यवगम्य।

निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्या( २ )सन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान

निरिति। अवपन्। अग्नये। विबाधवत इति विबाध वते। अग्नये। प्रतीकवत इति प्रतीक वते। यत्। अग्नये। प्रवत इति प्र वते। निरवपन्निति नि – अवपन्। यानि। एव। पुरस्तात्। रक्षाꣳसि ( २ )। आसन्। तानि। तेन। प्रेति। अनुदन्त। यत्। अग्नये। विबाधवत इति विबाध वते। यानि। एव। अभित। रक्षाꣳसि। आसन्। तानि। तेन। वीति। अबाधन्त। यत्। अग्नये। प्रतीकवत इति प्रतीक वते। यानि। एव। पश्चात्। रक्षाꣳसि। आसन्। तानि। तेन। अपेति। अनुदन्त। तत । देवा । अभवन्। परेति। असुरा । य । भ्रातृव्यवानिति भ्रातृव्य वान्। स्यात्। स । स्पर्धमान । एतया। इष्ट्या । यजेत। अग्नये। प्रवत इति प्र वते। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्।

"उपसर्गात् छन्दसि" ( पा ५ १ ११८ ) इति वति । [१२]विश्लेष्य बाधो विबाध, तद्वान् तत्समर्थ । [१३]प्रतीकव्यावृत्ति तद्वान् प्रतीकवान्[१४]॥ पुरस्तादिति। पूर्वस्या दिशि। "अस्ताति च" ( पा ५ ३ ४० ) इति पुरादेश । [१५]प्रगतत्वात् तस्या । प्राणुदन्तेति। प्रथमत उत्पत्ता वेगानुदन्। अभित इति। दक्षिणत उत्तरतश्च। व्यबाधन्तेति। [१६]विश्लेष्याबाधन्त दक्षिणत उत्तरतश्चेति विकृष्याबाधयन्[१६]। पश्चादिति। अपरस्या दिशि "पश्चात्" (पा ५ ३ ३२) इति निपात्यते। अपानुदन्तेति। अपरस्या दिशि [१७]अपाकृष्यानाशयन्। तत [१८]इत्यादि। रक्ष पीडाया[१९] निर्मुक्ता भूतिमन्त [४]अभवन् असुरानजयन्नित्यर्थ। अत एवाह–पराभूता [५]असुरा इति॥

ततो रक्षांसि विजयफले भागं सप्रार्थ्य स्वसैन्यान्निर्गत्य देवसैन्ये प्रविष्टानि। [१]तत [२]देवा असुरान् [३]नित्या [४]रक्षांसि अपनोदितवन्त । [५]तानि [६]रक्षांसि देवा [७]अनृतम् अकुर्वन् [८]इति निश्चित्य प्रहर्तुं परितो वेष्टनमकुर्वन्। तदानीं [९]देवा [१०]अग्नौ स्वकार्यसिद्धिमयाचन्त। याचित्वा त्रिहविष्कामिष्टिं [११]निरवपन्। तत्र प्रथमस्य हविष प्रवानग्निर्देवता, याज्यापुरोनुवाक्ययो "प्रप्रायमग्निर्भरतस्य" (तैस २ ५ १२) इत्यादिक्यो [६]'श्रुत' प्रशब्दो यस्याग्नेरस्ति सोऽयं प्रवान्। द्वितीयस्य हविषो विबाधवानग्निर्देवता, "वि पाजसा पृथुना" (तैस २ ५ १२) इत्यस्मिन् मन्त्रे श्रूयमाणो विबाधशब्दो यस्याग्नेरस्ति सोऽयं विबाधवान्। तृतीयस्य हविष प्रतीकवानग्निर्देवता, "स त्वमग्ने प्रतीकेन" (तैस २ ५ १२)[७]इति मन्त्रे प्रतीकशब्दो यस्याग्नेरस्ति सोऽयं प्रतीकवान्। तत्र प्रवतोऽग्नेरिष्ट्या पूर्वस्या दिशि [१२]रक्षाꣳसि प्रणोदितवन्त । विबाधवतोऽग्नेरिष्ट्या दक्षिणोत्तरयो पार्श्वयो [१३]रक्षाꣳसि विबाधितवन्त । प्रतीकवतोऽग्नेरिष्ट्या प्रतीच्या दिशि [१४]रक्षांसि अपनोदितवन्त । [१५]तत [१६]देवा विजयिन [१७]अभवन् [१८]असुरा' पराजिता अभवन्॥

१२ त१.त२–विशेष्य। १३ मै–प्रतिकूला वृत्ति। १४ ल–'प्रतीकवान्' नास्ति। १५. त१ त२.मै– प्रहतत्वात्। १६–१६ मै–विश्लेष्यानाशयन्, तं१ त२.प२.ल–विकृष्यानाशयन्। १७ त१ त२.मै ल– अपकृष्य। १८. मै– इति। १९. त१ त२– °पीडया।

६ ङ हो१– 'श्रुत ' नास्ति। ७ हो१– तं सुप्रतीकमित्यनयो ।

एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते(३)ऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनाप नुदते प्र श्रेयांसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं(४)विद्वानेतयेष्ट्या यजते ॥ १ ॥

[ वृणामहे यत्पुरस्ताद्रक्षांसि वपेदग्नये विबाधवत एव चत्वारि च । ] ॥

निरिति । वपेत् । अग्नये । विबाधवत इति विबाध-वते (३) । अग्नये । प्रतीकवत इति प्रतीक-वते । यत् । अग्नये । प्रवत इति प्र-वते । निर्वपतीति, निः-वपति । यः । एव । अस्मात् । श्रेयान् । भ्रातृव्यः । तम् । तेन । प्रेति । नुदते । यत् । अग्नये । विबाधवत इति विबाध-वते । यः । एव । एनेन । सदृङिति स-दृङ् । तम् । तेन । वीति । बाधते । यत् । अग्नये । प्रतीकवत इति प्रतीक-वते । यः । एव । अस्मात् । पापीयान् । तम् । तेन । अपेति । नुदते । प्रेति । श्रेयांसम् । भ्रातृव्यम् । नुदते । अतीति । सदृशम् । क्रामति । न । एनम् । पापीयान् । आप्नोति । यः । एवम् (४) । विद्वान् । एतया । इष्ट्या । यजते ॥ १ ॥

[ मैसं २.१.११, १०.७ कासं ]

य इत्यादि ॥ गतम् । श्रेयान् प्रशस्यतर । त तावत् प्र नुदते स्वरूपाच्च्यावयति सदृङिति । समान पश्यतीति सदृङ् । " °समानान्ययोश्च° " (पा ३.२.६० वा १) इति क्विन् । " दृक्स्ववस्स्वतवसा छन्दसि " (पा ७ १.८३) इति नुम् । वि बाधत इति । विश्लेष्य नाशयति । किं च नैन कदाचिदपि पीडा प्राप्नोति । साम्यमस्य निवर्तयति स्वयमतिशेत इति यावत् । 'पापीयान् पापतरः 'तम् 'अप 'नुदते नाशयति यथाऽस्य न कदाचिदनुकरोति" ।

अथ वेदितुः स्तुतिः–श्रेयास प्र नुदते, सदृशम् अति क्रामति, न एन कदाचिदपि [२१]पापीयान् भ्रातृव्य [२२]आप्नोति । गतमन्यत् ॥ इति द्वितीये चतुर्थे प्रथमोऽनुवाक ॥

य इति ॥ इष्टिं विधत्ते– 'यो भ्रातृव्यवान्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् स तेनाप नुदते ' इति ॥ त्रिविधो हि भ्रातृव्यः । प्रबल समानबलो हीनबलश्चेति । तेषां त्रयाणां क्रमेण त्रिभिर्हविर्भिरपाकरणं भवति ॥

प्रेति ॥ वेदनं प्रशंसति– 'प्र श्रेयांसं भ्रातृव्यं नुदतेति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते ' इति ॥ भ्रातृव्यं श्रेयांसं प्र नुदते, सदृशम् अति क्रामति, पापीयान् तु न आप्नोत्येव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥

२०. मै-दृग्भाग । २१. तै१.तै२ °क्रोतीति । २२. तै१.तै२.मै म–'पापीयान्' नास्ति । २३. म–'आप्नोति' इत्यस्मानन्तरं 'साम्यमस्य' ।

काम्या इष्टय ]

देवासुराः संयत्ता आसन् ते देवा अब्रुवन् यो नौ वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्वं वै नौ वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो मे इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती( १ )त्यब्रवीत्

देवासुरा इति देव-असुरा । संयत्ता इति सं-यत्ता । आसन् । ते । देवा । अब्रुवन् । य । न । वीर्यावत्तम इति वीर्यावत्-तम । तम् । अन्विति । समारभामहा इति सम् आरभामहै । इति । ते । इन्द्रम् । अब्रुवन् । त्वम् । वै । न । वीर्यावत्तम इति वीर्यावत् तम । असि । त्वाम् । अन्विति । समारभामहा इति सम् आरभामहै । इति । स । अब्रवीत् । तिस्र । मे । इमा । तनुवं । वीर्यावतीरिति वीर्य-वती । ता । प्रीणीत । अथ । असुरान् । अभीति । भविष्यथ । इति । ता । वै । ब्रूहि । इति । अब्रुवन् । इयम् । अꣳहोमुगित्यꣳह-मुक् । इयम् । विमृधेति वि मृधा । इयम् । इन्द्रियावतीतीन्द्रिय वती ( १ ) । इति । अब्रवीत् ।

देवासुरा इत्यादि ॥ गतम् । [v]वीर्यावत्तम । "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम् । [1]तमन्विति ॥ [v]त प्रधानभूत [2]पुरुषमनुसरन्तो वय सभूय कर्माण्यारभामहे । "हीने" (पा १ ४ ८६) इत्यनो कर्मप्रवचनीयत्वम् । [3]त इत्यादि[3] । गतम् । एव वीर्यावतीरिति । वीर्यवत्य । पूर्ववद्दीर्घत्वम्, "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्ण दीर्घत्वम् । ता वा इत्यादि । [v]अब्रुवन् देवा । इयमित्यादि । [v]अब्रवीत् इन्द्र । विमृधेति । "अच्" (पा ५ ४ ७५) इति योगविभागादच् समासान्त ॥

आद्येऽनुवाके काम्येष्टि स्पर्धमानस्य वर्णिता ॥

देवासुरा इति ॥ अथ द्वितीये [1]स्पर्धमानस्यैव विजितिसज्ञाम् [2]इष्टिं विधातु प्रस्तौति- 'देवासुरा सयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति त इन्द्रमब्रुवन् त्व वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ता प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगिय विमृधेयमिन्द्रियावतीत्यब्रवीत् त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपाल निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे निरवपन्नꣳहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपाल पुरोडाश निरवपन् त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ता वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त' इति ॥ युद्धायोद्युक्ता 'देवा परस्परमिदम् 'अब्रुवन् 'न अस्माक मध्ये 'य अतिशयेन वीर्यवान् 'तम् अनुसृत्य वय सर्वे 'समारभामहै सम्यग्युद्धोपक्रम कुर्मः 'इति । तत 'ते 'इन्द्रम् अतिशयेन

१ त१ त२ मै ल तमनु । २ त१ त२ मै ल- 'पुरुषम्' नास्ति । ३-३ ल- इत्यादि ।

१ आ-तस्यैव । २ क हा- इष्टि ।

त इन्द्रायांऽहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायांऽहोमुचे निरवपन्नंऽहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपालं पुरोडाशं निरवपन् त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै (२) तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त

ते। इन्द्राय। अꣳहोमुच इत्यꣳहः–मुचे। पुरोडाशम्। एकादशकपालमित्येकादश कपालम्। निरिति। अवपन्। इन्द्राय। वैमृधाय। इन्द्राय। इन्द्रियावत इतीन्द्रिय-वते। यत्। इन्द्राय। अꣳहोमुच इत्यꣳहः–मुचे। निरवपन्निति निः – अवपन्। अꣳहसः। एव। तेन। अमुच्यन्त। यत्। इन्द्राय। वैमृधाय। मृधः। एव। तेन। अपेति। अघ्नत। यत्। इन्द्राय। इन्द्रियावत इतीन्द्रिय-वते। इन्द्रियम्। एव। तेन। आत्मन्। अदधत। त्रयस्त्रिꣳशत्कपालमिति त्रयस्त्रिꣳशत्-कपालम्। पुरोडाशम्। निरिति। अवपन्। त्रयस्त्रिꣳशदिति त्रयः–त्रिꣳशत्। वै। देवताः। ताः। इन्द्रः। आत्मन्। अन्विति। समारम्भयतेति सम्-आरम्भयत। भूत्यै (२)। ताम्। वाव। देवाः। विजितिमिति वि-जितिम्। उत्तमामित्युत्-तमाम्। असुरैः। वीति। अजयन्त।

अथ [१]ते देवा [२,३]इन्द्राय एता त्रिहविष्कामिष्टिं [३]निः [३]अवपन्। त्रयस्त्रिंशत्कपालमिति। त्रयाणामेकादशकपालानां त्रयस्त्रिंशत्कपाला[४] भवन्तीति भावः। [५]पुरोडाशम् इति च [६]जात्यभिधानम्। आत्मन्निति। आत्मनि गुणभूतानकरोत्, तद्देवानां [५]भूत्यै अभवत्। विजितिमिति। व्यावृत्तो जयो विजितिः। असुरेभ्यो व्यावृत्ताम् [६]उत्तमाम् [७]विजितिम् इति। [८]वि [९]अजयन्त प्राप्नुवन्, उत्तममसुरविजयमलभन्तेति, यावत्, 'गोपोष पुष्णाति' इतिवत् [७]सामान्यविशेषविषयत्वम् उभयो[७]। गतमन्यत्॥

धीर्यवन्त निश्चित्य तेनोक्तास्तद्दाया. [१]तिस्रः तनूर्हविर्भिस्तर्पितवन्तः। तैश्च हविर्भिः क्रमेण पापविमोकं वैर्यपघातं सामर्थ्यधारणं च कृतवन्तः। [२]त्रिष्वेकादशकपालपुरोडाशेषु मिलित्वा त्रयस्त्रिंशत्कपालः पुरोडाशः सम्पद्यते। तेन च [३]त्रयस्त्रिंशत्सङ्ख्याकान् देवान् [४]इन्द्र आत्माधीनान् करोति। तच्चैश्वर्याय सम्पद्यते। ततः [५]देवाः [६]असुरैः सह [७]युद्ध्वा [८]तां पूर्वोक्तां पापविमोकवधपुरोधेन्द्रियधारणरूपाम् [९]उत्तमां [१०]विजितिं प्राप्नुवन्॥

४. मै८– इन्द्रादय। ५. मै८,७– कपालानि। ६. मै८– जात्यभिप्रायम्। ७–७. त१,त२ मै–सामान्यविशेषाभिप्रायत्वात्; पै०– सामान्यविशेषविषयत्वात्।

३. दो१– °कपालेषु पुरोडाशेषु। ४. द– त्रयस्त्रिंशत्कपालसङ्ख्याकान्। ५. आ–युद्धार्थं।

यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेका-
दशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान्
भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिपण्णो
यस्मात् समानेष्वन्यः श्रेयानुता(३)भ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनापहते

य. । भ्रातृव्यवानिति भ्रातृव्य-वान् । स्यात् । स । स्पर्धमान । एतया । इष्ट्या । यजेत । इन्द्राय । अꣳहोमुच इत्यꣳह – मुचे । पुरोडाशम् । एकादशकपालमित्येकादश कपालम् । निरिति । वपेत् । इन्द्राय । वैमृधाय । इन्द्राय । इन्द्रियावत इतीन्द्रिय वते । अꣳहसा । वै । एष । गृहीत । यस्मात् । श्रेयान् । भ्रातृव्य । यत् । इन्द्राय । अꣳहोमुच इत्यꣳह –मुचे । निर्वपतीति नि –वपति । अꣳहस । एव । तेन । मुच्यते । मृधा । वै । एष । अभिपण्ण इत्यभि सन्न । यस्मात् । समानेषु । अन्य । श्रेयान् । उत (३) । अभ्रातृव्य । यत् । इन्द्राय । वैमृधाय । मृध । एव । तेन । अपेति । हते ।

यस्मादिति ॥ [v]यस्मात् [v]भ्रातृव्य [v]श्रेयान् प्रशस्यतरो भवति, सोऽयम् [v]अꣳहसा [v]गृहीत, तस्मात् [v]अꣳहोमुचे निर्वपेत् । [v]तेन [v]अहस मुक्तो भवति । मृधा वा इत्यादि । [v]समानेषु मध्ये [v]अभ्रातृव्य अपि नाम कश्चित् [v]यस्मात् [v]अन्य [v]श्रेयान् प्रशस्यतरो भवति [v]एष खलु [v]मृधा [v]अभिपण्ण सग्रामाभिभूत इव भवति । तस्मात् [v]इन्द्राय [v]वैमृधाय निर्वपेत्, मृध सग्रामानपहन्ति ॥

य इति ॥ विधत्ते–‘यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपाल निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान् भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिपण्णो यस्मात् समानेष्वन्य श्रेयानुता भ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनात्मन् धत्ते त्रयस्त्रिꣳशत्कपाल पुरोडाश निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आरम्भणु समारम्भयते भूत्यै’ इति ॥ पूर्वोक्तप्रवदादिविशेषणवदꣳहोमुगादिविशेषणानि याज्यानुवाक्यागतशब्दाभिप्रायेण वा स्वार्थपरत्वेन वा योजनीयानि । “अꣳहोमुचे प्र भरेमा मनीषाम्” (तैस १ ६ १२) इत्यस्मिन् मन्त्रेऽस्त्यꣳहोमुक्शब्द । “वि न इन्द्र मृधो जहि” (तैस १ ६ १२) इत्यस्मिन् मन्त्रेऽस्ति [6]विमृच्छब्द । “इन्द्रियाणि शतक्रतो” (तैस १ ६ १२) इत्यस्मिन्मन्त्रेऽस्तीन्द्रियशब्द । अर्थपरत्व तु विस्पष्टम् । पूर्वोक्तेषु प्रवदादिष्वपि [7]प्रणोदनवत्त्व शत्रुविबाधवत्त्व [8]प्रत्यङ्मुखत्व चेत्यर्थपरत्व योज्यम् । [v]यस्मात् यजमानात् [v]भ्रातृव्य

६ आ ड– विमृधशब्द । ७ हो१ – प्रतुन्दनवत्त्वम् । ८. क हा – प्राङ्मुख, ङ ञ– प्रामुख्यवत्त्व हो१– प्रारम्भवत्त्वम् ।

यदिन्द्रायेन्द्रियावते इन्द्रियमेव तेनाऽऽत्मन् धत्ते त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपति त्रयस्त्रिंशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै सा वा एषा विजितिनामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ॥ २ ॥

[ इन्द्रियावती भूत्यां उतैकान्नपञ्चाशच्च ]

यत्। इन्द्राय। इन्द्रियावत इतीन्द्रिय-वते। इन्द्रियम्। एव। तेन। आत्मन्। धत्ते। त्रयस्त्रिंशत्कपालमिति त्रयस्त्रिंशत्-कपालम्। पुरोडाशम्। निरिति। वपति। त्रयस्त्रिंशदिति त्रय-त्रिंशत्। वै। देवताः। ताः। एव। यजमानः। आत्मन्। अन्विति। समारम्भयत इति सम्-आरम्भयते। भूत्यै। सा। वै। एषा। विजितिरिति वि-जितिः। नाम। इष्टिः। यः। एवम्। विद्वान्। एतया। इष्ट्या। यजते। उत्तमामित्युत्-तमाम्। एव। विजितिमिति वि-जितिम्। भ्रातृव्येण। वीति। जयते ॥ २ ॥

[ मैस २·२·५, १० कासं १०·१० ]

विजितिर्नामेति ॥ विजयहेतुत्वात्। गतमन्यत् ॥

इति द्वितीये चतुर्थे द्वितीयोऽनुवाकः ॥

श्रेयान् भवति सः एषः यजमानः पाप्मना गृहीतः भवति। स च प्रथमहविषा पापात् मुच्यते। समानेषु मध्ये यस्मात् यजमानात् अन्यः श्रेयान भवति सोऽन्यो यद्यपि अभ्रातृव्यः तथाऽपि एषः अश्रेयान यजमानः श्रेयस्त्वमात्रसंपादितवैरित्वेन तेनान्येन अभिपण्णः अभिभूतो भवति, तदीयश्रेयस्त्वम् असहमानः तेनाहमभिभूतोऽस्मीति क्लिश्यति। स तु द्वितीयेन हविषा मृधः तादृशान्शत्रून् अपहते। तृतीयेन हविषेन्द्रियधारणं भवति। पूर्ववत् समुदितया त्रयस्त्रिंशत्संख्यया यजमानस्य सर्वा देवताः स्वाधीना भवन्ति। तच्च भूत्यै संपद्यते ॥

सेति ॥ इष्टेः नामोपदिश्य तद्वेदनं प्रशंसति–' सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ' इति ॥ विशेषेण जयन्त्यनयेति विजितिः। एतद्वेदिता भ्रातृव्येण सह युद्ध्वा तां पूर्वोक्तां पापमोक्षादिरूपाम् उत्तमां विजितिं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥

९. आ- एष। १०. दो१- श्रेयसि तमत्र संपादितवैरित्वेन। ११. आ.द.ग१- सहमानि°। १२-१२. ब-नामाभिधाय; दो१- नाम अभीन्य।

देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतरांश्चनोपावर्तत

देवासुरा इति देव-असुराः। संयत्ता इति सं-यत्ताः। आसन्। तेषाम्। गायत्री। ओजः। बलम्। इन्द्रियम्। वीर्यम्। प्रजामिति प्र-जाम्। पशून्। संगृह्येति सं-गृह्य। आदायेत्या-दाय। अपक्रम्येत्यप-क्रम्य। अतिष्ठत्। ते। अमन्यन्त। यतरान्। वै। इयम्। उपावर्त्स्यतीत्युप-आवर्त्स्यति। ते। इदम्। भविष्यन्ति। इति। ताम्। वीति। अह्वयन्त। विश्वकर्मन्निति विश्व-कर्मन्। इति। देवाः। दाभि। इति। असुराः। सा। न। अन्यतरान्। चन। उपावर्ततेत्युप-आवर्तत।

देवासुरा इत्यादि॥ तेषां देवासुराणाम् ओजःप्रभृति संगृह्य आदाय आच्छिद्य अपक्रम्य तेन सह तत्सकाशादपक्रम्य क्वापि अतिष्ठत् गायत्री। ते देवा असुराश्च[1] अमन्यन्त अस्माकं मध्ये यतरान् इयम् उपावर्त्स्यति उपावर्तिष्यते [2]ते इदं विश्वं भविष्यन्ति इति[3] अस्य विश्वस्य स्वामिनस्ते भविष्यन्तीति[3]। यद्वा– इदं विश्वं ते भविष्यन्ति

द्वितीये विजयार्थेष्टिः प्रोक्ता विजितिनामिका[1]॥

देवासुरा इति॥ अथ तृतीये भ्रातृव्यवतः स्पर्धमानस्य संवर्गेष्टिं विधित्सुरादौ तदङ्गभूतं मन्त्रं पठितुं प्रस्तौति–'देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभीत्यसुराः सा नान्यतरांश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्' इति। ओजः त्वगसृङ्मांसादिधातुषु[3] अष्टमो धातुः। तथा च संप्रदायविद्भिरुक्तम्– "ओजो[4] नामाष्टमी दशा" इति[4]। बलं शरीरशक्तिः। इन्द्रियं दृष्ट्यादिपाटवम्। वीर्यमुत्साहः। प्रजाः पुत्रादिकाः। पशवो गवादिकाः। देवासुरेषु [5]युद्धार्थं गतेषु[5] तदीयानोजःप्रभृतीन् षट्पदार्थान् गायत्री संगृह्य तदुभयेभ्यः अपक्रम्य दूरे स्थितवती। तां दृष्ट्वा ते देवाश्चासुराश्चैवम् अमन्यन्त– उभयोर्वर्गयोर्मध्ये यतरान् यद्वर्गस्थितान् इयं गायत्री प्राप्स्यति तद्वर्गस्थिताः इदं सर्वैश्वर्यं प्राप्स्यन्तीति। तदुभयेऽपि तां गायत्रीं विलक्षणेन शब्देनाऽऽहूतवन्तः। हे विश्वकर्मन् इति देवानामाह्वानं, हे दाभि इति असुराणामाह्वानं, विश्वानि कर्माणि यस्याः सा विश्वकर्मा, तत्संबोधनं हे विश्वकर्मन्निति। दभ्नोति विरोधिनो हिनस्तीति दाभी, तत्संबोधनं हे दाभीति। सा गायत्री अन्यतरान् उभयोर्वर्गयोः मध्ये तानपि पुरुषान् न एव प्राप्नोत्। ततः [9]ते देवाः[9] तत्प्राप्त्युपायत्वेन एतत् यजुः अपश्यन्॥

१–१. तं.तं२.मै.लं– देवासुराः। २. तं१.तं२.लं– 'ते' नास्ति। ३. तं१.तं२– 'इति' नास्ति।

१. आ.ड– नामका। २. इ.जो.ना.हा– भ्रातृव्येण। ३. आ.क– °मासादिधातुभ्यो जातः; इ.ना– °मासादिधातुभ्य। ४–४. क– नामाष्टमीमिति, हो१– नामाष्टमो धातुरिति। ५–५. अ.ढ.पा– युद्धं गतेषु; इ– युद्धार्थे संगतेषु। ६. ड.हो१– प्राप्यते। ७. इ– मध्यस्थितान्। ८. हो१– काश्चिदपि। ९–९. ड.शृं– 'ते देवाः' नास्ति।

ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि ( १ ) भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभू-

ते। देवा । एतत्। यजुः। अपश्यन्। ओजः । असि। सहः। असि। बलम्। असि (१)। भ्राजः। असि। देवानाम्। धाम। नाम। असि। विश्वम्। असि। विश्वायुरिति विश्व-आयुः। सर्वम्। असि। सर्वायुरिति सर्व-आयुः। अभिभूरित्यभि-भूः।

प्राप्स्यन्तीति। "वृद्भ्य. स्यसनोः" (पा १·३ ९२) इति परस्मैपदम्, न वृद्भ्यश्चतुर्भ्य (पा ७ २ ५९) इतीडभाव। अथ देवासुराः ता वि अह्वयन्त विविधमाह्वयन्निति। "निसमुपविभ्यो ह्व." (पा १ ३ ३०) इत्यात्मनेपदम्। विश्वकर्मन्निति। विश्वानि कर्माण्यस्यामिति विश्वकर्मा। "मन" (पा ४·१·११) इति ङीप्प्रतिषेध, "आमन्त्रिताद्युदात्तत्वम्" (पा ६·१ १९८)। हे विश्वकर्मन् इति देवा गायत्रीमाह्वयन्। [4]हे दाभि इति असुरा आह्वयन्[4], सामर्थ्यात् ह्वयत्यर्थमात्र सबध्यते। यद्वा– व्यह्वयन्त विलक्षणमाह्वान कृतवन्त.। [5]वैलक्षण्य चाह्वानपदभेद[5]। दभन दाहः, [6]दभि प्रकृत्यन्तरमस्ति, तस्मात् घञन्तात् मत्वर्थीय अकारः, गौरादिर्द्रष्टव्य (पा ४·१·४१), पूर्ववदामन्त्रिताद्युदात्तत्वम्, "अम्बार्थनद्योः°" (पा ७·३·१०७) इति ह्रस्वत्वम्। यद्वा–पचाद्यजन्तात् स्वार्थिकोऽण्, तत "टिड्ढाणञ्°" (पा ४·१·१५) इति ङीप्। सेत्यादि। गतम्॥

ओजोऽसीत्यादि॥ [7]ओजः असि तेजोऽसि[7] [8]यशोऽसि देवानाम्। सर्वत्र तद्धेतुत्वात् ताच्छब्द्यम्। सहः असि अभिभवसाधनमसि शत्रूणाम्। बल प्रसिद्धम्। भ्राजः दीप्ति। धाम स्थानम्। नाम नमनमुपकारकम्। विश्वम् असि अन्यदपि यद्भद्र तदसि। विश्वायुः [9]विश्वमायुर्जीवितमस्मिन्निति विश्वायु.। "बहुव्रीहौ विश्व सज्ञायाम्" (पा ६·२·१०६) इति विश्वशब्दस्यान्तोदात्तत्वम्। सर्वम् असि सर्वमपि [10]जगत्कर्तृ त्वमासि[10]। [11]सर्वायु

**ओज इति॥** तदिद यजुः पठति– 'ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवाना धाम नामासि विश्वमसि विश्वायु सर्वमसि सर्वायुरभिभू' इति॥ अत्र सर्वात्मकत्वेन गायत्री स्तूयते। ओजोबले व्याख्याते। सहः सहिष्णुत्वं धैर्यम्। भ्राज. दीप्ति.। देवाना धाम स्वर्गः। नाम इन्द्रादिकम्। विश्वम् अचेतनं कृत्स्नं जगत्। विश्वायु. कृत्स्नायुरस्तम्। सर्वं चेतनरूपं कृत्स्नं जगत्। सर्वाण्यायूंषि यस्य चेतनस्य जगतस्तत् सर्वायु। वैरिणोऽभिभवतीति अभिभू॥

४-४. मै४– 'हे दाभि .....आह्वयन्' नास्ति। ५-५. मै४– तत्र वैलक्षण्यं चाह्वानस्याह, हे दाभि। ६. मै४– दाभि.। ७-७ तै१ तै२.मै ए– तेजोऽसि। ८. तै१.तै२– 'यशोऽसि' नास्ति। ९. तै१.तै२.मै ए – विश्वायुर्जीवि°। १०-१०. तै१.तै२.मै ए – जगत्त्वमेवासि। ११-११. तै१. तै२.मै ए सर्वायुरसि।

-रिति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्सवृञ्जत यद्गायत्र्यप-क्रम्यातिष्ठत् तस्मादेतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं (२) प्रजां पशून्त्संवृञ्जत तस्मादेताऽ संवर्ग इतीष्टिमाहु-

इति । वाव । देवा । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र-जाम् । पशून् । सम् । अवृञ्जत । यत् । गायत्री । अपक्रम्येत्यप-क्रम्य । अतिष्ठत् । तस्मात् । एताम् । गायत्री । इति । इष्टिम् । आहुः । संवत्सर इति सम्-वत्सरः । वै । गायत्री । संवत्सर इति सम्-वत्सरः । वै । तत् । अपक्रम्येत्यप-क्रम्य । अतिष्ठत् । यत् । एतया । देवाः । असुराणाम् । ओजः । बलम् । इन्द्रियम् । वीर्यम् (२) । प्रजामिति प्र-जाम् । पशून् । सम् । अवृञ्जत । तस्मात् । एताम् । संवर्ग इति सम्-वर्गः । इति । इष्टिम् । आहुः ।

च असि[11]। सर्वाणि चायूंषि [12]सर्वाण्यन्नानि अस्यामिति [13]सर्वायु सर्वान्नहेतुरसि[13]। अभिभू. यस्मादेवं तस्मात् त्वं [14]सर्वस्य उपरि भवसि [15]सर्वस्य च[16] अभिभवितासि ॥

इति वावेत्यादि ॥ इति अनेन यजुषा देवा असुराणाम् अपि ओजआदिकम् अवृञ्जत आवर्जयन् आत्मसात्कृतवन्त न केवलमात्मीयमेव लब्धवन्त ।

यदित्यादि । गायत्र्यपक्रमणहेतुत्वात् एतां वक्ष्यमाणाम् इष्टिं गायत्री इति आहु वेदार्थविद ॥

संवत्सरो वा इत्यादि ॥ [17]संवत्सरवत् सर्वार्थहेतुत्वात् वत्साम्यात्[17] तदानीं संवत्सर एव देवेभ्य अपक्रम्य अतिष्ठत् । यथा संवत्सरापक्रमेण[18] ओजआदिक नश्यति तद्वदिदमिति । यदेतयेत्यादि । [19]संवृज्यते ओजआदिक सर्वं सहैवानेन [20]आवृज्यते आच्छिद्यते इति संवर्ग योग । वृजी वर्जने, घञि "चजो कु घिण्ण्यतो" (पा ७ ३ ५२) इति कुत्वम् ॥

इतीति ॥ [10]यथोक्त मन्त्रसाध्यं[10] फल दर्शयति–'इति वाव देवा असुराणामोजो बलमिन्द्रिय वीर्यं प्रजा पशूनवृञ्जत' इति ॥ अनेनैवोक्तेन स्तुतिरूपेण मन्त्रेण गायत्रीं प्रसाद्य तत्प्रसादात् असुराणामोजआदिषट्कं विनाश्य स्वय तल्लब्धवन्त ॥

यदिति ॥ इष्टिं विधातु प्रस्तौति–'यद्गायत्र्यपक्रम्यातिष्ठत् तस्मादेता गायत्रीतीष्टिमाहु संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रिय वीर्यं प्रजा

१२. त१ त२ मै ल – अन्नानि । १३–१३. त१ त२ मै मै४ ल – 'सर्वायु' नास्ति । १४ त१ त२ – सूर्यस्य । १५ ल – सूर्यस्य । १६ त१ त२ मै ल – 'च' नास्ति । १७–१७ मै४ – संवत्सरस्यार्थहेतुत्वात् तादर्थ्यात् । १८ मै४ – °क्रमेण । १९ मै – संवृज्यते । २० मै – आवृज्यते ।

१०. आ – यथा मन्त्रस्यार्थम्, हो१ – यथोक्तमन्त्रस्यार्थम् ।

-यों भ्रातृंव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टा-
कंपालं निर्वपेत् तं शृतमासंन्नमेतेन यजुषाऽभि मृशेदोजं एव बलंमिन्द्रियं वीर्यं
प्रजा पशून् भ्रातृंव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृंव्यो भवति ॥ ३ ॥
[ बलमस्येतयां देवा असुराणामोजो बलमिन्द्रियं वीर्यं पञ्चचत्वारिंशच्च ]

य । भ्रातृंव्यवानिति भ्रातृंव्य वान् । स्यात् । स । स्पर्धमान । एतयां । इष्ट्यां । युजेत । अग्नये । सुवर्गायेति सं वर्गाय । पुरोडाशंम् । अष्टाकपालमित्यष्टा-कृपालम् । निरिति । वपेत् । तम् । शृतम् । आसंन्नमित्या-सुन्नम् । एतेनं । यजुंषा । अभीति । मृशेत् । ओजं । एव । बलंम् । इन्द्रियम् । वीर्यम् । प्रजामिति प्र जाम् । पशून् । भ्रातृंव्यस्य । वृङ्क्ते । भवति । आत्मनां । परेति । अस्य । भ्रातृव्य । भवति ॥ ३ ॥
[ मैत्र २ १ ११, काठ १० ७ ]

यो भ्रातृव्यवानित्यादि गतम् । एतेन यजुषेत्यादि । 'ओजोऽसि' इत्यादिना । अत्रा चार्येण—"सर्वायुरभिभूरस्यभिभूरहम् "अनेन हविषाऽमु भ्रातृव्यमभिभूयासम्" ( द्र बौश्रौ १३ ३५ ) इति शेषो दर्शित ॥

इति द्वितीये चतुर्थे तृतीयोऽनुवाक ॥

पशूनवृञ्जत यस्मादेतार संवर्ग इतीष्टिमाहु ' इति ॥ विधास्यमानाया इष्टेर्गायत्री संवर्ग इति नामद्वयम् । यस्मात् 'गायत्री सर्वमादाय 'अपक्रम्य स्थित्वा मन्त्रेण स्तुता सती सर्वमानीतवती 'तस्मात् तेन मन्त्रेण हविरभिमृश्य क्रियमाणेष्टि 'गायत्री इत्युच्यते । सा च 'गायत्री संवत्सररूपा तदीयाक्षरैरर्धमासेषु च चतुर्विंशतिसंख्याया समानत्वात् । अत 'संवत्सर एव तदानीं गायत्रीरूपेण 'अपक्रम्य 'अतिष्ठत् इति संवत्सरात्मकत्वात् प्रशस्तेयमिष्टि । यस्मात् 'एतया इष्ट्या 'देवा 'असुराणा सकाशादोजआदिषट्क वर्जितवन्त 'तस्मात् सम्यग्वृज्यते विनाश्यतेऽनेनेति संवर्गनामकोऽयं याग ।

य इति ॥ इदानीं विधत्ते—'यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपाल निर्वपेत्' इति ॥ "संवर्ग" सं रयिं जय" ( तैस २ ६ ११ ) इति याज्याया संवर्गशब्दश्रवणात् "वैरिसकाशादोजआदिवर्जनहेतुत्वाच्चायमग्नि संवर्ग ॥

तमिति ॥ पूर्वपठितम् 'ओजोऽसि' इत्यादिमन्त्र विनियुङ्क्ते—'तं शृतमासन्नमेतेन यजुषाऽभि मृशेदोज एव बलमिन्द्रियं वीर्यं प्रजा पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति' इति ॥ 'तं पुरोडाश 'शृतं पक्वम् 'आसन्न यथास्थानमासादितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाक ॥

७१ मै-ते।

७२ ह्रो१- वैरिणां संव° ।

२४४)

काम्या इष्टय ]

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैतां सोऽब्रवीद्बृहस्पतिरनया त्वा प्र तिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं प्रातिष्ठत् ततो वै प्रजापतिं प्रजा उपावर्तन्त

---

प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जा । असृजत । ता । अस्मात् । सृष्टा । पराची । आयन् । ता । यत्र । अवसन् । ततः । गर्मुत् । उदिति । अतिष्ठत् । ता । बृहस्पतिः । च । अन्ववैतामित्यनु-अवैताम् । सः । अब्रवीत् । बृहस्पतिः । अनया । त्वा । प्रेति । तिष्ठानि । अथ । त्वा । प्रजा इति प्र-जा । उपावर्त्स्यन्तीत्युप आवर्त्स्यन्ति । इति । तम् । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा पतिम् । प्रजा इति प्र जा । उपावर्तन्तेत्युप-आवर्तन्त ।

---

प्रजापति प्रजा असृजतेत्यादि ॥ पराचा पराचानगतय. अपुनरावृत्ता एव [1] आयन् गता [1] ता यत्र अवसन् तत गर्मुत् उत् अतिष्ठत् अकृष्टादेव प्रदेशात् स्वयमेवाजायत । अथ ता प्रजा विजातीयेन सहोत्पन्न तृणविशेषो गर्मुत् । ओषधीना दुष्टपरिणाम इत्येके । अथ स अब्रवीत् बृहस्पति च प्रजापतिश्च अनु अवैता पश्चादनुसृत्य अवगतवन्तौ । अथ प्रकृष्टस्थितिक बृहस्पति प्रजापतिम् अनया गर्मुता त्वा प्र तिष्ठानि प्रकर्षेण स्थापयामि । अथ प्रकृष्ट स्थापितवान् । त्वा प्रजा उपावर्त्स्यन्ति इति । अथ त गार्मुतेन चरुणा प्रातिष्ठत्

---

स्पर्धमानस्य विहिता सर्वेष्टिस्तृतीयके ॥

प्रजापतिरिति ॥ अथ चतुर्थं गार्मुत चरु विधातु प्रस्तौति–'प्रजापति प्रजा असृजत ता अस्मात् सृष्टा पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैतां सोऽब्रवीद्बृहस्पतिरनया त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति त प्रातिष्ठत् ततो वै प्रजापति प्रजा उपावर्तन्त' इति ॥ ता पराङ्मुखत्वेनापगता प्रजा [1] यत्र अवसन् [1] यत्र देशे निवास कृतवत्यस्तत्र देशे भाण्डक्षालनादि निष्कासपातेन तत देशात् [2] गर्मुत्सञ्ज्ञकम् अकृष्टपच्यम् अरण्यमुद्गरूप धान्यम् उदतिष्ठत् तदानीं बृहस्पति च प्रजापतिश्च ता प्रजा अनुगतवन्तौ ॥ अत्र चकारादनाम्नातो पि प्रकृत प्रजापति समुच्चीयते । तदा प्रजापति प्रति बृहस्पति एवम् अब्रवीत् । अनया गार्मुतधान्यरूपया त्वा प्रतिष्ठानि धान्यवत्त्वेन प्रतिष्ठित करोमि । ततो धान्यवन्तं त्वा तदर्थिन्य प्रजा उपगमिष्यन्तीत्युक्त्वा त प्रजापति प्रति प्रतिष्ठितवान् । तत धान्यवन्त प्रजापतिं धान्यार्थिन्य प्रजा उपगता ॥

---

१–१ त१ त२ मै ल– यद्गता । २ त१ त२– जुष्ट° । ३ त१ त२ मै ल– 'प्रजा' नास्ति ।
४ त१ त२ मै ल– 'च' नास्ति । ५ मै४– अपकृष्य ।

---

१ अ आ उ क ड जो ना पा शृ हा हो१– 'यत्रावसन्' नास्ति । २ आ गर्मुसञ्ज्ञकम्, ड हो१– गर्मुन्नामकम् ।

यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् प्रजापति(१)मेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां प्र जनयति प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टाः पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्ववैतां सोऽब्रवीत् पूषाऽनया मा प्र तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मा प्र तिष्ठेति सोमोऽब्रवीन्-

य । प्रजाकाम इति प्रजा काम । स्यात । तस्मै । एतम् । प्राजापत्यमिति प्राजा-पत्यम् । गार्मुतम् । चरुम् । निरिति । वपेत् । प्रजापतिमिति प्रजा पतिम् ( १ ) । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मै । प्रजामिति प्र-जाम् । प्रेति । जनयति । प्रजापतिरिति प्रजा पति । पशून् । असृजत । ते । अस्मात् । सृष्टा । पराञ्च । आयन् । ते । यत्र । अवसन् । तत । गर्मुत् । उदिति । अतिष्ठत् । तान् । पूषा । च । अन्ववैतामित्यनु-अवैताम् । स । अब्रवीत् । पूषा । अनया । मा । प्रेति । तिष्ठ । अथ । त्वा । पशव । उपावर्त्स्यन्तीत्युप आवर्त्स्यन्ति । इति । माम् । प्रेति । तिष्ठ । इति । सोम । अब्रवीत् ।

यत्र धात्वर्थनिवृत्तौ प्रशब्द तत्रैव "समवप्रविभ्य स्थ" ( पा १ ३ २२ ) इति आत्मनेपदम् अकर्मकस्यैव भवति, इह तु सकर्मक एव प्रकृष्टाया स्थितौ वर्तते, तेनात्मनेपदाभाव, यथा– 'ब्रह्मन् प्रस्थास्याम समिधमाधाय' इति । तत्रापि हि प्रकृष्टस्थितिकर्मा तिष्ठति, न तु स्थिति निवृत्तिकर्मा । ततो वा इत्यादि । गतम् ॥

पूषा चेति ॥ पूषा च प्रजापतिश्च, अथ स अब्रवीत् पूषा प्रजापतिम् अनया गर्मुता प्र तिष्ठ ततो मयि प्रकृष्टस्थितिके सति त्वा पशव उपावर्त्स्यन्ति इति । अत्रान्तरे

---

य इति ॥ विधत्त–" य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजा प्र जनयति ' इति ॥

प्रजापतिरिति ॥ अथ पशुकामस्य सोमापौष्ण गार्मुत चरु विधातु प्रस्तौति– 'प्रजापति पशूनसृजत तेऽस्मात् सृष्टा पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्ववैताम् सोऽब्रवीत् पूषाऽनया मा प्र तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मा प्र तिष्ठेति सोमोऽब्रवीन्मम वा

मम वा (२) अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त यः पशुकामः स्यात् तस्मा एतꣳ सौमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः

सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति

पूषा(३)पशून् प्र जनयति ॥ ४ ॥

[ वपेत् प्रजापतिं वै दधाति पूषा त्रीणि च । ]

मम । वै (२) । अकृष्टपच्यमित्यकृष्ट-पच्यम् । इति । उभौ । वाम् । प्रेति । तिष्ठानि । इति । अब्रवीत् । तौ । प्रेति । अतिष्ठत् । ततः । वै । प्रजापतिमिति प्रजा पतिम् । पशवः । उपावर्तन्तेत्युप-आवर्तन्त । यः । पशुकाम इति पशु-कामः । स्यात् । तस्मै । एतम् । सौमापौष्णमिति सौमा पौष्णम् । गार्मुतम् । चरुम् । निरिति । वपेत् । सोमापूषणाविति सोमा पूषणौ । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । पशून् । प्रेति । जनयतः । सोमः । वै । रेतोधा इति रेतः-धाः । पूषा । पशूनाम् । प्रजनयितेति प्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । पूषा (३) । पशून् । प्रेति । जनयति ॥४॥

[ मैस २२४ कास १०११ ]

[v]सोम अपि [v]मा [v]प्र [v]तिष्ठ [v]इति प्रजापतिम् [v]अब्रवीत् । मदीयं हि [v]अकृष्टपच्यम्, तस्मादनया मा प्रतिष्ठेति । [6]अकृष्टे स्वयमेव पच्यते इति अकृष्टपच्यम् । " अकृष्टे च " ([1]द्र पा ३ १ ११४) इति यत्प्रत्ययः । अथ [v]उभौ अपि युवां [v]प्र [v]तिष्ठानि [v]इति प्रजापतिः [v]अब्रवीत् [7]सोमापूषणौ । ततः [v]तौ गार्मुतेन चरुणा [v]प्रातिष्ठत् । ततो वा इत्यादि । गतम् ॥

इति द्वितीये चतुर्थे चतुर्थोऽनुवाकः ॥

अकृष्टपच्यमित्युभौ वां प्र तिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त' इति ॥ पशु निवासस्थानेऽपि भक्षिततृणशेषगोमयादिपातेन [3]गर्मुत उत्पत्तिः । [4]तया [5]गर्मुता प्रजापतिं पूषणं सोमं च प्रतिष्ठाप्य पशून् प्राप्तवान् ॥

य इति ॥ अथेष्टिं विधत्ते– ' य पशुकाम स्यात् तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधा पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनयति ' इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥

६ त१ त२ मै ल– अकृष्ट । ७ त१ त२– सोमापौष्णौ ।

३ हा– गार्मुत, ड– गरुत्मत । ४ ड– तथा । ५. हा–गार्मुता, ड–गरुत्मता ।

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः ॥
सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु ॥

अग्ने । गोभि । न । एति । गहि । इन्दो इति । पुष्ट्या । जुषस्व । न । इन्द्र । धर्ता । गृहेषु । न ॥
सविता । य । सहस्रिय । स । न । गृहेषु । रारणत् । एति । पूषा । एतु । एति । वसु ॥

अथ चित्रायागो वक्ष्यते । [1]तस्यैते उपहोममन्त्रा सप्त । तत्राद्याश्चतस्रो गायत्र्य । पञ्चमी [2]सतोबृहती । ततो द्वे यजुषी ॥

तत्र प्रथमा– 'अग्ने गोभि' इति ॥ हे अग्ने, गोभि न अस्मान् आ गहि आगच्छ । शपो लुक् । हे इन्दो, पुष्ट्या पशुपुष्ट्या अस्माक जुषस्व सेवस्व प्रीणय वा । इद्र च गृहेषु अस्माक धर्ता धारको भवितुमर्हतीति । "अर्हे कृत्यतृचश्च" (पा ३ ३ १६९) इति तृच् ॥

द्वितीया– 'सविता' इति ॥ य सविता सहस्रिय सहस्रेण समित । "सहस्रेण समितौ घ" (पा ४ ४ १३५) । स अस्माक गृहेषु रारणत् रमताम् । रमतेर्लेटि शप श्लु (पा २ ४ ७६), तुजादित्वादभ्यासस्य दीर्घत्वम् (पा ६ १ ७), लेटोऽडागम (पा ३ ४ ९४), वर्णव्यत्ययेन णत्वम् । पूषा चास्मद्गृहेषु आ एतु आगच्छतु । वसु [3]पशुलक्षण धन च अस्मद्गृहेषु आगच्छतु ॥

प्रजापश्वर्थिनोरुक्तश्चतुर्थे गार्मुतश्चरु ॥

अथ व्यवहितेन पष्ठेन चित्रायाग विधित्सुरादौ पञ्चमेनानुवाकेनोपहोममन्त्रान् पठति ॥

अग्न इति ॥ कल्प – "चित्रापौर्णमासे चित्रामिष्टिं निर्वपेदाग्नेयादीनि सप्त । अग्ने गोभिर्न आ गहि [1]इत्युपहोमा" (आपश्रौ १९ २५ १४ १५) इति ॥ तत्र प्रथममन्त्रपाठस्तु– 'अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व न । इन्द्रो धर्ता गृहेषु न' इति ॥ हे अग्ने, गोभि सह न अस्मान् प्रति आ गहि आगच्छ । हे इन्दो, पशुपुष्ट्या न अस्मान् जुषस्व प्रीणय । इन्द्र न अस्माकं [2]गृहेषु धर्ता पशूना धारयिता भवतु ॥

सवितेति ॥ द्वितीयमन्त्रपाठस्तु– 'सविता य सहस्रिय स नो गृहेषु रारणत् । आ पूषा एत्वा वसु' इति । पशूना सहस्र यस्यास्त्यसौ सहस्रिय । तादृश य सविता न अस्माक गृहेषु रारणत् [3]भृश रमताम् । पशुपोषकश्च देव आगच्छतु । वसु धनमपि आगच्छतु ॥

१ ता१ ता२ मै ए– सप्तामेते । २ ते१ ता२ मै– बृहती । ३ मै४–पशुभि ।

१ आ हा– इत्येतेनानुवाकेनोपहोमा । २ इ– 'गृहेषु' नास्ति । ३ इ– रमताम् ।

धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥
त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च ॥

धाता । दुदातु । नु । रयिम् । ईशान । जगत । पति । स । नु । पूर्णेन । वावनत् ॥
त्वष्टा । य । वृषभ । वृषा । स । नु । गृहेषु । रारणत् । सहस्रेण । अयुतेन । च ॥

तृतीया– 'धाता' इति ॥ धाता सर्वस्य विधाता देवोऽस्मभ्य रयिं धन पशुलक्षण ददातु ईशान दातु समर्थ जगत पति पालयिता । "षष्ठ्या पतिपुत्र°" (पा ८ ३ ५३) इति सत्वम् । किं च– स देवोऽस्मान् पूर्णेन अस्मदभिमत आप्यायितेन धनेन वावनत् सभजताम् अस्मान् परिगृह्णातु । वन षण सभक्तौ, लटि शप श्लु, अडादि पूर्ववत् ॥

अथ चतुर्थी– 'त्वष्टा' इति ॥ य त्वष्टा वृषभ वर्षिता कामाना वृषा प्रधानभूत सेक्ता वा, स अस्माक गृहेषु रारणत् रमताम् । व्याख्यातम् । सहस्रेण पशूना दशभि शते रमताम् । अयुतेन दशभि सहस्र च रमताम् ॥

धातेति ॥ तृतीयमन्त्रपाठस्तु– 'धाता ददातु नो रयिमीशानो जगतस्पति । स न पूर्णेन वावनत्' इति ॥ सर्वस्य विधाता जगत पालक ईश्वर न अस्मभ्य रयिं धन ददातु । स ईश्वर न अस्मान् पूर्णेन धनेन वावनत् भृश भजतु रक्षतु ॥

त्वष्टेति ॥ चतुर्थमन्त्रपाठस्तु–'त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च' इति ॥ य त्वष्टा वृषभ श्रेष्ठ वृषा कामाना वर्षिता स अस्माक गृहेषु पशूना सहस्रेण अयुतेन च सह रारणत् भृश रमताम् ॥

४ तं१ त२ मै ल–सर्वाभिमतै । ५ त१ त२ मै ल–पशूना । ६ मै४– अयुतेन' इत्यस्यानन्तर° 'च' ।

४ भृ–मभजतु । ५ भृ हो१– 'रक्षतु' नास्ति । ६ ड हो१– वर्षयिता ।

येन॑ दे॒वा अ॒मृत॑ (१) दी॒र्घ॑ऽ श्रवो॑ दि॒व्यैर॑यन्त ।
रायस्पोष॒ त्वम॒स्मभ्यं॒ गवां॑ कु॒ल्मि जी॒वस॒ आ यु॑वस्व ॥
अ॒ग्निर्गृ॒हप॑तिः सोमो॑ विश्व॒वनिः॑ सवि॒ता सु॒मे॒धाः स्वाहा॑ ॥

येन॑ । दे॒वा । अ॒मृत॑म् ( १ ) । दी॒र्घम् । श्रवः॑ । दि॒वि । ऐर॑यन्त ॥
रायः॑ । पो॒ष॒ । त्वम् । अ॒स्मभ्य॒मित्य॒स्म भ्यम् । गवा॑म् । कु॒ल्मिम् । जी॒वसे॑ । एति॑ । यु॒व॒स्व॒ ॥
अ॒ग्नि । गृ॒हप॑ति॒रिति॑ गृ॒ह पति॑ । सोम॑ । वि॒श्ववनि॒रिति॑ विश्व वनि॑ ।
स॒वि॒ता । सु॒मे॒धा इति॑ सु मे॒धा । स्वाहा ॥

अथ पञ्चमी– 'येन ' इति ॥ हे रायस्पोष धनपुष्ट, येन त्वया देवा अमृतम् अमृतत्व दीर्घम् अविच्छिन्न श्रव अन्न च दिवि ऐरयन्त द्युलोके प्राप्नुवन् । स त्वम् अस्मभ्य गवा कुल्मि सघात सतान वा आ युवस्व अस्माभिर्मिश्रय, देहीति यावत् । यौतेर्व्यत्ययेनात्मनेपदम्, विकरणव्यत्ययेन श । जीवसे अस्मान् जीवयितुम् । तुमर्थे असेप्रत्यय (पा ३ ४ ९) ॥

अथ षष्ठो मन्त्र – ' अग्नि ' इति । गृहाणा पति पाता अग्नि सोम सर्वस्य धनस्य सभक्ता सविभक्ता । " छन्दसि वनसन° " ( पा ३ २ २७ ) इती प्रत्यय । सविता सुमेधा शोभनमति सदा सानुग्रहबुद्धि । तस्मादेतेभ्यो महानुभावेभ्य इद स्वाहुतमस्त्विति ॥

येनेति ॥ पञ्चममन्त्रपाठस्तु– ' येन देवा अमृत दीर्घᳪ श्रवो दिव्यैरयन्त । रायस्पोष त्वमस्मभ्य गवा कुल्मिं जीवस आ युवस्व ' इति ॥ हे रायस्पोष धनपोषक, येन त्वया देवा अमृतं पीयूषं दीर्घं सम्पूर्णं श्रव कीर्तिहेतुभूतमन्न दिवि ऐरयन्त स्थापितवन्त, तादृश त्वम् अस्मदर्थं गवां कुल्मि गर्भं जीवसे जीवनार्थम् आ युवस्व आनीय मिश्रय ॥

अग्निरिति ॥ षष्ठमन्त्रपाठस्तु– ' अग्निर्गृहपति सोमो विश्ववनि सविता सुमेधा स्वाहा ' इति ॥ अग्नि अस्मद्गृहस्याधिपति । सोम विश्व धनं भजत इति विश्ववनि । सविता शोभना मेधा यस्येति सुमेधा । एतेभ्य इदं [१०]स्वाहा हुतमस्तु [१०] ॥

७ मै०– °देभ्या ।

७ आ युष्प । ८ ट– कीर्तिहेतुभूतम् । ९ ह– ' स्थापितवन्त ' इत्यस्मात्परं ' तादृशम ह' इत्युक्तमस्तु ' । १०–१० ह'[– स्वाहुतम् अस्तु ।

अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात्
पथो मा योषं मूर्धा भूयासꣳ स्वाहा ॥ ५ ॥
[ अमृतंमुग्ध्यात्रिꣳ शच्च । ]

अग्ने । गृहपत इति गृह-पते । य । ते । घृर्य । भाग । तेन । सह । ओज ।
आक्रममाणायेत्या-क्रममाणाय । धेहि । श्रैष्ठ्यात् । पथ । मा । यापम् ।
मूर्धा । भूयासम् । स्वाहा ॥ ५ ॥
[ मैम कास ]

अथ सप्तम – ‘ अग्ने ’ इति । हे ^v^अग्ने ^v^गृहपते गृहाणा ^c^पालयित । “नामन्त्रित समानाधिकरणे” ” (पा ८ १ ७३) इति ^c^पूर्वपदस्य अविद्यमानवत्त्वाभावात्^c^ इद निहन्यते । ^v^य ^v^ते ^v^घृत्य घृतार्ह, छान्दसो यत् (पा ५ १ ६७) । ^v^भाग एकदेशोऽङ्गभेद ^v^तेन कर्मणा ^v^आक्रममाणाय शत्रूनभिभवते ^u^अन्यमभूताय मह्य ^v^सह बलम् ^v^ओज तेजश्च ^v^धेहि देहि । यद्वा– य ते भाग हविर्भाग घृत्य घृते भव घृतप्रकृतिर्वा, तेनानेन हेतुना शत्रून् आक्रममाणाय मह्य सह ओजश्च देहि । ^v^श्रैष्ठ्यात् ^v^पथ मार्गात् ^v^मा ^v^योषम् अपहृतो मा भूवम् । यौतेर्लिङि वृद्ध्यभावश्छान्दस , इडभावश्च । अपि च ^v^मूर्धा प्रधानभूत ^v^भूयासम् । स्वाहुत चेद घृत तुभ्यमस्तु ॥

इति द्वितीये चतुर्थे पञ्चमोऽनुवाक ॥

अग्न इति ॥ सप्तममन्त्रपाठस्तु– ‘ अग्न गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात् पथो मा योष मूर्धा भूयासꣳ स्वाहा ’ इति ॥ हे ^v^गृहपते ^v^अग्ने, घृतमर्हतीति ^v^घृत्य ^v^य ^v^ते ^v^भाग ^v^तेन ^v^सह ^v^ओज अष्टमधातुरूप शरीरसारम् ^v^आक्रममाणाय ^u^कर्म अनुतिष्ठते यजमानाय ^v^धेहि स्थापय । यजमानोऽह ^v^श्रैष्ठ्यात् ^v^पथ श्रेष्ठाना ^u^यागकर्तृणा सबन्धिनोऽस्मादनुष्ठानमार्गात् ^v^मा ^v^योष वियुक्तो मा भूव ^v^मूर्धा यजमानाना मध्ये शिरोवदुत्तम ^v^भूयास, तुभ्यमिद ^v^स्वाहा हुतमस्तु ॥

अत्र विनियोगसग्रह —

अग्ने गोभिस्तूपहोमाश्विशायागे हि सप्त ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाक ॥

८ त१ मै ल– पात । ९ मै८ ल– पूर्वस्य । १० त१ त२ मै ल – विद्यमानत्वाभावात् ।
११ मै४– अन्यकृताय सत्तम (?) ।

११ आ श्रु– कर्म ’ नास्ति । १२ आ– मार्गकर्तृणाम् ।

चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाञ्श्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते प्रैवाऽऽग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि वि करोति

चित्रया। यजेत। पशुकाम इति पशु-काम। इयम्। वै। चित्रा। यत्। वै। अस्याम्। विश्वम्। भूतम्। अधीति। प्रजायत इति प्र जायते। तेन। इयम्। चित्रा। यः। एवम्। विद्वान्। चित्रया। पशुकाम इति पशु काम। यजते। प्रेति। प्रजयेति प्र जया। पशुभिरिति पशु भिः। मिथुनैः। जायते। प्रेति। एव। आग्नेयेन। वापयति। रेतः। सौम्येन। दधाति। रेतः। एव। हितम्। त्वष्टा। रूपाणि। वीति। करोति।

चित्रया यजेतेत्यादि॥ चित्रापूर्णमासे चित्राम् [1]इष्टिं निर्वपेत्। इयं वा इति। विश्व[2]भूत जनाधिकरणतया [3]चायनीय गादिष्टिपृथिव्योरभेदोपचारः। य एवमित्यादि। गतम्॥

आग्नेयोऽष्टाकपालः, सौम्यश्चरुः, त्वाष्ट्रोऽष्टाकपालः, सरस्वत्यै चरुः, सरस्वते चरुः, सिनीवाल्यै चरुः, ऐन्द्र एकादशकपालः, सप्त एतानि हवींषि भवन्ति। प्रैवेति। आग्नेयेन प्र वापयति प्रजनने रेतः सिञ्चति सेचयति पुम्भिः स्त्रीषु, तत्सिक्तं सौम्येन दधाति धारयति। तत्र [4]हितं धारितं, त्वष्टा रूपाणि वि करोति विविधेन रूपेण परिणत

चित्रायागस्योपहोममन्त्रा पञ्चम ईरिता॥

चित्रयेति॥ अथ षष्ठे त याग विधत्ते-'चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वाञ्श्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते' इति॥ चित्रेति यागस्य नामधेयम्। सा च [1]चित्रा भूमिस्वरूपा। [1]यत् यस्मात् कारणात् [1]अस्यां भूमौ सर्वं [1]भूत प्राणिजातमाधिक्येनोत्पद्यते [1]तेन चित्रप्राण्युत्पादनेन [1]इयं भूमिः [1]चित्रा। तद्वद्विचित्रप्रजापशुहेतुत्वात् यागोऽपि चित्रेत्युच्यते॥

प्रेति॥ चित्राया स्वरूपभूतान् सप्त यागविशेषान् विधातु तद्विधिं क्रमेणोन्नयति-'प्रैवाऽऽग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि वि करोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनम्' इति॥ अत्र [1]आग्नेयेन हविषा [1]प्र [1]वापयति प्रकर्षेण पशूत्पत्तिबीज प्रक्षिपति। [1]सौम्येन हविषा व्रीह्यादिबीजेषु गोमयमिव प्रजादिबीजेषु पोषक [1]रेतः धारयति। तृतीयहविर्देवता [1][1]त्वष्टा च [1]हितं[1] [1]रेतः नानाविधरूपाकारेण [1]वि [1]करोति।

१ तै१ तै२ मै ल-'इष्टिं' नास्ति। २. मै ल भूत°। ३. तै१ त२ मै ल-चयनीय°। ४ मै१-निहितं धारयति।

१-१ ई क ट जो ना ग इ हो १-स्वरूपनिहित।

सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै (१) मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त

सारस्वतौ। भवत । एतत्। वै। दैव्यम्। मिथुनम्। दैव्यम्। एव। अस्मै (१)। मिथुनम्। मध्यत । दधाति। पुष्ट्यै। प्रजननायेति प्र जननाय। सिनीवाल्यै। चरु । भवति। वाक्। वै। सिनीवाली। पुष्टि । खलु। वै। वाक्। पुष्टिम्। एव। वाचम्। उपेति। एति। ऐन्द्र । उत्तम इत्युत् तम । भवति। तेन। एव। तत्। मिथुनम्। सप्त। एतानि। हवीꣳषि। भवति। सप्त। ग्राम्या । पशव । सप्त। आरण्या ।

करोति त्वाष्ट्रेण। सारस्वताभ्या दैव्य मिथुन, सरस्वत्सरस्वतीसबन्धिभ्या दैव्य मिथुन गर्भस्थस्य जन्तो पुष्ट्यर्थं काले प्रजननार्थं च मध्यत अन्त दधाति स्थापयति। ततो वाक्प्रवृत्तिहेतुभूताया सिनीवाल्या चरुणा वाचश्च पुष्टिविशेषत्वात् पुष्टि वाच च प्राप्नोति गर्भस्थो जीव । उत्तमस्यैन्द्रस्य भावात् सिनीवाल्या हि तदपर मिथुनम् अन्ते भवति। ततस्तदपि पुष्ट्य प्रजननाय च सपद्यते इति भाव । सप्तेति। गोऽश्वाजाविपुरुषगर्दभोष्ट्रा सप्त ग्राम्या पशव । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेया सप्त आरण्या गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुब्जगत्य सप्त छन्दासि प्रधानानि (द्र बौश्रौ २४ ५)। उभयस्येति। पशूना छन्दसा च।

अत सरस्वतीदेवताक सरस्वद्देवताकश्चेत्युभौ सारस्वतौ भवत । एतत् च द्वय स्त्रीपुरुषरूपत्वात् देवतासबन्धि मिथुन, तस्य हविषा मध्येऽनुष्ठानेन यजमानार्थं दैव्य मिथुन गृहमध्ये सपादितवान् भवति। तच्चोत्पन्नाना प्रजाना पशूना च पुष्ट्यै सपद्यते, अनुत्पन्नाना च प्रजननाय उत्पत्तये सपद्यत। तत्र सिनीवाल्यै चरु कर्तव्य । सिनीवाल्या वाक्त्वमर्थवादान्तरे द्रष्टव्यम् (शब्रा ६ ५ १ ९)। वाच पुष्टिहेतुत्व सभामध्ये पण्डितेष्ववलोक्यते । तस्मादनेन चरुणा पुष्टिहेतु वाच प्राप्नोति। ऐन्द्र यागश्चरम कर्तव्य । तेन एव इन्द्रस्य पुरुषत्वेन सिनीवाल्या स्त्रीत्वेन च तत् उभय मिलित्वा मिथुन भवति। अत्र द्रव्यविशेषा शाखान्तरे द्रष्टव्या ॥

सप्तेति ॥ पाठप्राप्ता हवि सख्या प्रशसति– 'सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्या पशव सप्ताऽऽरण्या सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै' इति ॥ गोपुरुषाश्वाजाविगर्दभोष्ट्रा ग्राम्या ।

५ मै– °सरस्वतीतिसबन्धाभ्याम्, त१ त२ ल– सरस्वत्यैति (?) सबन्धाभ्याम्। ६ त१ त२– 'स्थापयति' नास्ति। ७ त१ त२ मै ल– गोजाविकपुरुषगर्दभाश्वोष्ट्रा ।

२ इ क ड जो ना श्र हा हो१– तत । ३ अ उ जो ना पा हा– स्त्रीसरस्वती° । ४–४ आ– प्रजाना पशूना च प्रजननाय ड हो– अनुत्पन्नाना च जननाय। ५. श्र– सता मध्ये। ६ इ क जो ना हा हो– गोमहिष्याश्वा° ।

ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दा॑ꣳस्युभयस्यावरुद्ध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवा(२)स्मिन् पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै ॥ ६ ॥

[ अस्मै त एव द्वादश च । ]

सप्त । छन्दा॑ꣳसि । उभयस्य । अवरुद्ध्या इत्यव रुद्ध्यै । अथ । एताः । आहुतीरित्या हुताः । जुहोति । एते । वै । देवाः । पुष्टिपतय इति पुष्टि पतयः । ते । एव । (२) अस्मिन् । पुष्टिम् । दधति । पुष्यति । प्रजयेति प्र जया । पशुभिरिति पशु भिः । अथो इति । यत् । एताः । आहुतीरित्या हुताः । जुहोति । प्रतिष्ठित्या इति प्रति स्थित्यै ॥ ६ ॥

[ मैस काम ]

अथैता इति॥ प्रधानयागादनंतरं पुरस्तात् स्विष्टकृत । "अग्ने गोभिर्न आ गहि" (तैस २ ४ ५) इत्याद्याः सप्त ᵛआहुती ᵛजुहोति । 'ᵛएते ᵛवै ᵛदेवा अग्न्यादय । ᵛअथो अपि च ᵛएता आहुतय ᵛप्रतिष्ठित्यै च भवन्ति एतेषां देवानां प्रतिष्ठाया अपि हेतुत्वात्।

इति द्वितीये चतुर्थे षष्ठोऽनुवाक ॥

द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनाद्या॰ ᵛसप्त ᵛआरण्या । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्य ᵛछन्दांसि (द्र बौश्रौ २४५)। ᵛउभयस्य पशुसंघस्य छन्द संघस्य च॥

अथेति ॥ "अग्ने गोभिर्न आ गहि" (तैस २ ४ ५) इत्यादिभिर्मन्त्रैरुपहोमान् विधत्ते-' अथैता आहुतीर्जुहोत्येते वै देवा पुष्टिपतयस्त एवास्मिन् पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै ' इति ॥ ᵛएते ᵛवै मन्त्रोक्ता अग्नीन्द्रादय ॥

अत्र मीमांसा ॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"यच्चित्रया यजतेति तद्गुणो नाम वा भवेत्।
चित्रस्त्रीत्वगुणो स्त्रैरग्नीषोमीयके पशौ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं तत ।
स्यान्नाम पृषदाज्यवर्हिष्पवमानयु तत्तथा" ॥ (जैन्या १ ४ ६ ७)॥

'चित्रया यजेत पशुकाम" (तैस २ ४ ६) इत्याम्नायते। तत्र 'चित्राशब्दो नोद्भिच्छब्दवत् यौगिक-", किं तु रूढ्या चित्रस्त्रीत्वमभिधत्ते। ततो न पूर्वन्यायेन नामत्वम्। तथा सति "अग्नीषोमीयं पशुमालभेत" (तैस ६ १ ११) इति विहितं पशुयागमत्र यजेतेत्यनेन पदेनानूद्य तस्मिन् पशौ चित्रस्त्रीत्वगुणो विधीयत इति प्राप्ते ब्रूम — चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ, ᵛतयोर्द्वयोर्विधाने वाक्यं भिद्येत। तथा चोक्तम्— "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण । ᶦᶦअप्राप्ते तु ᶦᶦविधीयन्ते बहवोऽप्येकयत्नत" (तन्त्रवार्तिक २ २ ६) इति। अथ वाक्यभेदपरिहाराय "गुणद्वयविशिष्टपशुद्रव्यरूपं ᶦᶦकर्म विधीयते तदा गौरवं स्यात्। तस्मादुद्भिन्न्यायेन पूर्ववचित्राशब्दस्य सामानाधिकरण्येन यागनामधेयं भवति। चित्रत्वं च तस्य

८-८ दी१ तैस ᵛ— ता वा इति। अग्न्यादय । अथो इति।

७ द हा१—नामधा । ८-८ द हो१— चित्राशब्दो नोद्भिच्छब्द"। ९ द— तयोर्विधा।
१०-१० द— अप्राप्तु। ११ द हो१— °पशुद्रव्यम्। १०, हा— कर्मापूर्व।

विलक्षणद्रव्यद्वारेणोपपद्यते। "दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" (द्र तैस २ ३ २, तैस २ ३ ६) इति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि पठ्याम्नातानि। तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्य, यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकाम' इत्यनेन [13]फलसम्बन्ध। [14]एव सति प्रकृतार्थौ लभ्येत। [15]अग्नीषोमीयपश्वनुवादेन गुणविधाने मत्वर्थलक्षणाप्रक्रिये प्रसज्येयाताम्। "[16]लिङ्प्रत्ययस्य चानुवादत्वाङ्गीकारात् मुख्यविध्यर्थो बाध्येत[17]। 'तस्माच्चित्रापदं नामधेयम्[17]'। यथा चित्राशब्दे नामधेयत्व तथा बहिष्पवमानशब्दे [18]आज्यशब्दे पृष्ठशब्दे च तत्तत्कर्मनामधेयत्व योजनीयम्॥

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्य स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वत ॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पकम्।
[19]पुरप्रवृत्त्यादिनापेते प्रतिबन्धे भवेत् फलम्" ॥ (जैन्या ४ ३ १६ १७)॥

काम्यकर्मण्येव श्रूयते–"चित्रया यजेत पशुकाम" (तैस २ ४ ६), "ऐन्द्राग्नमेकादशकपाल निर्वपेत् प्रजाकाम" (तैस २ २ १) इति। तत्र यथा स्वर्गफलस्याऽऽमुष्मिकत्व नियतम्, एव पश्वादिफलस्यापि। यदि स्वर्गहेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादक, तर्हि चित्रादिरपि तथाऽस्त्विति चेत्। मैवम्। वैषम्यात्। अस्मिन् देहे स्वर्गस्य भोक्तुमशक्यत्वाद्भुताऽप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। चित्रया त्वन्यदेहोऽवश्य मुत्पाद्यत इति नियमो न श्रुतो नापि किंचित् तस्य कल्पकमस्ति, [20]अनेनापि देहेन पश्वादिफलस्य भोक्तु शक्यत्वात्। अस्मिन् देहे प्रतिग्रहादिदृष्टोपायमन्तरेण [21]पश्वाद्यलाभाद्वैव चित्रादिफलमामुष्मिकमेवेति चेत्। न। प्रतिग्रहादे प्रतिबन्धनिवृत्तावुपयुक्तत्वात्। तस्मादसति [22]प्रतिबन्धे फलमैहिक, सति त्वामुष्मिकम् ॥

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मेण क्रम।
नास्त्यस्ति वाऽत्र नास्त्येव तन्नियामकवर्जनात्॥
याज्यानुवाक्यापाठेन स्त्रीप्राथम्य हि मुख्ययो।
मुख्यार्थत्वेन धर्माणा स्यान्मुख्यक्रमत क्रम"॥ (जैन्या ५ १ १४ १५)॥

चित्रायागे सप्ताना हविषा मध्ये चतुर्थपञ्चमे इत्थमाम्नायेते–"सारस्वतौ भवत एतद्वै दैव्य मिथुनम्" इति॥ सरस्वती च सरस्वांश्चेति विगृह्य समासे कृते "पुमान् स्त्रिया" (पा १ २ ६७) इति सूत्रेणैकशेषात् [23]सरस्वन्ताविति भवति। [24]तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ। एतच्च मिथुनमिति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्मा [25]चोदकेन प्राप्ता। तत्र स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथम निर्वाप [26]कार्य। कुत ? श्रुत्यर्थपाठप्रवृत्तिस्थानानामन्यतमस्य नियामकस्याभावादिति प्राप्ते ब्रूम – होतृकाण्डे स्त्रीदेवताया पूर्वं याज्यानुवाक्ये आम्नाते। "प्र णो देवी सरस्वती", "आ नो दिव" (तैस ३ १ ११) इति। पश्चात्पुंदेवताया "पीपिवांसं सरस्वत", "ये ते सरस्व ऊर्मय" (तैस ३ १ ११) इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते। ततो धर्माणा मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे नियते सति स्त्रीयागस्यैव प्रथम निर्वाप कार्य ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाक ॥

---

१३ अ उ ड पा गृ हा१– पशुकामस्य। १४ अ उ ड पा गृ– एव च। १५ अ उ ओ ना पा हा– अग्नीषोमीयस्य पश्व°। १६–१६ अ उ ड पा गृ हो१– 'लिङ्प्रत्ययस्य बाध्येत' नास्ति। १७–१७ आ क–तस्माच्चित्रापद कर्मनामधेयम्, अ उ ओ पा हा–तस्माच्चित्रा पशुनामधेय, ड–तथा चित्रशब्दे नामधेयत्वम्। १८ अ उ ओ ना पा हा–'आज्यशब्दे' नास्ति। १९ ड गृ– पुरप्रवृत्त्या°। २० गृ– 'अपि' नास्ति। २१ अ उ पा– पश्वादिलाभाच्चैव ओ हा–पश्वादिलाभाद्वैव। २२ ड हो१–प्रतिबन्धे। २३ क ड सारस्वतावि॑ति। २४ अ उ ड पा– ते। २५ आ– चोदक°। २६ ड– कर्तव्य।

मारुतमसि मरुतामोजोऽपां धारां भिन्द्धि

मारुतम् । असि । मरुताम् । ओजः । अपाम् । धाराम् । भिन्द्धि ।

अथ कारीरिमन्त्राः । तत्र यजमानः कृष्णं वासः कृष्णतूषं परिधत्ते– 'मारुतमसि' इति यजुषा ॥ अत्राहुः –'होतृन् [1]प्रवर्ग्यकाण्ड च याथोपनिषदो[1] विदुः ।
अरुणाम्नायविधिश्चैव काठके परिकीर्तितौ ॥
[2]रुद्रा नारायणश्चैव मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥
कारीर्यश्चापि पित्र्याश्च दिवाकीर्त्येति येषु च ।
रुद्राः संततिरित्येतावनुवाकौ च सात्त्रिकौ[2] ॥
होतृविध्यवसाने चाप्यनुवाकचतुष्टयम् ।
[3]सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैव पित्रियः ॥
काठकानि च सर्वाणि सर्वाण्यारण्यकानि च ।
दिवाकीर्त्यानि शाखायामेतावन्तीह धारणा ॥
कल्पे पितृविधिश्चैव प्रवर्ग्यविधिरेव च ।
काठकानां विधिश्चैव कारीरीविधिरेव च ।
अरुणाम्नायविधिश्चैव शतरुद्रविधिस्तथा ॥
कल्पेषु च य आम्नाता मन्त्रास्तानप्यतन्द्रितः ।
यथाव्रतमुपाकृत्य अधीयीतेति चोच्यते ' ॥ (काण्डानुक्रमणी ३.१-७) इति ॥

वास आमन्त्र्योच्यते– हे वासः, ᵛमारुतं मरुता संबन्धि त्वम् ᵛअसि, ᵛमरुताम् ᵛओजः बल त्वमसि; [4]त्वद्धीनबलत्वात् तेषाम् । अतः ᵛअपाम् ᵛधारां ᵛभिन्द्धि पातय । यद्वा– अपां धारयितारं मेघं भिन्द्धि । लिङ्गव्यत्ययः । अपा धारयित्रीं वा मेघपङ्क्ति भिन्द्धि ॥

---

पशुकामस्य चित्राख्यो यागः षष्ठे निरूपितः[1] ॥

अथ सप्तममारभ्य दशमान्तैश्चतुर्भिरनुवाकैः कारीरीष्टिः प्रतिपाद्यते । तत्र तावत् सप्तमेऽनुवाके वैदिकमन्त्राः पठ्यन्ते ॥

मारुतमसीति ॥ कल्पः–" कारीर्यां वृष्टिकामो यजेत । अग्नीनन्वाधायापरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य [2]उपविश्य यजमानो मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्ते " (आपश्रौ १९.२५.

---

१-१. तै१.तै२.ल- °काण्डे च यथोपनिषदो । २-२. मै८- 'रुद्रा नारायणश्चैव........ सात्त्रिकौ' नास्ति । ३. तै१.तै२.ल- सूक्तं च । ४. ल- अधीन° ।

१. द सो१- निरूपितः । २. द- 'उपविश्य' नास्ति ।

रमयत मरुतः श्येनमायिनं मनोजवसं वृषणं सुवृक्तिम् ॥
येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तं स्वस्ति ।

रमयत । मरुत । श्येनम् । आयिनम् । मनोजवसमिति मन -जवसम् । वृषणम् ।
सुवृक्तिमिति सु -वृक्तिम् ॥
येन । शर्ध । उग्रम् । अवसृष्टमित्यव -सृष्टम् । एति । तत् । अश्विना । परीति । धत्तम् । स्वस्ति ।

पश्चाद्वात प्रतिमीवति निवर्तयति– ‘रमयत’ इति जगत्या ॥ हे मरुत, रमयत उपरमयत निवर्तयत श्येन श्येनगतिमपि पश्चाद्वात निवर्तयत। यद्वा– उदकस्य श्यातारम् अपगमयितार तनूकर्तार वा आयिनम् आगमनवन्तम् आयन्त निवर्तयत। अथ तन्निवर्त्य अन्य मनोजवस महावेग वृषण वर्षितारमुदकस्य सुवृक्ति शोभनशक्ति पुरोवात रमयतेत्येन। सामर्थ्यात् प्रवर्तयत * इत्यर्थस्य गति । यद्वा–श्येन प्रशस्तगमनम् आयिनम् उदकानयनकुशल मनोजवस वृषण शोभनशक्ति च पुरोवात रमयत * प्रवर्तयत। सामर्थ्याद्विपरीतस्वभाव पश्चाद्वात निवर्तयतेति गम्यते। एव श्रुत्यर्थाभ्या लब्धमुभय ब्राह्मण प्रतिपादयति– “पश्चाद्वात प्रति मीवति पुरोवातमेव जनयति” (तैस २ ४ ९ ) इति। येन प्रकारेण वृते शर्ध उदक

१६-१७ ) इति। पाठस्तु–‘मारुतमसि मरुतामोजोऽपा धारा भिन्द्धि’ इति। हे कृष्णवास, त्व मरुत्सबन्धि असि, वस्त्रे प्रक्षिप्तस्य कृष्णद्रव्यमिश्रस्य जलस्य मरुद्भि शोषणीयत्वात्। अत एव मरुताम् ओज बलमसि, मेघेषु प्रतिबद्धानाम् अपा धाराम् उद्दिश्य प्रतिबन्धरूप मेघं भिन्द्धि ॥

रमयतेति ॥ कल्प – “रमयत मरुत श्येनमायिनमिति पश्चाद्वात प्रति मीवति। पुरोवातमेव जनयति” (आपश्रौ १९ २५ १८ १९ ) इति। प्रतिमीवति प्रतिबध्नाति ॥ पाठस्तु– ‘रमयत मरुत श्येनमायिनं मनोजवस वृषणं सुवृक्तिम्। येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तं स्वस्ति’ इति ॥ हे मरुत, श्येन श्येनवत् प्रवरगति पुरोवात रमयत क्रीडयत। कीदृशम्? आयिनम् आगच्छन्त, मनोजवस मनस इव जवो वेगो यस्य तादृश, वृषणम् उदकस्य वर्षयितार सुवृक्ति सुष्ठु पश्चाद्वातस्य वर्जयितारम्। येन पुरोवातेन अवसृष्ट मेघेभ्यो मोचित जलम् उग्र तीव्रधारारूप भूत्वा शर्ध शीर्णम् अतिशोषेण हिंसितम् एति प्राप्नोति। तादृश पुरोवात रमयतेति पूर्वेणान्वय । हे अश्विनौ देवभिषजौ, तत् जल स्वस्ति क्षेमकर यथा भवति तथा परितो धारयतम् ॥

५. ल– निवर्तते। ६. त१ त२,प२ ल– निकर्तारम्। ७. त१ त२ मै ल– आवन्तम्। ८ मै४– ‘प्रशस्तगमनम्’ इत्यस्यानन्तर ‘तनूकर्तार वा’। [ *–* ल– ‘इत्यर्थस्य गति रमयत’ इत्यय भागो नास्ति। ]।

३ ड हो१ – कृष्णद्रव्यस्य। ४ अ आ क ना जो पा हा – पाश्चात्यवातस्य। ५ ड ग्र– अतिशोषणेन। ६ ड क जो ड ना ग्र हो१–क्षेममिति।

पुरोवातो वर्षञ्जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत् स्वाहाऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेपरावृत् स्वाहाऽतिरात्रं वर्षन् पूर्तिरावृत् (१) स्वाहा

पुरोवात इति पुर –वात । वर्षन् । जिन्व । आवृदित्या - वृत् । स्वाहा । वातावदिति वात - वत् । वर्षन् । उग्र । आवृदित्या वृत् । स्वाहा । स्तनयन् । वर्षन् । भीम । आवृदित्या - वृत् । स्वाहा । अनशनि । अवस्फूर्जन्नित्यव - स्फूर्जन् । दिद्युत् । वर्षन् । त्वेप । आवृदित्या - वृत् । स्वाहा । अतिरात्रमित्यति - रात्रम् । वर्षन् । पूर्ति । आवृदित्या - वृत् (१)। स्वाहा ।

बलहेतुर्वा मरुता बलकृत वा । vउग्रम् उद्गूर्णम् vअवसृष्ट मुक्तम् vएति आगच्छति तथा रमयतेति । हे vअश्विनौ, युवामपि vतत् उदक vपरि vधत्त परितो धारयत vस्वस्ति अविनाशार्थं लोकस्य उदकस्येव वा अक्षयाय ॥

वातनामानि जुहोति– ' पुरोवात. ' इत्यष्टौ ॥ vपुरोवातः [7]-पूर्वस्या दिश -[7] आगत vपुरोवातः vवर्षन् vजिन्वः प्रीणयिता लोकस्य, पुरोवातस्य प्रीणनत्वात् । जिवि प्रीणने, इदित्वान्नुम् ( पा ७·१·५८ ), पचाद्यच् ( पा ३·१·१३४ )। छान्दस [8]साहिति-कोऽस्य रेफः, उक्त च प्रातिशाख्ये– " आवृत्परः " (तैप्रा ८·१०) इति । vआवृत् आवर्तमान· अस्त्विति शेषः । आवर्ततामिति यावत् । स्वाहुत चेदमस्तु तस्मा इति । vवातावत् वातेन युक्त vवर्षन् । छान्दस दीर्घत्वम् । vउग्र उद्गूर्णः । आवृत्परण्य [ त्वाद्रेफः ] वातयुक्तस्योद्गूर्णत्वात् । समानमन्यत् । vस्तनयन् शुष्क गर्जन् vवर्षन् vभीमः भीतिहेतु· प्रजाना, तस्य [11]तत्स्वभावत्वात् । vअनशनि अविद्यमानाशनिपातम् vअवस्फूर्जन् अवसेचनेन शब्दयन् vदिद्युत्

पुरोवात इति ॥ कल्प.– " पुरोवातो वर्षन्नित्यष्टौ वातनामानि हुत्वा " (आपश्रौ १९·२६·१) इति । पाठस्तु– ' पुरोवातो वर्षञ्जिन्वरावृत् स्वाहा वातावद्वर्षन्नुग्ररावृत् स्वाहा स्तनयन् वर्षन् भीमरावृत् स्वाहाऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेपरावृत् स्वाहाऽतिरात्रं वर्षन् पूर्तिरावृत् स्वाहा बहु हायमवृषादिति श्रुतरावृत् स्वाहाऽऽतपति वर्षन् विराडावृत् स्वाहाऽवस्फूर्जन् दिद्युद्वर्षन् भूतरावृत् स्वाहा ' इति ॥ य vपुरोवात. स v vवर्षन् वृष्टि प्रवर्तयन् vजिन्व. प्रजा प्रीणयन् vआवृत् आवर्ततां तस्मै [8-8]स्वाहा हुतमस्तु[8] । vवातावत् प्रधानेन युक्तः vउग्र. तीव्रधारायुक्त । vस्तनयन् गर्जन vभीम. गर्जनाधिक्येन भयंकर इव । vअनशनि [10]प्रागवानर. शतानिर्यथा न पतन्ति तथा vअवस्फूर्जन् vअवसेचनेन शब्दयन्, vदिद्युत् विद्युल्लक्षणेन प्रकाशनेन युक्त vत्वेप वर्षधारया सस्यक्षेत्रादेर्दीपक· । vअतिरात्रम् रात्रिमतीत्य दिवारात्रमित्यर्थ, vपूर्ति महाफलं पूरयिता । vअयं वात: vबहु यथा भवति तथा vअवृषात् vह [11]अवर्षयत् vइति इति vश्रुत

७.–७. पं. मै८– पूर्वस्या दिश । १०. मै४ – साहितिकस्य । ११. मै४– तत्स्वभावत्वा ।

७. आ.क ट– ' सः ' नास्ति । ८–८. आ.इ.उ.क जो.ट.पा ग्रं – स्वाहुतमस्तु । ९. अ उ.जो.प– गर्जनाधिक्य । १०. हो१– प्रतिशाक', ट– प्रतिपातुका', ग्रं– प्रागिशाक । ११. ट– अवर्षत् ।

बृहु ह्यायमंवृपादिति श्रुतरावृत् स्वाहाऽऽतपंति वर्षंन् विराडावृत् स्वाहाऽवस्फूर्जंन्
दिद्युद्वर्षंन् भूतरावृत् स्वाहा मान्दा वाशाः शुन्ध्यूरजिराः ।

बृहु । हु । अयम् । अपात् । इति । श्रुत । आवृदित्या वृत् । स्वाहा । आतपतीत्या - तपति । वर्षंन् । विराडिति वि - राट् । आवृदित्या - वृत् । स्वाहा । अवस्फूर्जन्नित्यव स्फूर्जन् । दिद्युत् । वर्षन् । भूत । आवृदित्या वृत् । स्वाहा । मान्दा । वाशा । शुन्ध्यू । अजिरा ।

दीप्तिमत् विद्युत्सम्बन्धेन प्रकाशयन् [11] आयुधयानिव वर्तमानो [12] वा । अत एव Vत्वेष दीप्यमान । Vअतिरात्र रात्रिमप्यतीत्य सर्वमप्यहोरात्र, न रात्रिमात्रम् । "अह सर्वैक°" (पा ५ ४ ८७) इत्यच् समासान्त । Vपूर्ति पर्याप्तिमान् [13]पूरयन् वा गहीतत्व सर्वम् । [14]क्तिच्क्तौ च' (पा ३ ३ १७४) इति क्तिच् [14] ॥ Vबहु प्रभूतम् । Vह इत्यवधारणे । बहुव Vअयम् Vअपात् अपत् देव Vइति एव Vश्रुत [15]सर्वत्र्यातिं गच्छन् । Vआतपति[16] सति, ईषत् तपति वा सूर्ये Vवर्षन् Vविराट् प्रशस्ततया विराजमान । Vअवस्फूर्जन् Vदिद्युत् Vवर्षन् Vभूत प्रभूत सर्वलोक धारणक्षम [17] पुन पुनरित्थ वर्षेदिति प्रतिपादनार्थम अवस्फूर्जन्नित्याद पुनराम्नानम् ।

अन्तर्वेदि कृष्णाजिने कृष्णेन मधुना करीरसक्तून् सयौति– 'मान्दा वाशा' इति तिसृभि ॥ प्रथमा एकपदा गायत्री । परे द्वे द्विपदे गायत्र्यौ । मान्दादीन्येता यथा नामानि एकादश । सर्वाण्यप्यामन्त्रिताद्युदात्तानि (पा ६ १ १९८), पूर्वपूर्वाविद्यमानतया (पा ८ १ ७२) उत्तरोत्तरनिघाताभाव । [18]मन्दयन्ति मोदयन्ति प्रजा इति Vमान्दा । [19]ण्यन्तात् पचाद्यच् (पा ३ १ १३४) । व्यत्ययेनानुपधाभूतस्याप्याकारस्य णिचि वृद्धि ।

नमेषु रयाल । Vआतपति आतपे स्थिते सति Vविराट विशेषेण राजमान । Vअवस्फूर्जन् Vदिद्युत् इति शब्दौ व्याख्यातौ । आदरार्थं पुनर्वचनम् । [12]भूत इत्थभूत यथोक्तगुणैर्युक्त सन् सर्वलोकधारणक्षम इत्यर्थ ॥

मान्दा इति ॥ कल्प – "अन्तर्वेदि कृष्णाजिन प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्मिन् खर्जूर सक्तून् करीरसक्तून् वा मान्दा वाशा इति कृष्णमधुना [13]सयुत्य त्रिस्र पिण्डी कृत्वा पुष्करपलाशै सवेष्ट्य" (आपश्रौ १९ २६ १) इति ॥ पाठस्तु 'मान्दा वाशा शुन्ध्यूरजिरा । ज्योतिष्मतीस्तमस्वरीरुन्दती सुफेना । मित्रभृत क्षत्रभृत सुराष्ट्रा इह माऽवत' इति । मान्दादीन्येकादशापा नामानि सबुध्यन्तानि ।

११-१२, मै४–युद्धाधिवर्तमान एव । १३ व१ तर गै ल–पूरयन् । १४-१४ त१ तर मै ल–क्तिच् । १५ ल–सर्वत्र्यातिम् । १६ मै– 'आतपति' इत्यस्यानन्तरम् 'आतपे' । १७ ल– °धारणे क्षम । १८ मै४– मदयन्ति । १९-१९ त१ तर मै– 'ण्यन्तात्' नास्ति ।

१२ आ 'भूत' नास्ति । १३ आ सयुत्य ।

ज्योर्तिष्मतीस्तमस्वरीरुन्दर्ताः सुफेनाः ।
मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह माऽवत ॥

ज्योतिष्मती । तमस्वरी । उन्दती । सुफेना इति सु-फेना ॥
मित्रभृत इति मित्र भृत । क्षत्रभृत इति क्षत्र भृत । सुराष्ट्रा इति सु राष्ट्रा ।
इह । मा । अवत ।

वाशयन्ति शब्दयन्ति प्रजा इति [v]वाशा । वाशृ शब्दे । वष्टेर्वा घञ् । काम्या । [v]शुन्ध्यू शोधयित्र्य । औणादिक क्विप्रत्यय, "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । [v]अजिरा अजनशीला जनन्यादि(?)रूपेण परिणामात् ॥

ज्योतिष्मत्य [v]शुक्लच्छाया [२०]दृर्शनयाथात्म्या । [v]तमस्वरी दौर्दिन्यकारिण्य [२१] । उन्दत्य क्लेदयन्त्य [२२] भुव । [v]सुफेना अलङ्कारभूतफेना उपर्युपरि वर्धमाना । [v]मित्रभृत दु खात् त्रायकाणाम् [२३]ओषध्यादीना भर्त्र्य । [v]क्षत्रभृत बलस्य पोषयित्र्य । [v]सुराष्ट्रा शोभनराष्ट्र कर्तुं समर्था । ईदृश्यो यूयम् [v]इह अस्मिन् कर्मणि माम् [v]अवत अविघ्नेन प्रवर्तयत । यद्वा—कर्मफलप्रदानेन मा तर्पयत ।

तादृश्यो हे आप, यूयम् [v]इह अस्मिन् कर्मणि माम् [v]अवत फलप्रदानेन रक्षत । [v]मान्दा हर्षहेतव । [v]वाशा शब्देन वर्षणजन्येन युक्ता । [v]शुन्ध्यू शुद्धिहेतव । [v]अजिरा प्रवाहरूपेण गमनशीला । [v]ज्योतिष्मती शुक्लरूपयुक्ता । [v]तमस्वरी सूर्यप्रकाशाच्छादनेन तमो यथा भवति तथा स्वरन्त्यो गच्छन्त्य । [v]उन्दती भूमिं क्लेदयन्त्य । [v]सुफेना जलप्रवाहबाहुल्येन बहुफेनयुक्ता । जगन्मित्रभूता ओषधीर्बिभ्रति पोषयन्तीति [v]मित्रभृत । क्षत्र [२४]देशाधिपतिं राजानं सुवृष्टिजन्यसंतोषेण बिभ्रति पोषयन्तीति [v]क्षत्रभृत । सुष्ठु शोभन [२५]सस्यै सपूर्णं राष्ट्रं यासां ता [v]सुराष्ट्रा ।

२०. त१ त२ मै ७– सच्छाया । २१-२१ मै ४ – तमस्वत्य मूर्तशानयाथार्थ्या औदन्यकारिण्यो वा । २२ त१ त२ मै ७– क्लेदयित्र्य । २३ मै४– ओषधीनाम् ।

२४ हो१– देवाधिपतिम् । २५ आ सस्येन, अ इ उ पा– अन्ये ।

वृष्णो॒ अश्व॑स्य सं॒दान॑मसि वृ॒ष्ट्यै त्वोप॑ नह्यामि ॥ ७ ॥
[ पुतिसृ॒द् द्विच॑त्वारिंशच्च । ]

वृष्णः॑ । अश्व॑स्य । सं॒दान॒मिति॑ सं - दान॑म् । अ॒सि॒ । वृ॒ष्ट्यै॑ । त्वा॒ । उपेति॑ । न॒ह्या॒मि॒ ॥ ७ ॥
[ मैस २४७, काठं ११९ ]

अथ कारीरसक्तून् त्रिधा पिण्डी कृत्वा "समुद्गृह्य कृष्णाजिनस्यान्तान्" कृष्णेन सदाने नोपनह्यति–'वृष्ण.' इति ॥ 'वृष्ण वर्षितु 'अश्वस्य व्यापकस्य 'सदान बन्धनम् 'असि। अत 'वृष्ट्यै वृष्ट्यर्थं त्वाम् 'उप 'नह्यामि बध्नामि, त्वयोपनह्यामि वा ॥

इति द्वितीये चतुर्थे सप्तमोऽनुवाक ॥

वृष्ण इति ॥ कल्प – "समुह्यम्य "कृष्णाजिनस्यान्तान् वृष्णो अश्वस्य सदानमसीति कृष्णन दाम्नोपनह्यति" ( आपश्रौ १९ २६ १ ) इति ॥ पाठस्तु–'वृष्णो अश्वस्य सदानमसि वृष्ट्यै त्वोप नह्यामि' इति ॥ हे रज्जो, त्व 'वृष्ण 'अश्वस्य सेचनसमर्थस्य "पुमश्वस्यैवास्य कृष्णाजिनस्य 'सदान दृढबन्धन साधनम् 'असि। अतो वृष्टिसिद्ध्यर्थमनेन सदानेन हे कृष्णाजिन, त्वाम् 'उप 'नह्यामि बध्नामि ॥

अत्र विनियोगसंग्रह —

"कारीर्यां मारुत कृष्ण स्वामी धारयते पटम् ।
रमेति पश्चिम वात "पुरोवात करोति हि" ॥ १ ॥
पुरोऽश्वावाहुतीर्हुत्वा मान्दा सयौति सक्तुकम् ।
वृष्ण सनह्यते सक्तु मन्त्रा द्वादश वर्णिता ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाक ॥ ७ ॥

२४. प१ मै४ – समुद्धित्य। २५ त१ त२– °जिनस्यान्तात्।

१६. आ– °नह्यान्तौ। १७ आ– अश्वस्यैवास्य। १८–१८ अ– पुरोवत्ति करोति, उ जो ना पा हा– पुरोवत्ति करोति हि ड पुरोवाति करोति।

देवा वसव्या अग्ने सोम सूर्य ॥

देवाः । वसव्याः । अग्ने । सोम । सूर्य ॥

अथोत्करे प्रागीप त्रिगधमनोऽवस्थित भवति पादत्रयप्रतिष्ठित[1] त्रिच्छदिष्कम् । तत्र तिसृषु गधासु त्रिभिर्मन्त्रैः प्रतिदिशम् आबध्नाति पिण्डी । तत्र पूर्वस्या गधाया छदिष्कमपि कृष्णाजिनमावर्ध्नीयात् 'देवा वसव्या ' इति। तच्च [2]अहोरात्रावसक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात्, यदि न वर्षेत् '[3]देवा शर्मण्या ' इति मध्यमायामाबध्नीयात्, तत्र चाहोरात्रावसक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात् यदि न वर्षेत् 'देवा सपीतय ' इति जघन्यायामाबध्नीयात्, अहोरात्रावसक्त भवति । यदि वर्षेत् पिण्डीरेव जुहुयात्, यदि न वर्षेत्[3] श्वोभूते धामच्छदादीनि त्रीणि हवींषि निर्वपति। एते च त्रय पङ्क्तिप्रकारा । 'उन्नो दत्त' इत्यादिकं च [4]त्रिष्वप्यनुषज्यते ॥

तत्र प्रथम – हे [v]देवा [v]वसव्या । स्वार्थिको यत् । जगता वासहेतवो वसव, वसु समूहो वा वसव्य, तद्वन्त । मत्वर्थीयो लुप्यते। "वसो. समूहे च" (पा ४ ४ १४०) इति यत्। वृष्टिहेतुत्वेन वसुसमूहवन्त वासयितारश्च प्रजानाम्। वसुभ्यो वा हिता वसव्या, वसूनि धनानि। तेषु च कांश्चिद्दर्शयति–[v]अग्ने [v]सोम [v]सूर्य एवमादयो हे वसव्या देवा यूय [v]उद उदक [v]दत्त। पद्वादिना (पा ६ १०६३) उदकस्य उदन्भाव । पूर्ववत् कर्मणि षष्ठी, उदात्त निवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। [v]तदर्थम् [v]उदधिं मेघ [v]भिन्त विदारयत यथोदक पतेत्। उदक धीयतेऽस्मिन्निति उदधि । "कर्मण्यधिकरणे च" (पा ३ ३ ९३) इति कि, "पेषवास वाहनधिषु च" (पा ६ ३ ५८) इत्युदभाव, पूर्ववत कर्मणि षष्ठी, उदात्तनिवृत्तिस्वरेण विभक्ति उदात्तत्वम्[5]। [v]दिव द्युलोकात् [v]अन्तरिक्षात् [v]पृथिव्या । ल्यब्लोपे पञ्चमी। द्युलोकमन्तरिक्ष

[1]प्राप्याद्गमन्त्रा कारीर्यां सप्तमे समुदीरिता ।

देवा इति ॥ अथावशिष्टमन्त्रा अष्टमे वर्ण्यन्ते। कल्प – "उत्करे प्रागीप त्रिगधमनोऽवस्थित भवति। [2]छदिष्कम्यर्थं । देवा वसव्या इति पूर्वस्या गधाया कृष्णाजिनमावध्नीयात्। अहोरात्रावासक्त भवति। यदि वर्षेत् पिण्डीरेव जुहुयात्। यदि न वर्षेत् देवा शर्मण्या इति मध्यमायामावध्नीयात् अहोरात्रावसक्त भवति। यदि वर्षेत् पिण्डीरेव जुहुयात्। यदि न वर्षेत् देवा सपीतय इति जघन्यायामा बध्नीयात्। अहोरात्रावसक्त भवति। यदि वर्षेत् पिण्डीरेव जुहुयात्। यदि न वर्षेच्छ्वोभूते धामच्छदादीनि त्रीणि हवींषि निर्वपति (आपश्रौ १९ २६ २-११) इति॥ पाठस्तु–"देवा वसव्या अग्ने सोम सूर्य। देवा शर्मण्या मित्रावरुणार्यमन्। देवा सपीतयोऽपा नपादाशुहेमन्। उन्नो दत्तोदधि भिन्त दिव पर्जन्यादन्तरिक्षात्

१. तै१ तै२ मै ऽ– °प्रतिष्ठि°। २. तै१ तै२– अहोरात्रावसक्तम्। ३–३ तै१ तै२– 'देवा शर्मण्या न वर्षेत्' इत्यन्तस्य भागो नास्ति। ४ मै – त्रिष्वनु°, तै१ तै२ ऽ – त्रिष्वप्यनुषज्यते। ५–५. ऽ– 'कर्मण्यधिकरणे ... उदात्तत्वम्' इत्यस्य भागो नास्ति।

१ इ अ ना ग– प्राप्योममन्त्रा । २ ओ दा– छदिष्कम्यर्थं ।

देवाः शर्मण्या मित्रावरुणाऽर्यमन् ॥ देवाः सपीतयोऽपां नपादाशुहेमन् ।
उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽवत ॥

देवाः । शर्मण्याः । मित्रावरुणेति मित्रा वरुणा । अर्यमन् ॥
देवाः । सपीतय इति स - पीतयः । अपाम् । नपात् । आशुहेमन्नित्याशु हेमन् ॥
उद्नः । दत्त । उदधिमित्युद धिम् । भिन्त । दिवः । पर्जन्यात् । अन्तरिक्षात् । पृथिव्याः । ततः । नः । वृष्ट्या । अवत ॥

पृथिवीं च व्याप्य या वृष्टिः पर्जन्यात् प्रवर्तते तया वृष्ट्या नः अस्मान् अवत रक्षत तर्पयत वा । अत्र "विभाषितं विशेषवचने बहुवचनम्" (पा ८ १ ७४) इति 'देवा' इत्यस्याविद्यमानवत्त्वनिषेधात् 'वसव्या' इति निहन्यते, "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८ १ ७२) इति द्वयोरामन्त्रितयो अविद्यमानवत्त्वात् 'अग्ने' इति न निहन्यते। अथ यदा "अथ मे प्राणा" इति तद्वचनभेदेऽपि सामान्यविशेषभावमात्रेण सामानाधिकरण्यं भवति तदा उत्तरदेवविशेषणत्वात् अग्न्यादीनां यद्यपि "नामन्त्रिते समानाधिकरणे" (पा ८ १ ७३) इत्यविद्यमानवत्त्वप्रतिषेधात् 'अग्ने' इत्यस्यापि निघातं प्राप्नोति, तथापि "विभाषितं विशेषवचने बहुवचनम्" (पा ८ १ ७४) इति पक्षे अविद्यमानवत्त्वान्निघाताभावः । पक्षे विद्यमानवत्त्वात् उत्तरयोः निघातः प्रवर्तते। ननु 'अग्ने' इत्यनेन विशेषवचने व्यवधानं न स्यात्। नैष दोषः, "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८ १ ७२) इति तस्याविद्यमानवत्त्वात्, तेन स्यात् व्यवधानम् ॥

अथ द्वितीयः – देवाः शर्मण्याः शरण्याः शरणभावे साधवः शर्मणे सुखाय वा गृहाय वा हिताः । हे मित्रावरुणौ हे अर्यमन् । पूर्ववत् स्वरः । 'उद्नो दत्त' इत्यादि समानम् ॥

अथ तृतीयः – हे देवाः सपीतयः समानपानाः परस्परतः अस्माभिश्च सह हे अपां नपात् अपां चतुर्थ। "सुबामन्त्रिते" (पा २ १ २) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रित

पृथिव्यास्ततो नो वृष्ट्याऽवत' इति ॥ अत्र 'उद्नो दत्त' इत्येष त्रयाणां मन्त्राणां शेषत्वेनानुषज्यते। हे देवाः, उद्नः दत्त उदकानि प्रयच्छत । कीदृशा देवाः ? वसव्याः प्रजानां वासयितारः । क एते देवा इति तदुच्यते– अग्ने सोम सूर्य इति। एवमादिका हे देवा इति पूर्वेणान्वयः । उदकदाने क उपाय इति तदुच्यते उदधिं भिन्त, उदकं धीयतेऽस्मिन्नित्युदधिर्मेघस्तं विदारयत। केभ्यो निमित्तेभ्य ? दिवः

६–६ मै ल–अपने प्राण । ७–७ त१ त२ मै ल–इतिवत् वचनविशेषेऽपि। ८ त१ त२ मै ल– 'बहुवचन' नास्ति। ९ त१ त२ मै ल– गृहीता । १०–१० मै४ ल– मित्रावरुणा अर्यमन्।

३ क–इत्येषा ड–इत्येतेषां। ४ अ उ पा शेषिकत्वेना°, ड हो–°त्वेनानुषुज्यते। ५ आ–उच्यते।

दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन ।
पृथिवीं यद्व्युन्दन्ति ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदवाहेनेत्युद-वाहेन ॥
पृथिवीम् । यत् । व्युन्दन्तीति वि-उन्दन्ति ॥

समुदायस्यामन्त्रितासुदात्तत्वम् । हे [v]आशुहेमन् शीघ्रगते । हि गतौ, "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) इति [11]मनिन्प्रत्ययः। प्रदर्शनार्थं द्वयोरुपादानम्। 'उग्रो दत्त' इत्यादि । गतम् ॥

पिण्डीर्जुहोति–'दिवा चित्' इत्यादिभिस्तिसृभिः ॥ प्रथमा गायत्री। द्वितीयाऽस्तारपङ्क्ति, अयुजो [12]द्वादशाक्षरत्वात्। तृतीया बृहती ॥

तत्र प्रथमा– [v]दिवा [v]चित् दिवाऽपि [v]तमः दुर्दिनान्धकारं [v]कृण्वन्ति कुर्वन्ति, किं पुनर्नक्तम्? [v]पर्जन्येन [v]उदवाहेन उदकस्य वाहकेन अनवरतवर्षिणा सह दिवाऽप्यन्धकारितमिव रोदोन्तरं दर्शयति [13]घनपटलाच्छादितदिगन्ता नक्तंदिनं वर्षयन्तीति यावत्। कदेति ? आह– [v]यत्। "सुपां सुलुक्" (पा ७·१·३९) इति सप्तम्या लुक्। यदा [v]पृथिवीं [v]व्युन्दन्ति विशेषेण क्लेदयन्ति। उन्दी क्लेदने। एते च पूर्वोक्ता अग्न्यादयो वक्ष्यमाणा मरुतो वा द्रष्टव्याः। अस्माकमप्येतत् [14-]वृष्टिं प्रवर्तयन्त्विति[-14] ॥

[v]अन्तरिक्षात् [v]पृथिव्याः, लोकत्रयं निमित्तीकृत्येत्यर्थः। [v]ततः मेघविदारणादूर्ध्वं [v]पर्जन्यात् आगतया [v]वृष्ट्या [v]नः [v]अस्मान् [v]अवत रक्षत। द्वितीयमन्त्रे तु [v]मित्रावरुणा [v]अर्यमन् इत्येवमादयो हे [v]देवाः [v]शर्मण्याः सुखप्रदा इति व्याख्येयम्। तृतीयमन्त्रे तु [v]अपां [v]नपात् उदकानामविनाशयितः [v]आशुहेमन शीघ्रगते इत्येवमादयो हे [v]देवाः [v]सपीतयः समाना पीतिः सोमपानं येषां ते तादृशा इति व्याख्येयम् ॥

दिवेति ॥ कल्पः–" उपहोमकाले दिवा चित् तमः 'कृण्वन्तीत्येतैः' प्रतिमन्त्रं पिण्डीरावध्नाति। जुहोतीत्येके" (आपश्रौ १९·२६·१७-१८) इति ॥ तत्र प्रथममन्त्रपाठस्तु– 'दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन। पृथिवीं यद्व्युन्दन्ति' [v]इति ॥ यदा देवाः [v]पृथिवीं विशेषेण क्लेदयन्ति तदानीमुदकं वहता [v]पर्जन्येन [v]दिवा [v]चित् [v]तमः [v]कृण्वन्ति किमुत रात्रौ ॥

११. तै१ तै२ मै ठे– 'प्रत्ययः' नास्ति। १२. तै१,तै२–द्वादशाक्षरात्। १३. तै१,तै२ मै ठे– °घनपटलाच्छादित°। १४–१४ तै१,तै२,मै,ठे– वृष्टीः निवर्तयन्त्विति।

६. अ,आ,उ,पा– कृण्वन्तीति, क,बो,ना,हा–कृण्वन्तीति तेः। ७. इ,क,जो,ना,हा – 'इति' शब्दानन्तरं– 'दिवा चिद्दिनेऽपि तमो दुर्दिनान्धकारं कृण्वन्ति कुर्वन्ति पर्जन्येन मेघेनोदकवर्षिणा सकल पृथिवीं यदा व्युन्दन्ति क्लेदयन्ति मेघा वा वृष्ट्योदकप्रवाहरूपं दुर्दिनं कुर्वन्तु सुखोदकार्थं'। ८. आ-अपि।

आ यं नरः॑ सु॒दान॑वो ददा॒शुषे॑ दि॒वः कोश॒मचु॑च्यवुः ।
वि प॒र्जन्याः॑ सृजन्ति॒ रोद॑सी॒ अनु॒ धन्व॑ना यन्ति ( १ ) वृ॒ष्टयः॑ ।
उदी॑रयथा मरुतः समुद्रतो यू॒यं वृ॒ष्टिं व॑र्षयथा पुरीषिणः ।
न वो॑ द॒स्रा उप॑ दस्यन्ति धे॒नवः॒ शुभं॑ या॒तामनु॒ रथा॑ अवृत्सत ॥

एति॑ । यम् । नरः॑ । सु॒दान॑व॒ इति॑ सु - दान॑वः । द॒दा॒शुषे॑ । दि॒वः । कोश॑म् । अचु॑च्यवुः ॥
वीति॑ । प॒र्जन्याः॑ । सृ॒जन्ति॒ । रोद॑सी॒ इति॑ । अन्विति॑ । धन्व॑ना । य॒न्ति॒ ( १ ) । वृ॒ष्टयः॑ ॥
उदिति॑ । ई॒र॒य॒थ॒ । म॒रु॒तः॒ । स॒मु॒द्र॒तः । यू॒यम् । वृ॒ष्टिम् । व॒र्ष॒य॒थ॒ । पु॒री॒षि॒णः॒ ।
न । वः॒ । द॒स्राः । उपेति॑ । द॒स्य॒न्ति॒ । धे॒नवः॑ । शुभ॑म् । या॒ताम् । अन्विति॑ । रथाः॑ । अ॒वृ॒त्स॒त॒ ॥

अथ द्वितीया– ' आ यं नरः ' इति ॥ नरः ऋत्विजः सुदानवः शोभनहविषां दातारः । [१५]ददाशुषे यजमानाय हविषां दात्रे । तादर्थ्ये चतुर्थी । [१६]यजमानार्थं यं कोशम् उदकस्याधारं मेघं दिवः द्युलोकात् अचुच्यवुः आच्यावयन्ति स्थानात् । यद्वा– दिवः आदित्यात् गृहीत रश्मिषु नरो नेतारः मरुतः च्यावयन्ति । ततः कोशात् पर्जन्याः[१७] उदकं वि सृजन्ति मुञ्चन्ति रोदसी अनु द्यावापृथिव्यौ लक्षयित्वा । विसर्जनानन्तरं धन्वना अनुदकेन देशेन । विभक्तिव्यत्ययो वा । निरुदके देशे । वृष्टयः वृष्टानि जलानि यन्ति नद्यो भूत्वा प्रवहन्ति । च्यवतेर्लेटि शपः श्लुः (पा २·४·७६), "[१८]सिजभ्यस्तविदिभ्यश्च" (पा. ३·४·१०९) इति जुस्, "जुसि च" (पा ७·३·८३) इति गुण.[१९], "मन्त्रे वृष°" (पा ३·३·९६) इति वृषेः क्तिन उदात्तत्वम् ॥

अथ तृतीया– हे मरुतः, यूयम् उत् ईरयथ प्रेरयथ वृष्टिं समुद्रत. समुन्दनात् मेघात् । ततः वर्षयथ पर्जन्यात् । हे पुरीषिणः उदकवन्तः, उदकेन हि सर्वं पूर्यते । न हि

एति ॥ द्वितीयमन्त्रपाठस्तु–' आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः । वि पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः ' इति ॥ नरः मनुष्या ऋत्विजः सुदानवः सुष्टु हविषां दातारः ददाशुषे हविर्दत्तवते [९]यजमानाय यजमानार्थं यं कोशम् उदकधारकं मेघं दिवः सकाशात् आ अचुच्यवुः समन्तात् [११]च्यावितवन्तः प्रसारितवन्त इत्यर्थः । स मेघः पूर्वमेकोऽपि पर्जन्याः बहवो मेघा भूत्वा रोदसी अनु द्यावापृथिव्यावनुलक्ष्य विविधां वृष्टिं सृजन्ति । बहुपर्जन्यभावाभिप्रायेण बहुवचनम् । ताश्च वृष्टयः धन्वना मरुभूमावुदकरहितायां यन्ति प्रवर्तन्ते ॥

उदीरयथेति ॥ तृतीयमन्त्रपाठस्तु–' उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः । न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत ' इति ॥ हे मरुतः, यूयं समुद्रसदृशात्

१५. मै.मै४– दाशुषे । १६. तं१.तं२.लं– ' यजमानार्थं ' नास्ति । १७. मै४–पर्जन्यान् । १८–१९. [ संभाविनोऽयं पाठः ], तं१.तं२.मै.लं– ' समविप्रविभ्यश्च ' इति जुस्, ' जुसि च ' इति गुणः; मै४– सिजभ्यस्तविदिभ्यश्चेति गुणः ।

९. अ.आ.उ.ऊ.पा.ए.हो–हविषः । १०. इ.क.जो.ना.हा–' यजमानाय ' नास्ति । ११. इ.क.जो. ना.हा–सावित° ।

सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण ॥
अब्जा असि प्रथमजा बलमसि समुद्रियम् ॥

सृज । वृष्टिम् । दिवः । एति । अद्भिरित्यत्-भिः । समुद्रम् । पृण ॥
अब्जा इत्यप् -जा । असि । प्रथमजा इति प्रथम - जाः । बलम् । असि । समुद्रियम् ॥

वः युष्मदीयाः धेनवः प्रीणनहेतवः अपः उपदस्यन्ति उपक्षीयन्ते, हे दस्राः दंसनशीला दानशीला वा । अतो वर्षयतेति । किं च रथाः रंहणशीलाः [19]यूयं यातां कालानुकूलप्रवृत्तां शुभं शोभाम् । [20]शुभेः संपदादिलक्षण. क्विप् (पा ३·३·१०८ वा ९) । ताम् अनु अवृत्सत अनुवर्तध्वम् । यद्वा–यातां गतिं शुभमनुवर्तध्वं सुष्ठु [21]अविछेदेन कुरुध्वम् । [22]पूर्वप्रवृत्तं मार्गं मा मुञ्चत, यस्मात् इदानीमपि रंहणाः स्थ, तस्माच्छक्तत्वात् स्वभावो न त्याज्यः इति । वृतेः छान्दसे लुङि व्यत्ययेन क्सः (पा ३·१·४५), “ द्युद्भ्यो लुङि ” (पा १·३·९१) इति व्यत्ययेन परस्मैपदं, “ न वृद्भ्यश्चतुर्भ्यः ” (पा ७·२·५९) इतीडभावः ॥

अथ कृष्णामां कुम्भीमद्भिः पूरयति– ‘ सृजा वृष्टिम् ’ इति द्विपदया गायत्र्या ॥ ‘ आ ’ इति प्रथमपादान्तः । सृज वृष्टिं दिवः द्युलोकात् द्योतनवतो मेघाद्वा आदित्याद्वा[23] । ततः अद्भिः समुद्रं तमेव समुन्दनं मेघम् आ पृण पूरय पुनःपुनर्वृष्ट्यर्थम् ॥

अथ कृष्णां व्रीहिभिर्जुहोति–‘ अब्जा असि ’ इति द्विपदया गायत्र्या ॥ अब्जा असि इति अद्भ्यो [24]जायत इति[24] । “ जनसन° ” (पा ३·२·६७) इति विट्, “ विड्वनोरनुनासिकस्यात् ”

मेघात् वृष्टिम् उदीरयथ उत्पादयत । ततः पुरीषिणः पांसुयुक्तान् भूप्रदेशान् वर्षयथ आप्लावयथ । हे दस्रा मूर्मिशोपम् [12]उपक्षपयितारः मरुतः, वः युष्माकं धेनवः धेनुसदृशा मेघाः न उप दस्यन्ति नैवोपक्षीयन्ते । किं कुर्वतां युष्माकम्? शुभं यातां [13]जगदनुग्रहरूपं मङ्गलकार्यं प्राप्नुवताम् । किं च इतरेषां देवानां रथाः अन्ववृत्सत भवदीयान् रथाननुवर्तन्तां, वृष्टिं दातुमस्मदीये कर्मणि रथानारुह्य युष्मासु समागच्छत्सु पृष्ठतः सर्वेऽप्यन्ये देवा रथानारुह्य समागच्छन्त्वित्यर्थः ॥

सृजेति ॥ कल्पः– “ उत्करे कृष्णाम् आमपक्वां[14] स्थालीमद्भिः पूरयति सृजा वृष्टिमिति । यदि भिद्येत वर्षिष्यतीति विद्यात् ” (आपश्रौ १९·२७·२-३) इति ॥ पाठस्तु– ‘ सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण ’ इति । हे मरुत्संघ, दिवः सकाशात् वृष्टिं सृज । [15]आभिः अद्भिः समुद्रसदृशं यद्विशाहमन्तरेणाऽऽत्तपेन [16]एकमिमं कुम्भम् आ पृण समन्तात् पूरय ॥

अब्जेति ॥ कल्पः– “ [17]अनग्नः उपस्तम्भने शङ्कौ या कृष्णाऽविर्यद्वा भवति । अब्जा असीति तां प्रोक्षति ” (आपश्रौ १९·२७·४-५) इति ॥ पाठस्तु–‘ अब्जा असि प्रथमजा बलमसि समुद्रियम् ’

१९. मै– ‘ यूयम् ’ नास्ति । २०. मै–‘ शुभेः ’ नास्ति । २१. तै१,तै२,–मै,ले–अविच्छेदम् । २२. तै१,तै२,मै,ले–°प्रवृत्त° । २३–२३. मै,ले– ‘ आदित्याद्वा ’ नास्ति । २४–२४. मै४–जायन्त इत्यब्जाः ।

१२. क,ट,ढो१–उपक्षयितारः । १३. आ– °रूपमिदं । १४. क,ट,ढो१– अपक्वाम् । १५. ड– नाभिः । १६. आ– अन° । १७. अ, ट,जो,ना,पा,हा– अभिमन्त्रेत् ।

उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नर्भः ।
उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् ।

उदिति । नुम्भय । पृथिवीम् । भिन्द्धि । इदम् । दिव्यम् । नभः ॥
उद्नः । दिव्यस्य । नः । देहि । ईशान । वीति । सृज । दृतिम् ॥

( पा ६ ४ ४१ ) इत्याकार । प्रथमजा च असि, प्रथम प्रजापति तस्माज्जात इति । पूर्ववत् प्रत्यय, आकारश्च । यथोक्त– “ राजन्यो मनुष्याणामवि पशूनाम् ” (तैस ७ १ १) इति । बलम् असि समुद्रिय समुद्रे मेघे भवम् । समुद्रात् अभ्रात् मेघात ईदृश बलहेतुरुदक त्वमसि ईदृशोदकहेतुरसि ॥

अथ वर्षाभूस्तम्भमभिजुहोति– ‘ उन्नम्भय ’ इत्यनुष्टुभा ॥ हे वर्षाभूस्तम्भ, उन्नम्भय उच्छ्वासय । नभि गतिकर्मा, छान्दसो नुम् । पृथिवीं वृष्ट्या । तद्दर्शयति– इद दिव्य दिवि स्थित नभ मेघ भिन्द्धि । नहेरसुनि ( उ ६६० ) नभ । गगनम् । तथा कृत्वा उद्न उदकस्य दिव्यस्य न अस्मभ्य देहि । कर्मणि सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईशान उदक दातु समर्थ त्व वि सृज विमुञ्च दृति दृतिस्थानीय मेघ क्षारय । “द्व्यचोऽतस्तिङ ” (पा ६ ३ १३५) इति दीर्घत्वम् । पूर्ववदुदकस्योदन्भाव , उदात्तनिवृत्तिस्वरश्च । उद्न ईशान इति वा । “ अधीगर्थ° ” ( पा २ ३ ५२ ) इति षष्ठी ॥

इति ॥ हे अवे, अब्जा त्वम् उदकाज्जाता असि । मातृपित्र्युदकात् रेतोरूपेण परिणतादुत्पन्नाऽसि । किं च प्रथमजा असि सुवर्भानुप्रसारितादादित्यावरकतमोभागात् प्रथममपहृतादुत्पन्नाऽसि । “तस्य यत् प्रथम तमोऽपाघ्नन्त्सा कृष्णाऽविरभवत् ” (तैस २ १ २) इति श्रुते । समुद्रियं समुद्रसदृशमेघसबन्धि बल वृष्ट्युत्पादनसामर्थ्यम् असि । त्वय्याक्रन्दन्त्या वृष्टिर्भविष्यतीति ज्ञातु शक्यत्वादित्यर्थ ॥

उन्नम्भयेति ॥ कल्प – “ उत्करे वर्षाहूस्तम्ब प्रतिष्ठाप्योन्नम्भय पृथिवीमिति वर्षाह्वा जुहोति ” ( आपश्रौ १९ २७ ७ ) इति । वर्षाहू पुनर्नवा ॥ पाठस्तु– ‘उन्नम्भय पृथिवीं भिन्द्धीद दिव्य नभ । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् ’ इति । हे पुनर्नवे, पृथिवीम् उन्नम्भय उत्कर्षेण ह्लेदय, तदर्थं दिव्य दिवि भवमिद नभ आकाशवद्व्याप्त मेघमण्डल भिन्द्धि विदारय । विदार्य च दिव्यस्य दिवि भवस्य उद्न उदकस्य वर्षेण न अस्मभ्य देहि । पुनर्नवाया ओषध्या उत्पादक हे देव, त्वम् ईशान सन् दृतिं विसृज उदकपूर्णदृतिसमान मेघ वर्षणाय विसृष्टद्वार कुरु ॥

२५ ल–आ समुद्रात् ।

१८ ग–अम्बे । १९ अ आ इ ड पा– ‘त्वम् ’ नास्ति । २० ग–मातापितृपीतादुदकात्, ङ– मातृपितादिपीतादुदकात् ।

ये देवा( २ )दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः ।
त इमं यज्ञमवन्तु त इदं क्षेत्रमा विंशन्तु त इदं क्षेत्रमनु वि विंशन्तु ॥ ( ८ )॥
[ यन्ति देवा विंꣳशतिश्च ।]

ये । देवाः ( २ ) । दिविभागा इति दिवि - भागाः । ये । अन्तरिक्षभागा इत्यन्तरिक्ष - भागाः ।
ये । पृथिविभागा इति पृथिवि - भागाः ॥
ते । इमम् । यज्ञम् । अवन्तु । ते । इदम् । क्षेत्रम् । एति । विशन्तु ।
ते । इदम् । क्षेत्रम् । अनु । वीति । विशन्तु ॥ ८ ॥
[ मैसं २.४.७ कासं ११.९ ]

अन्तर्वेदि तिष्ठन् कृष्णाजिनमवधूनोति– ' ये देवाः ' इति जगत्या षट्पदया ॥ [v]ये [v]देवाः [v]दिविभागा दिवि भागो येषाम् । " हलदन्तात्° " (पा ६.३.९ ) इति सप्तम्या अलुक् । [v]ये [v]अन्तरिक्षभागाः, [v]ये च [v]पृथिविभागा· [v]ते सर्वे [v]इमं [v]यज्ञम् [v]अवन्तु रक्षन्तु फलप्रदानसमर्थं कुर्वन्तु । [v]ते [v]इदं [v]क्षेत्रम् [v]आ [v]विशन्तु वर्षरूपेण विशन्तु, वर्षितृरूपेण वा परिगृह्णन्तु, [v]ते [v]इद [v]क्षेत्रम् [v]अनु [v]वि [v]विशन्तु [२६]अनुपूर्वं विविध च विशन्तु[२६] ओषध्यादि-रूपेण व्याप्य तिष्ठन्तु, मा कदाचिदपीदं शुष्क भूत् ॥

इति द्वितीये चतुर्थे अष्टमोऽनुवाकः ॥

य इति ॥ कल्पः–" ये देवा दिविभागा इत्युपर्याहवनीये कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्-विशसनम् " (आपश्रौ १९.२७.११) इति ॥ पाठस्तु–' ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः । त इमं यज्ञमवन्तु त इदं क्षेत्रमा विशन्तु त इदं क्षेत्रमनु वि विशन्तु ' इति ॥ लोकत्रयभाजः [v]ये [v]देवाः [v]ते प्रथमं [v]यज्ञं प्रविश्य सस्यनिष्पादकं [v]क्षेत्रं सामान्येनाऽविश्य ततः [२१]प्रतिकेदारम् [v]अनु[२१] विशेषेण [v]विशन्तु ॥

अत्र विनियोगसंग्रहः–

वृष्टिप्रदायां कारीर्यां देवा इत्यादिकैस्त्रिभिः ।
दिनत्रये चर्मबन्धः शाकटस्ये छदिस्त्रये ॥ १ ॥
उद्गो दत्तेति वाक्यं तु त्रयाणां शेष इष्यते ।
दिवा त्रिभिः सक्तुहोमः सृजेत्युल्करसंस्थिताम् ॥ २ ॥
स्थालीमद्भिः पूरयित्वा ह्यब्जाः प्रोक्षत्यपि स्थिताम् ।
उग्रं पुनर्नवाहोमो ये चर्माग्नौ तु धूपने ॥
अष्टमे त्वनुवाकेऽस्मिन् दश मन्त्रा उदीरिता. ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोनुवाकः ॥

२६–२६. पं२–अनुपूर्वं विशन्तु, तै१.तै२–अनुप्रविशन्तु; तं–अनुप्रविशन्तु अनुपूर्वं विशन्तु ।

२१–२१. अ.आ.उ.क.पा– प्रतिक्षेत्रमनु च, को.गा.हा– प्रतिक्षेत्रं प्रतिकेदारमनु च ।

**मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे**

मारुतम्। असि। मरुताम्। ओजः। इति। कृष्णम्। वासः। कृष्णतूषमिति कृष्ण-तूषम्। परीति। धत्ते। एतत्। वै। वृष्ट्यै। रूपम्। सरूप इति स-रूपः। एव। भूत्वा। पर्जन्यम्। वर्षयति। रमयत। मरुतः। श्येनम्। आयिनम्। इति। पश्चाद्वातमिति पश्चात्-वातम्। प्रतीति। मीवति। पुरोवातमिति पुरः-वातम्। एव। जनयति। वर्षस्य। अवरुद्ध्या इत्यव-रुद्ध्यै। वातनामानीति वात-नामानि। जुहोति। वायुः। वै। वृष्ट्याः। ईशे।

अथ 'मारुतमसि' (तैस २ ४ ७) इत्यादीना कारीरीमन्त्राणा ब्राह्मणम्-'मारुतमसि' इत्यादि॥ कृष्णतूष कृष्णदशान्त कृष्ण वास यजमान परि धत्ते। [1]एतत् कृष्ण वास वृष्ट्यै वृष्ट्या रूप, ततश्च पर्जन्यसमानरूप भूत्वा पर्जन्य वर्षयति॥

रमयतेत्यादि। पश्चाद्वातम् अपरस्या दिशि आगच्छन्त वात प्रति मीवति प्रतिनिवर्तयति वर्षप्रतिकूलमपि पुरोवात पूर्वस्या दिश आगच्छन्त वात वर्षानुकूल जनयति एव। तच्च वर्षस्य अवरुद्ध्यै भवति। मीव स्थौल्ये। प्रतिमीवति प्रक्षीयमाण करोतीति यावत्॥

वातनामानीति॥ "पुरोवातो वर्षन्" (तैस २ ४ ७) इत्यादीन्यष्टौ। ईश इति। "लोपस्त आत्मनेपदेषु" (पा ७ १ ४१) इति तलोप॥

कारीर्युत्तरभागस्था मन्त्रा अष्टम ईरिता॥

**मारुतमिति**॥ अथ नवमे पूर्वभागस्था सप्तमानुवाकोक्तमन्त्रा व्याख्यायन्ते। [1]तत्र यजमानस्य वस्त्रपरिधान विधत्ते-'मारुतमसि मरुतामोज इति कृष्ण वास कृष्णतूष परिधत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्य वर्षयति' इति॥ तूषा वस्त्रस्य दशा, ता कृष्णा यस्य तत् [2]कृष्णतूषम्। जलपूरितैर्मेघै आदित्यप्रकाशे सर्वत आवृते सति वृष्टे स्वरूप कृष्ण [3]भाति। यजमानोऽपि [4]कृष्णवस्त्रप्रावरणात् वृष्टि समानरूप सन् [5]पर्जन्य वर्षयितुं प्रभुर्भवति॥

**रमयतेति**॥ मन्त्रान्तर विनियुङ्क्ते-'रमयत मरुत श्येनमायिनमिति पश्चाद्वात प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै' इति॥ [6]प्रति [7]मीवति प्रतिबध्नाति॥

**वातनामानीति**॥ 'पुरोवातो वर्षन्' इत्यादिमन्त्राणा विनियोग दर्शयति-'वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्य वर्षयति' इति॥ 'जिन्वरश्र' इत्यादीनि वायोर्नामानि तदुद्देशेन होमे सति य [8]वायु वृष्टेरीश्वर [9]स तुष्ट सन् वर्षयति॥

१. त१ त२,मै ल- 'कृष्णदशान्तम्' इत्यस्यानन्तरम् 'उदकम्'। २ मै४- तत्। ३ मै४- °समान। ४-४ मै४- गच्छन्तम्। ५ त१ त२- प्रवर्तयति ल- प्रतिप्रवर्तयति। ६-६. मै४- पूर्वस्या दिशि। ७-७ मै४- वर्षवात वा अनुकूलम्। ८ मै ल- वस्य। ९. त१ त२,मै ल- क्षीयमाणम्।

१ ङ- अत्र। २. ङ- भवति। ३ ङ क ञो ना ग्रं,हा-°प्रावरण। ४-४ क- स सन्तुष्ट।

वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयत्यष्टौ ( १ ) जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सं प्र च्यावयति कृष्णाजिने सं यौति हविरेवाकरन्तर्वेदि सं यौत्यवरुद्ध्यै यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन्

वायुम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । स । एव । अस्मै । पर्जन्यम् । वर्षयति । अष्टौ ( १ ) । जुहोति । चतस्र । वै । दिश । चतस्र. । अवान्तरदिशा इत्यवान्तर दिशा । दिग्भ्य इति दिक् भ्य । एव । वृष्टिम् । सम् । प्रेति । च्यावयति । कृष्णाजिन इति कृष्ण अजिने । समिति । यौति । हवि । एव । अकः । अन्तर्वेदीत्यन्त -वेदि । समिति । यौति । अवरुद्ध्या इत्यव रुद्ध्यै । यतीनाम् । अद्यमानानाम् । शीर्षाणि । परेति । अपतन् ।

अष्टावित्यादि । गतम् । कृष्णाजिने स यौतीति[10] । अन्तर्वेदि कृष्णाजिने मधुषा करीरसक्तून् सयौति इति । हवि एव अक अकार्षीत् । [11]करोतेः छान्दसो लुङ्, "मन्त्रे घस°" (पा २ ४ ८० ) इति च्लेर्लुक् । अन्तर्वेदि सयवन वर्षस्यावरोधनाय भवति । यतीनामिति । प्राणिना यातयितारो रक्षोविशेषा यतय, तेषा सालावृकै अद्यमानानाम् । यदाह–

अष्टाविति ॥ पाठप्राप्ता मन्त्रसरया प्रशंसति– 'अष्टौ जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तर दिशा दिग्भ्य एव वृष्टिꣳ स प्र च्यावयति ' इति ॥

कृष्णाजिन इति ॥ 'मान्दा वाशा ' इति मन्त्रेण सक्तूना संयवन यद्विधास्यते तस्याऽऽधार विधत्ते– 'कृष्णाजिने सं यौति हविरेवाक.' इति ॥ प्रकृतौ कृष्णाजिने हवि स्वरूपान् "व्रीहीनव हन्ति" तण्डुलान् पिनष्टि च । अतोऽत्रापि कृष्णाजिने संयवनेन हवि कृतं भवति ॥

अन्तर्वेदीति ॥ देशविशेष विधत्ते – 'अन्तर्वेदि स यौत्यवरुद्ध्यै ' इति ॥ वेदेर्बहि सयवने यज्ञभूमिमप्रविश्य हविर्नावरुध्यते ॥

यतीनामिति ॥ करीराणि विधातुं प्रस्तौति–' यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन् ते खर्जूरा अभवन् तेषाꣳ रस ऊर्ध्वोऽपतत् तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति ' इति ॥ 'पारमहंस्यरूपं चतुर्थाश्रमं प्राप्ताना येषा यतीना मुखे ब्रह्मात्मप्रतिपादको वेदान्त शब्दो नास्ति तान् यतीनिन्द्र आरण्येभ्य श्वभ्य प्रायच्छत् । यथा च कौषीतकिब्राह्मणोपनिषदीन्द्रस्य प्रतिज्ञा समाम्नायते– "अरुन्मुखान यतीन्त्सालावृकेभ्य प्रायच्छम्" (कौउ ३·१) इति । पतितत्वात् तेषां तथात्व युक्तम् । तथा च स्मर्यते– "नित्यकर्म परित्यज्य वेदान्तश्रवण विना । वर्तमानस्तु संन्यासी पतत्येव न संशय." इति ॥ तेषां च सालावृकैर्भक्षणं षष्ठकाण्डे समाम्नायते– "इन्द्रो यतीन्त्सालावृकेभ्य प्रायच्छत् तान् दक्षिणत उत्तरवेद्या आदन्" (तैसं ६ २·७ ) इति । वेदान्त श्रवणशब्दो विना नित्यकर्म परित्यक्तवतां यततामपीदृशी गतिरिति दर्शयितुं वेदिसमीपे "भक्षणम् ।

१०. मै८– 'इति ' नास्ति । ११ तै१ तै२ मै सं– करोति ।

५-५. इ– व्रीहिषवान् । ६. आ इ उ षो ना.पा.हा– रीयर्या वा । ७. हा– °यवध्यति, हो१– °यवध्येत । ८. अ उ क पा – परम° । ९. हो१– सालावृकेभ्य । १०. अ.आ.उ.क.षो ना पा हा– 'च' नास्ति । ११. अ उ पा– समाम्नाये, श्रु– समाम्नायेत । १२ क.षो ना हा– भक्षणेन, इ क १.हो१– भक्षणं एवम् ।

**ते खर्जूरा अभवन् तेषाꣳ रसं ऊर्ध्वोऽपतत् तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति यत् करीराणि भवन्ति (२) सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्द्धे मधुपा सं यौत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति मान्दा वाशा**

ते। खर्जूरा। अभवन्। तेषाम्। रस। ऊर्ध्व। अपतत्। तानि। करीराणि। अभवन्। सौम्यानि। वै। करीराणि। सौम्या। खलु। वै। आहुतिरित्या हुति। दिव। वृष्टिम्। च्यावयति। यत्। करीराणि। भवन्ति (२)। सौम्यया। एव। आहुत्येत्या-हुत्या। दिव। वृष्टिम्। अवेति। रुन्द्धे। मधुपा। समिति। यौति। अपाम्। वै। एष। ओषधीनाम्। रस। यत्। मधु। अद्भ्य इत्यत्-भ्य। एव। ओषधीभ्य इत्योषधि-भ्य। वर्षति। अथो इति। अद्भ्य इत्यत्-भ्य।
एव। ओषधीभ्य इत्योषधि-भ्य। वृष्टिम्। नीति। नयति। मान्दा। वाशा।

"इन्द्रो यतीन् सालावृकेभ्य" (तैस ६ २ ७) इत्यादि। खर्जूरा महाताला, तत्फलानि करीराणि। सौम्यानीति। रसपरिणामत्वात्। सौम्येति। सोम्या एव हि दिव वृष्टिं च्यावयितु शक्नोति। गतमन्यत्॥

मधुपेति॥ कृष्णेन। मधुशब्दपर्यायो मधु शब्द उसिप्रत्ययात। अद्भ्य ओषधीभ्य च हेतुभ्य वृष्टिं प्रवर्तयति मधुपा सयवनेन। अथो इति। अपि च अद्भ्य ओषधीभ्य अपि उपादानेभ्य वृष्टिम् उत्पादयति॥

नामधेयैरिति॥ मान्दादिभिरेकादशभिर्नामभि[12] (तैस २ ४ ७)। अच्छैति आभिमुख्येन प्राप्नोति, अभिमन्त्रणेनाभिमुख्यकरणात्[13]। अथो इति। असाविति। नामविशेषार्थं

सालावृके अद्यमानाना यतीना यानि [13-13] शीर्षाणि कपालास्थीनि [13] भूमौ अपतन्, तानि खर्जूरवृक्षत्वेन उदभवन्। ये तालाभिधाना महाखर्जूरा तेषा फलानि शिर कपालसदृशानि लक्ष्यन्ते। तेषा फलाना रस ऊर्ध्वमुत्क्रम्य भूमौ अपतत्। पतित्वा च सोमलतासदृशीना लताना सोमप्रतिनिधिभूतानामङ्कुररूपाणि करीरशब्दवाच्यानि [14] अभवन्। अत एव सोमाङ्कुरसदृशत्वात् सौम्यानि करीराणि तदाहुतिश्च सौम्या सती दिव सकाशात् वृष्टिं प्र च्यावयति। "अग्नौ प्रास्ताऽऽहुति सम्यगादित्यमुपतिष्ठते। आदित्यान् जायते वृष्टि" (मनुस्मृ ३ ७६) इति स्मृते॥

यदिति॥ सक्तूना मङ्क्तिद्रव्य विधत्ते– 'य करीराणि भवन्ति सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्द्धे' इति॥

मधुपेति॥ सयवनसाधन माक्षिकद्रव्य विधत्ते– 'मधुपा स यौत्यपा वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति' इति॥ मक्षिका हि नाना विधेभ्य पुष्पेभ्यो रसानादाय मधु कुर्वन्ति। तेषा च रसानामोषधिजन्यत्वात् द्रव्यद्वयोभयमारचम्॥

१२ ते१ तर.मैल– 'नामभि' नास्ति। १३ ते१ तर.ल– °करणत्वात्।

१३-१३ अ उ पा ग्र– शिर कपालास्थीनि इहो१– शिर कपालान्यस्थीनि। १४ ब– अभूवन्। १५ ग्र–रसत्वा°।

इति सं यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा
( ३ ) च्यावयति वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा
अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति
रूपेणैवैनꣳ समर्धयति वर्षस्यावरुद्ध्यै ॥ ९ ॥

[ अष्टौ भवन्ति नामधेयैरेकान्नत्रिꣳशच्च । ]

इति । समिति । यौति । नामधेयैरिति नाम - धेयैः । एव । एना. । अच्छ । एति । अथो इति । यथा । ब्रूयात् । असौ । एति । इहि । इति । एवम् । एव । एना । नामधेयैरिति–नाम - धेयैः । एति ( ३ ) । च्यावयति । वृष्ण । अश्वस्य । सदानमिति स - दानम् । असि । वृष्ट्यै । त्वा । उपेति । नह्यामि । इति । आह । वृषा । वै । अश्व । वृषा । पर्जन्यः । कृष्णः । इव । खलु । वै । भूत्वा । वर्षति । रूपेण । एव । एनम् । समिति । अर्धयति । वर्षस्य । अवरुद्ध्या इत्यव-रुद्ध्यै ॥९॥

[ मैस २४·८, काठ ११·१० ]

सामान्यपदम् । [v]यथा कश्चिदामन्त्रयमाणः [v]ब्रूयात्–दत्त [v]एहि, गुप्त एहि [v]इति [v]एवम् [v]एव अपोऽपि [v]नामधेये. आत्मसमीपे [14]आनयति ॥

वृष्ण इति ॥ तिस्रः पिण्डी कृत्वा समुच्चितयानेन मन्त्रेण कृष्णाजिनस्यान्तान् [15]कृष्णेन सदानेनोपनह्यति । वृषेति । वर्षिता [v]अश्व. पर्जन्य वा[16] वर्षिता । तस्मात् वृषत्वेन पर्जन्य सदृशाश्वसंकीर्तन वृष्ट्यै भवति । किं च – [v]कृष्ण. [v]इव [v]भूत्वा पर्जन्यः वर्षति । तस्मात् कृष्णाजिनसबन्ध रूपसमृद्ध्या वृष्टिहेतुर्भवति ॥

इति द्वितीये चतुर्थे नवमोऽनुवाकः ॥

मान्दा इति ॥ मन्त्रेण संयवनं विधत्ते– 'मान्दा वाशा इति सं यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा च्यावयति' इति ॥ मान्दादीन्यपां नामानि तैः [v]एनाः अभिमुखत्वेन प्राप्नोति । किं च हे देवदत्त, समागच्छ [v]इति [v]यथा लोके [v]ब्रूयात् [v]एवम् [v]एव [v]एनाः अपः स्वनामभि. [v]आ [17]च्यावयति ॥

वृष्ण इति ॥ कृष्णाजिनबन्धनमन्त्रं व्याचष्टे– 'वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्य. कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति वर्षस्याव-रुद्ध्यै' इति ॥ यथा [v]अश्व [v]वृषा सेचनसमर्थ एवं [v]पर्जन्यः अपि सेचनसमर्थ. [18]समुद्रकारणेन [v]कृष्ण एव [v]भूत्वा पश्चात् [v]वर्षति । अतः कृष्णेन रज्जुरूपेण [v]एनं पर्जन्यं समृद्धं करोति । [v]तच्च वर्षस्यावरोधाय संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥

१४. तै१,तै२,मै.ह–आगमयति । १५. तै१,तै२,मै.ह–'कृष्णेन' नास्ति । १६–१६. मै४–अपि । १६. ह,१४हो१– वर्षति । १७. आ–समुद्रकृष्णेन । १८. ह,हो१–'तच्च' नास्ति ।

देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्या नह्यति देवताभिरेवान्वहं वृष्टिमिच्छति यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपेदहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति नक्तं वा हि दिवा वा वर्षति

देवाः । वसव्याः । देवाः । शर्मण्याः । देवाः । सपीतय इति स-पीतयः । इति । एति । बध्नाति । देवताभिः । एव । अन्वहमित्यनु अहम् । वृष्टिम् । इच्छति । यदि । वर्षेत् । तावति । एव । होतव्यम् । यदि । न । वर्षेत् । श्वः । भूते । हविः । निरिति । वपेत् । अहोरात्रे इत्यह रात्रे । वै । मित्रावरुणाविति मित्रा - वरुणौ । अहोरात्राभ्यामित्यह - रात्राभ्याम् । खलु । वै । पर्जन्यः । वर्षति । नक्तम् । वा । हि । दिवा । वा । वर्षति ।

" देवा वसव्या " ( तैस २ ४ ८ ) इत्यादिभि त्रिभिर्मन्त्रै तिसृषु गाथासु त्रिषु दिनेषु अन्वहम् [V]आ [V]बध्नाति पिण्डी । यदि वर्षेदिति । तत्र ' अन्वहम् ' इति वचनात् त्रिषु दिनेषु पिण्डीहोम । श्वो भूते चतुर्थेऽहनि हवि निर्वपेत् । तत्रायं क्रम – [V]यदि प्रथमे दिने [V]वर्षेत् [V]तावति तस्मिन् [V]एव अहनि [V]होतव्य पिण्डीलक्षण हवि । अथ यदि तत्र न वर्षेत् द्वितीये दिने मध्यमाया कृष्णाजिनमाबध्नीयात् । यदि तस्मिन् दिने वर्षेत् तावत्येव होतव्यम् । यदि तस्मिन्नपि न वर्षेत् तृतीये दिने तृतीयस्या कृष्णाजिनमाबध्नीयात् । यदि तस्मिन् दिने वर्षेत् यदि च न वर्षेत् उभयथाऽपि तृतीये दिने पिण्डीर्जुहुयात् । अथ [V]यदि [V]न [V]वर्षेत् [V]श्वोभूते चतुर्थेऽह्नि प्राप्ते [V]हवि निर्वपेत् ॥ हविरिति जात्यैकवचनम् । धामच्छदादीनि त्रीणि हवींषि निर्वपेत् कृष्णाना

प्राच्याङ्गमन्त्रा कारीर्यो व्याख्याता नवमे स्फुटम् ॥
अथोत्तरभागस्थमन्त्रा दशमे [1]व्याख्यायन्ते ॥

देवा इति ॥ तत्र त्रिषु दिनेषु क्रमेण छदिस्त्रये [2]सक्तुबन्धनार्थान् मन्त्रान् विनियुङ्क्ते – ' देवा वसव्या देवा शर्मण्या देवा सपीतय इत्या बध्नाति देवताभिरेवान्वह वृष्टिमिच्छति ' इति ॥ तत्तन्मन्त्रोक्ताभि [3]देवताभि अनुगृहीत प्रतिदिन [4]वृष्टिम् [4]इच्छति ॥

यदीति ॥ तत्र वर्षावर्षपक्षयोर्व्यवस्थया सक्तुहोम पुरोडाशनिवाप च विधत्ते – ' यदि वर्षेत् तावत्येव होतव्य यदि न वर्षेच्छ्वो भूते हविर्निर्वपेत् ' इति ॥ [3]तावति [3]एव सक्तुबन्धने [3]एव कृते सति वर्षणपक्षे पुरोडाशनिर्वापमन्तरेण पिण्डीर्जुहुयात् । प्रथमदिने [4]वृष्टौ सत्या पिण्डत्रयहोमेनैव कर्मसमाप्ति । तथा द्वितीयतृतीययोर्दिनयो । त्रिष्वपि दिनेषु वृष्ट्यभावे चतुर्थदिने पुरोडाशनिवाप कुर्यात् ॥

अहोरात्रे इति ॥ ' अहोरात्रावासक्त भवति ' ( आपश्रौ १९ २६ ५ ) इति वदता सूत्रकारेण अत्यन्तसंयोगवाचिनीं द्वितीया (पा २ ३ ५) प्रयुञ्जानेनाहोरात्रयोर्निरन्तर बन्धन यदुक्त तद्विधिमर्थवादेनो न्नयति– ' अहोरात्रे वै मित्रावरुणावहोरात्राभ्या खलु वै पर्जन्यो वर्षति नक्त वा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्या पर्जन्य वर्षयत ' इति । अह

१ अ– व्याख्यास्यन्ते । २ अ आ उ क जो ना पा हा– °बधनार्थं । ३ अ आ क जो ना पा– ' एव ' नास्ति । ४ हो१– वृष्टयाम् ।

मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मै (१) अहोरात्राभ्यां पर्जन्यं वर्षयतोऽग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता

मित्रावरुणाविति मित्रा वरुणौ । एव । स्वेन । भागधेयेनेति भाग धेयेन । उपेति । धावति । तौ । एव । अस्मै (१) । अहोरात्राभ्यामित्यह -रात्राभ्याम् । पर्जन्यम् । वर्षयत । अग्नये । धामच्छद इति धाम च्छदे । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । मारुतम् । सप्तकपालमिति सप्त कपालम् । सौर्यम् । एककपालमित्येक-कपालम् । अग्निः । वै । इतः । वृष्टिम् । उदिति । ईरयति । मरुतः । सृष्टाम् । नयन्ति । यदा । खलु । वै । असौ । आदित्यः । न्यङ् । रश्मिभिरिति रश्मि भिः । पर्यावर्तत इति परि आवर्तते । अथ । वर्षति । धामच्छदिति धाम-च्छत् । इव । खलु । वै । भूत्वा । वर्षति । एता । वै । देवता ।

व्रीहीणाम् । अहोरात्रे इत्युक्तम् । एकैकस्या गधायामहोरात्रासक्त भवति । सति वर्षे 'तत्र तत्रैव' होम , असति श्वोभूते हविर्निर्वप्तव्यमिति[2] । तत्राहोरात्रावसक्ते वृष्टिहेतुत्व तावत् समर्थयते[3]— नक्त वा दिवा वा अहोरात्राभ्याम् एव पर्जन्य वर्षति । तयोश्च मित्रावरुणात्मकत्वात् तावेव पर्जन्य वर्षयत , अहोरात्रासञ्जनलक्षणस्वभागोपहृतत्वात् ॥

अथ हवींपि विदधाति— 'अग्नये धामच्छदे' इत्यादि ॥ धामानि स्थितानि तेजासि वा छादयति वृष्टिकाल इति धामच्छत् । "बहुल सञ्ज्ञाछन्दसो" (उ १९०) इति णिलुक् । अग्निर्वा इति । आहुतिद्वारेण अग्नि वृष्टिम् उदकम् उत् ईरयति ऊर्ध्व गमयति आदित्य प्रापयति, तस्मादग्नये निरुप्यते । ता वृष्टिं सृष्टाम् अवसृष्टा मरुत नयन्ति देशान्तर प्रापयन्ति, तस्मात् मरुद्भ्यो निरुप्यते । यदा खलु आदित्य रश्मिभि न्यङ् अवाक्वृत्ति नि

सूर्यप्रकाशयुक्तत्वान्मित्रत्वम् । रात्रेरन्धकारेण अवरुद्धत्वात् वरुणत्वम् । पर्जन्य च अहोरात्राभ्या अन्तरेण वर्षितु न क्षमते । कालान्तरस्याभावात् । तथा सति रात्रौ दिवसे वा कदा वर्षिष्यतीति ज्ञातुम् अनवकल्पादिनिरन्तर वन्धनीयम् । तेन तुष्टौ मित्रावरुणौ वर्षयत ॥

अग्नय इति ॥ 'हविर्निर्वपेत्' इति सामान्येन यदुक्त तदेव विशेषत प्रपञ्चयति— 'अग्नये धामच्छदे पुरोडाशमष्टाकपाल निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुत सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ्रश्मिभि पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै

१-१. तै० तर, मै० — तत्र तत्र । २. मै० — °र्निर्वप्स्यामीति । ३. मै० — 'समर्थयते' इत्यनन्तरं 'नक्तं वा दिवा वा अहोरात्राभ्यां भवति' इति । ४-४ तै० तर, मै० — अवाङ् प्रवृत्ति ।

५. आ क ना — [illegible], अ ङ छो पा ग — [illegible], ग ह हो १ — आवरकत्वात् । ६ आ क छो ना पा ह ह हो १ — धाम युत , इ — [illegible] युत । ७ आ क छो पा ह हो १ — [illegible], ना — [illegible], भ — '[illegible]' नास्ति , म — [illegible] ।

वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ता (२) एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन् वर्षत्येव सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः

वृष्ट्या । ईशते । ता । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ता (२) । एव । अस्मै । पर्जन्यम् । वर्षयन्ति । उत । अवर्षिष्यन् । वर्षति । एव । सृज । वृष्टिम् । दिव । एति । अद्भिरित्यत् भि । समुद्रम् । पृण । इति । आह । इमा । च । एव । अमू । च । अप ।

पर्यावर्तते इतोमुप्र प्रवर्तते अथ [11]वर्षति रश्मिषु पक्वमुदक पर्जन्य स्थापयति, तस्मात् सूर्याय निरुप्यते इति । अनेन त्रिहविष्केण यागेन पर्जन्य धामच्छत् इव भूत्वा वर्षति भूयिष्ठ वर्षतीति यावत् । एता वा इत्यादि । गतम् ॥

कुम्भीमद्भि पूरयति–'सृजा वृष्टिम्' इति ॥ इमा भूमिष्ठा अमू दिविष्ठा मेघस्था वा अप समृद्धा करोति । अपि च आभि एव करणभूताभि अमू आभिमुख्येन प्राप्नोति । 'सृजा वृष्टिम्' इति वचनात् वर्षेण इमा समृद्धा भवति । आभिरद्भि समृद्धस्य मेघस्थस्य उदकस्यापूरणात् अमू समृद्धा भवति ॥

भूत्वा वर्षत्येता वै देवता वृष्ट्या इशत ता एव स्वेन भागधेयेनोप धावति ता एवास्मै पर्जन्य वर्षयन्त्यु तावर्षिष्यन् वर्षत्येव' इति ॥ "धामा ह यत् ते अजर" (तैस ३ १ ११) इति याज्यानुवाक्ययोर्धामशब्दो पेतत्वाद्धामच्छदग्नि । तदर्थस्तु धामान्यसद्गृहादीनि अन्धकारापादिकया वृष्ट्याऽऽच्छादयतीति धामच्छत्, तस्मै निर्वाप । "अग्नौ प्रास्ताऽऽहुति" (मनु ३ ७६) इति स्मृत्यनुसारेण अग्नि अस्माल्लोकादाहुत्याऽऽदित्य द्वारा वृष्टिम् उत्पादयति । सृष्टाम् उत्पादिता ता वृष्टिं मरुत यत्र तत्र नयन्ति । यस्मिन् काले असौ आदित्य त्वग्भूवै तीव्रै रश्मिभि परित आवर्वर्तेऽतिशयेन सन्ताप करोति तदा पर्जन्यद्वारा वर्षति । वर्षंश्च धामानि गृहादीन्याच्छादयन् इव बहुलमेघयुक्त भूत्वा वर्षति । तथा सत्यग्निमरुत आदित्य इति एता एव देवता वृष्टेर्नियमनाय समर्था । ता च हविर्भिस्तुष्टा यजमानार्थं वर्षयन्ति । यद्यपि पर्जन्य स्वयमेव अवर्षिष्यन् इव पूर्वं स्थितस्तथाऽप्येताभिर्देवताभि प्रेरित क्षणमात्रेण पुरोवातादिसामग्रीं सपाद्य सर्वथा वर्षति एव ॥

सृजेति ॥ आमस्थालीपूरणमन्त्र व्याचष्टे–'सृजा वृष्टिं दिव आऽद्भि समुद्र पृणत्याहेमाश्चैवा मूश्चाप समर्धयत्यथो आभिरेवामूरच्छैति' इति ॥ 'अद्भि पृण' इत्यनेन इमा भूलोकस्था अप समर्धयति । 'सृजा वृष्टिम्' इत्यनेन अमू स्वर्गस्था अप समर्धयति । किं च आभि अत्र भूलोकस्थाभिरद्भि अमू अच्छ एति स्वर्गस्था अप प्राप्नु गच्छति ॥

अब्जेति ॥ कृष्णाविप्रोक्षणमन्त्रस्य स्पष्टार्थता दर्शयति–'अब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतत्' इति ॥

५ मैध–इत्यमूश्च । ६ त१ त२,मै ल–वर्षिष्य° । ७ मैध–स्थापयति । ८ त१ त२,मैध ७–भूयिष्ठ । ९–९ त१ त२–अमूभि ।

८ क–अन्धकारादिकया । ९ अ उ पा–दृष्ट्या । १० अ उ ना जो पा हा–वृष्टिम् । ११ हो१–स्वीयै । १२ आ–वर्षन् स, ढ हो१–वर्षन् । १३ आ क ना–वृष्टिनिय° । १४–१४ क हा–स्वयमेव वर्षिष्यन् ड श्र हो१–स्वयम् अवर्षिष्यन् । १५ ढ हो१–स्थितवान् तथा° । १६ ढ श्र हो१–स्वर्गलोकस्था ।

सर्मर्धयत्यथो आभिरेवामूरच्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा (३) ओषधीनां वृष्टिवनिस्तयैव वृष्टिमा च्यावयति ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति ॥ १० ॥

[ अस्मै धावति ता वा एकविꣳशतिश्च । ]

समिति । अर्धयति । अथो इति । आभि । एव । अमू । अच्छ । एति । अब्जा इत्यप् जा । असि । प्रथमजा इति प्रथम - जाः । बलम् । असि । समुद्रियम् । इति । आह । यथायजुरिति यथा यजु । एव । एतत् । उदिति । नम्भय । पृथिवीम् । इति । वर्षाह्वामिति वर्ष - ह्वाम् । जुहोति । एषा । वै (३) । ओषधीनाम् । वृष्टिवनिरिति वृष्टि - वनिः । तया । एव । वृष्टिम् । एति । च्यावयति । ये । देवा । दिविभागा इति दिवि भागा । इति । कृष्णाजिनमिति कृष्ण अजिनम् । अवेति । धूनोति । इमे । एव । अस्मै । लोकाः । प्रीता । अभीष्टा - इत्यभि - इष्टाः । भवन्ति ॥ १० ॥

[ मैस २४८, ११ १० कासं ]

अब्जा इति । अविमभिजुहोति । यथायजुरिति । मेघोदकस्य बलहेतुत्वम् ᵛअसि इति ᵛएतत् [१०]ᵛयथायजु भवति ᵛएव । उन्नम्भयेति ॥ [११-]ᵛवर्षाह्वा ᵛजुहोति[-११] । वर्षम् आह्वयतीति वर्षाह्व । क्विपि सम्प्रसारण, साहितिक पूर्वपदस्य दीर्घत्व छान्दस, कृदुत्तरपदस्य प्रकृतिस्वरत्वे "उदात्तयणो [१२]हल्पूर्वात्" (पा ६ १·१७४) इति विभक्तेरुदात्तत्वम् । पुनर्नविकोच्यते । 'वृष्टिवनि' इति । ᵛओषधीना मध्ये ᵛएषा वृष्टे सविभक्तिः । "छन्दसि वनसन°" (पा ३ २·२७) इतीन्प्रत्यय । गतमन्यत् ॥

इति द्वितीये चतुर्थे दशमोऽनुवाक ॥

उन्नम्भयेति ॥ पुनर्नवाया होम विधत्ते– 'उन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ओषधीना वृष्टिवनिस्तयैव वृष्टिमा च्यावयति' इति ॥ ᵛएषा ᵛवै पुनर्नवैव ᵛओषधीनां सर्वासां मध्ये ᵛवृष्टिवनि वृष्टिभाक् वर्तते [१७]बहुल्वरसमुद्भवात् ॥

य इति ॥ मन्त्रान्तर विनियुङ्क्ते– 'ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोका प्रीता अभीष्टा भवन्ति' इति ॥ ᵛदिविभागा अन्तरिक्षभागा पृथिविभागा इत्युक्तत्वात् ᵛलोका ᵛप्रीता सन्तो [१८]यजमानायाभीष्टप्रदा ᵛभवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाक ॥

१०. ८–यथायजुरेदति यथा तत् । ११-११. तै१ तै२.मै ल– 'वर्षाह्वा जुहोति' नास्ति । १२. तै१ तै२.मै – 'हल्पूर्वात्' नास्ति ।

१७. ट ग२.हो१–बहुल्वं रसुद्भवात् । १८ ट हो१– यजमानाभीष्ट° ।

**सर्वा॑णि॒ छन्दा॒ꣳ॒स्येत॒स्या॑मि॒ष्ट्याम॑नू॒च्या॑नी॒त्या॑हुस्त्रि॒ष्टुभो॑ वा ए॒तद्वी॒र्यं॑ यत् क॒कुदु॒ष्णिहा॒ जग॑त्यै॒ यदु॑ष्णिहक॒कुभा॑व॒न्वाह॒ तेनै॒व सर्वा॑णि॒ छन्दा॒ꣳ॒स्यव॑ रुन्द्धे गाय॒त्री वा ए॒षा यदु॒ष्णिहा॒**

सर्वा॑णि । छन्दा॑ꣳसि । ए॒तस्या॑म् । इ॒ष्ट्याम् । अ॒नू॒च्यानीत्य॑नु - उ॒च्यानि॑ । इति॑ । आ॒हुः॒ । त्रि॒ष्टुभः॑ । वै । ए॒तत् । वी॒र्य॑म् । यत् । क॒कुत् । उ॒ष्णिहा॑ । जग॑त्यै । यत् । उ॒ष्णि॒ह॒क॒कु॒भावित्यु॑ष्णिह क॒कुभौ॑ । अ॒न्वाहेत्य॑नु - आह॑ । तेन॑ । ए॒व । सर्वा॑णि । छन्दा॑ꣳसि । अवेति॑ । रु॒न्द्धे॒ । गा॒य॒त्री । वै । ए॒षा । यत् । उ॒ष्णिहा॑ ।

सर्वाणि छन्दांसीत्यादि ॥ अस्ति त्रैधातवीयेष्टिः । तां विधास्यन् प्रथमं तद्गतान् कांश्चित् विशेषान् विदधाति । [v]एतस्याम् [v]इष्ट्यां सामिधेनीषु [v]सर्वाणि, [1]नैकैव गायत्री अपि तु बहूनि[1] [v]छन्दांसि [v]अनूच्यानि [v]इति यज्ञविदः [v]आहुः । यत्ने छान्दसः क्विप् । तत् कथमित्याह– 'त्रिष्टुभः' इत्यादि । [v]ककुत् नाम [v]त्रिष्टुभः [v]वीर्यं वीर्यपरिणामः कार्यं इत्यर्थः । [v]उष्णिहा नाम जगत्या वीर्यम् । उष्णिक्पर्याय उष्णिहाशब्दः । तस्मादुष्णिहककुभौ [v]यत् अनुवचनं लोके समिध्यमानवतीसमिद्धवत्योर्मध्ये निधानं [v]तेन सर्वच्छन्दोऽवरोधः । प्रकृतिः गायत्री, विकृत्यौ चोष्णिक्ककुभौ, तत्कारणे च त्रिष्टुब्जगत्याविति । तत्र "प्र सो अग्ने तवोतिभिः", "प्र होत्रे पूर्व्यं वचः" ( तै.सं. ३.२.११ ) इत्येते उष्णिक्ककुभौ वेदितव्ये । तत्र प्रथमा ककुप्, मध्यमस्य पादस्य द्वादशाक्षरत्वात् । द्वितीया परोष्णिक्, [2]तृतीयस्य पादस्य द्वादशाक्षरत्वात् । अत्र ककुदुष्णिहाविति वक्तव्ये उष्णिहककुभाविति विपर्यासश्छान्दसः ॥

गायत्री वा इत्यादि ॥ [v]गायत्री [v]वै [v]एषा[2] । इयमुष्णिक्त्वादुष्णिग्ग्रहणमेव कृतम् । तत्र चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, तत् कथमनयोरेकत्वमित्यत आह–'यानि' इति ।

अनुवाके तु दशमे कारीरीष्टिः समापिता ॥

अथैकादशे त्रैधातवीयेष्टिर्विधातव्या[1] ॥

**सर्वाणीति** ॥ तत्राऽऽदौ सामिधेनीषु द्वे धाय्ये विधत्ते–'सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यव रुन्द्धे' इति ॥ 'एतस्यां त्रैधातवीयेष्टौ सामिधेनीरूपेण 'सर्वाणि अपि 'छन्दांसि अनुवक्तव्यानि 'इति अभिज्ञा 'आहुः । तत् तु सर्वच्छन्दोनुवचनं कथं घटत इति तदुच्यते । ककुच्छन्दः 'त्रिष्टुभः सारम्, उष्णिक्छन्दो जगत्याः सारम् । अतस्तदुभयानुवचनेन सर्वच्छन्दोनुवचनं संपद्यते । "प्र सो अग्ने तवोतिभिः" ( तै.सं. ३.२.११ ) इत्येषा ककुप्, तदीयेषु त्रिषु पादेषु मध्यमपादस्य द्वादशाक्षरत्वात् । "प्र होत्रे पूर्व्यं वचः" ( तै.सं. ३.२.११ ) इत्येषोष्णिक्, तदीयेषु त्रिषु पादेष्वन्तिमपादस्य द्वादशाक्षरत्वात् ॥

१–१. तं१ त२ मै ८ – 'नैकैव गायत्री अपि तु बहूनि' नास्ति । २ मै८– धार्यन्त् ।
२–२. त१ त२ ल– 'तृतीयस्य पादस्य . गायत्री वै एषा' नास्ति ।

१ अ आ उ पा हो१– °र्विधीयते ।

यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्यक्षराणि यज्ञगत्या (१) परिदध्यादन्तं यज्ञं गमयेत् त्रिष्टुभा परि दधाति-

यानि । चत्वारि । अधीति । अक्षराणि । चतुष्पाद इति चतुः - पादः । एव । ते । पशवः । यथा । पुरोडाशे । पुरोडाशः । अधीति । एवम् । एव । तत् । यत् । ऋचि । अधीति । अक्षराणि । यत् । जगत्या (१) । परिदध्यादिति परि-दध्यात् । अन्तम् । यज्ञम् । गमयेत् । त्रिष्टुभा । परीति । दधाति ।

अयमभिप्राय –गायत्र्या एव पशुसाधन रूप यदुष्णिङ्नाम, तस्मात् ^v^यानि ^v^चत्वारि ^v^अक्षराणि अभ्यधिकानि तानि ^v^चतुष्पाद ^v^पशवः । तद्धेतुत्वात् ताच्छब्द्यम् । तस्मादुष्णिक्प्रवेशव्याजेन गायत्रीमेव प्रकृतिं पशुसाधनभूतां कुर्म इति ॥

एवं सर्वच्छन्दोऽवरोधहेतुत्वेन पशुलाभहेतुत्वेन च उष्णिक्ककुभोः प्रवेश स्तुत्वा इदानीम् इहलोकस्वभावसुलभ ^v^दुर्बोध चेदमक्षराधिक्यमिति दृष्टान्तेन दर्शयति–'यथा' इति ॥ 'उत्तर उत्तरो ज्यायान् भवति' इति ^v^यथा ^v^पुरोडाशे प्रथमे ^v^अधि उपरि मध्यम., तस्मिन्नपि तृतीयो भवति, ^v^एवम् ^v^एव एतत् द्रष्टव्य, ^v^यत् ^v^ऋचि गायत्र्याम् ^v^अधि उपरि चत्वारि ^v^अक्षराणि भवन्ति । यद्वा–पुरोडाशे पुरोडाशान्तरमधिकप्रमाण तिष्ठति तद्वदिदमृचि गायत्र्या अधिकाक्षरा उष्णिक्त्रिष्टुबिति ॥

यज्ञगत्येति ॥ उक्त जगत्या वीर्यमुष्णिगिति । उक्त च 'गायत्री वा एषा यदुष्णिहा' इति । तस्मादेव जगतीभावत्या "आ जुहोत" (तैब्रा ३·५·२) इति गायत्र्या परिधान यज्ञस्य मध्ये अन्तगमनाय ^v^विनाशाय स्यात्, जगत्या छन्दसामन्त्यत्वात् । यद्वा– गायत्र्येव

गायत्रीति ॥ एतदुभयवचनेन त्रिष्टुब्जगत्योर्लाभेऽपि गायत्र्या अलाभशङ्कां वारयितुमन्तर्भावं दर्शयति– 'गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव तद्यदृच्यध्यक्षराणि' इति ॥ उष्णिक्छन्दसोऽष्टाविंशत्यक्षराणि । तत्र ^v^चतुर्विंशत्यक्षरैर्गायत्र्यन्तर्भूता । ^v^यानि अधिकाक्षराणि ^v^चत्वारि सन्ति ^v^ते ^v^चतुष्पात्पशुस्वरूपा एव । पूर्वस्मिन् प्रपाठके ^v^त्रिधातावि‌ष्टौ (तैस २·३·६) पुरोडाशस्योपरि पुरोडाशान्तरस्थापनं विहितम् । एवमत्रापि विधास्यते । एवं सति ^v^यथा ^v^पुरोडाशे ^v^अधि उपरि अन्य. ^v^पुरोडाशः स्थाप्यते, ^v^एवम् ^v^एव उष्णिक्छन्दस्कायाम् ^v^ऋचि गायत्रीछन्दोक्षरसंख्याया अधिकाक्षराणि चत्वारीति ^v^यत् ^v^तत् अवगन्तव्यम् । अतः पुरोडाशसाम्यात्याक्षराधिक्यं ^v^युक्तमित्यभिप्रायः ॥

यदिति ॥ ^v^प्रकृतौ – 'आ जुहोत दुवस्यत' (तैब्रा ३·५·२) इति गायत्री सामिधेनीषु परिधानीया भवति । तामत्रापवदितु^v^ त्रिष्टुभं विधत्ते– 'यज्ञगत्या परिदध्यादन्तं यज्ञं

४. मै ^ ^– 'दुर्बोध' नास्ति । ५. मै.^ ^– नाशाय ।

२. द हो१– चतुर्विंश° । ३. द.हो१– °त्पशुरूपाः । ४. इ–त्रैधातवीयेष्टौ । ५. हो१– उत्तानि° । ६-६. थ.आ.उ.क.जो.गा.पा.हा.हो१ – प्रकृतौ दे अत्वाउरे आ जुहोत दुवस्यतेति गायत्री सामिधेनी एवं पदा इति जगती भवति, ते अपवदितु ।

-न्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रति स्थापयति नान्तं गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय सर्वो वा एष यज्ञो यत् त्रैधातवीयं कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते

इन्द्रियम्। वै। वीर्यम्। त्रिष्टुक्। इन्द्रिये। एव। वीर्ये। यज्ञम्। प्रतीति। स्थापयति। न। अन्तम्। गमयति। अग्ने। त्री। ते। वाजिना। त्री। सधस्थेति सध स्था। इति। त्रिवत्येति त्रि वत्या। परीति। दधाति। सरूपत्वायेति सरूप त्वाय। सर्वः। वै। एषः। यज्ञः। यत्। त्रैधातवीयम्। कामायकामायेति कामाय कामाय। प्रेति। युज्यते। सर्वेभ्यः। हि। कामेभ्यः। यज्ञः। प्रयुज्यत इति प्र युज्यते।

वर्धमानाक्षरा उष्णिहादिभावमापद्यमाना उपर्युपरि गच्छतीति जगतीत्युच्यते। त्रिष्टुगिति। " अग्ने त्री ते वाजिना " इत्येतया। त्रिवत्येति। त्रिष्टुबन्तराद्वैलक्षण्यमस्या दर्शयति। " छन्दसीरः " (पा ८ २ १५) इति मतुपो वत्वम्। सरूपत्वायेति। त्रित्वान्वयात् त्रैधातवीय सारूप्यमिति॥

सर्वो वा इत्यादि॥ त्रैधातवीयाख्य यत् इद कर्म एष सर्व यज्ञ सर्वयज्ञतुल्य इति यावत्। ' यत् त्रि प्रायच्छत् त्रि प्रत्यगृह्णात् ' इति त्रिषु लोकेषु भव इन्द्राविष्णवो सम्बन्धी

गमयेत् त्रिष्टुभा परि दधातीन्द्रिय वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञ प्रति स्थापयति नान्त गमयति' इति॥ उष्णिक्छन्दसो जगतीवीर्यत्वेन निरूपितत्वात् तदेवात्र जगतीशब्देन विवक्ष्यते। तस्मिश्चौष्णिकछन्दसि गाय-यन्तर्भावस्योक्तत्वाल्लक्षितलक्षणया जगतीशब्दो गायत्रीं ब्रूते। तथा सति प्रकृतिवद्गाय-या परिधान यत् तदेवात्र जगतीपरिधानमिति विवक्षितत्वात् तत्र "बाध इत्युच्यते"। अथवा शाखान्तरानुसारेण मुख्यथैव जगत्याऽत्र प्राप्त परिधान दृष्यते। तत्परिधाने हि यज्ञ नाशितवान् भवति। अथ त्रिष्टुभा परिदध्यात् सामिधेनी समापयेदित्यर्थ। त्रिष्टुभ इन्द्रियसामर्थ्यरूपत्वात यज्ञ सामर्थ्ये प्रतिष्ठापितवान् भवति। ततो यज्ञ न नाशयति॥

अग्न इति॥ ता त्रिष्टुभ दर्शयति– ' अग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय ' इति॥ त्रिशब्दा बहवो यस्या सन्तीति त्रिवती। सेय तृतीयकाण्डस्य द्वितीयप्रपाठके समाम्नास्यमानत्वात् तत्रैव (तैस ३ २ ११) व्याख्यास्यते॥ यथाऽस्यामृचि त्रिशब्दस्तथा त्रैधातवीय कर्मनामन्यपि त्रिशब्दोऽस्तीति सारूप्यम्॥

सर्व इति॥ सर्वकामसाधनत्वेन याग विधत्ते–' सर्वो वा एष यज्ञो यत् त्रैधातवीय कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञ प्रयुज्यते ' इति॥ सर्वेषु यज्ञेषु यानि छन्दासि प्रयोक्तव्यानि तानि सर्वाण्यत्रौष्णिकछन्दस्यामेवात्ररुध्यानीत्युक्तम्। अतोऽय सर्वयज्ञस्वरूपत्वादस्य य कामोऽस्ति तेन तदर्थं प्रयोक्तव्य। यस्माज्ज्योतिष्टोमादिरखिल यज्ञ सर्वकामार्थं प्रयुज्यते तस्मात् सर्वयज्ञस्वरूपत्वादस्य सर्वकामार्थत्व युक्तम्॥

६ तर– ' जगती ' नास्ति। ७ त१ त२,ल– भवत, मै भवत [ वनो ]।

७ इ–वर्णितत्वात्। ८–८ हो१–दोष उच्यते। ९ ड–अत। १० अ उ पा–यथान्यामृचि।

त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा (२) एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्ये-

त्रैधातवीयेन। यजेत। अभिचरन्नित्यभि चरन्। सर्वः। वै (२)। एषः। यज्ञः। यत्। त्रैधातवीयम्। सर्वेण। एव। एनम्। यज्ञेन। अभीति। चरति। स्तृणुते। एव। एनम्। एतया। एव। यजेत। अभिचर्यमाण इत्यभि-चर्यमाणः। सर्वः। वै। एषः। यज्ञः। यत्। त्रैधातवीयम्। सर्वेण। एव। यज्ञेन। यजते। न। एनम्। अभिचरन्नित्यभि चरन्। स्तृणुते। एतया। एव। यजेत। सहस्रेण। यक्ष्यमाणः। प्रजातमिति प्र जातम्। एव। एनत्। ददाति।

वीर्यविशेष त्रैधातव। तत्प्राप्तिहेतुत्वेन तत्सबन्धि कर्म त्रैधातवीयम् इष्टिलक्षणम्। कामायकामाय सर्वस्मै कामाय स्वर्गपशुप्रजादिकामाय प्र युज्यते। हेतुमाह–'सर्वेभ्य हि' इति। सामान्य विवक्षयैकवचनम्। सर्वकामसपत्ति यज्ञैर्भवति। 'अय च याग सर्वयज्ञात्मा, तस्मात् सर्वेभ्य कामेभ्य प्रयोक्तव्य इति॥

सर्वेणैवैनमिति॥ अस्य सर्वयज्ञात्मकत्वात् अनेन यजमान सर्वेण आभिचारिकेण यज्ञेन एनम् अभिचरितव्यम् अभि चरति। तत एन स्तृणुते हिनस्ति एव। सर्वेणेवेति। अस्य सर्वयज्ञात्मकत्वात्। सर्वेण अभिचारादिदोषनिघातार्थेनापि यज्ञेन अय यजमानो भवति। तत एनम् अभिचरन् न स्तृणुते॥

प्रजातमिति॥ प्रजात सतानवत् अविच्छिन्नम् एव सहस्र ददाति। उत्तरोत्तर
८ प्रभूतमिति यावत्। सर्वयज्ञत्वेन अस्य धनाभिवृद्धिहेतुत्वात्। ईजान इति। इष्टवान् सहस्रेण

त्रैधातवीयेनेति॥ सामान्येन सर्वकामार्थत्व विधाय विशेषतोऽभिचारहेतुत्व विधत्ते–'त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनम्' इति॥

एतयेति॥ अभिचारपरिहारार्थत्व विधत्ते–'एतयैव यजेताभिचर्यमाण सर्वो वा एष यज्ञो यत् त्रैधातवीय॰ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुते' इति॥ एतया एष त्रैधातवीयेष्ट्यैव॥

एतयेति॥ सहस्रदक्षिणाकस्य ज्योतिरायुर्ज्योतिरसोर्याममहाव्रतादेरनुष्ठानसिद्धिं प्रति साधनत्व विधत्ते–'एतयैव यजेत सहस्रेण यक्ष्यमाण प्रजातमेवैनद्ददाति' इति॥ यस्तु सहस्रदक्षिणा

८. तै१ तर मैर– य। ९. तर तैर– 'कामेभ्य' नास्ति। १० तर तैर– यत (?) यज्ञ॰
११ तै१ तै२– अभिचारिणा। १२. मैर– सर्वेणैव येति। १३. तै१ तै२– यज। १४ तै१ तै२–नो।

१५ द–गोसगौरि। १६ दहो१– साधनम्।

-तयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति (३) यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत

एतया । एव । यजेत । सहस्रेण । ईजानः । अन्तम् । वै । एषः । पशूनाम् । गच्छति (३) । यः । सहस्रेण । यजते । प्रजापतिरिति प्रजा-पतिः । खलु । वै । पशून् । असृजत । तान् । त्रैधातवीयेन । एव । असृजत । यः । एवम् । विद्वान् । त्रैधातवीयेन । पशुकाम इति पशु-कामः । यजते । यस्मात् । एव । योनेः । प्रजापतिरिति प्रजा-पतिः । पशून् । असृजत । तस्मात् । एव । एनान् । सृजते । उपेति । एनम् । उत्तरमित्युत्-तरम् । सहस्रम् । नमति । देवताभ्यः । वै । एषः । एति । वृश्च्यते । यः । यक्ष्ये । इति । उक्त्वा । न । यजते । त्रैधातवीयेन । यजेत ।

पशूनाम् अन्तं समाप्तिं गच्छति अपशुरेव स्यात् । यस्मादिति । [15]त्रैधातवीयेनोत्सृजते । उपैनमुत्तरमिति । यागप्रभावात् सहस्रान्तरम् एनम् उप नमति ॥

यो यक्ष्य इत्युक्त्वेति ॥ यज्ञार्थं कृतसंकल्पः तेन यज्ञेन अनिष्टवानपि सर्वयज्ञात्मकेनानेन यजमानः तेनापीष्टवान् भवति । तस्मादयागदोषाभावात् देवताभ्यः न वृश्च्यते न [16]हीयते ॥

येन यागेन [13]यष्टुमसमर्थः सन्नहं तेन यक्ष्य इति कामयते सोऽयम् एतया [14-14]इष्ट्वा यजेत । पश्चात् तत्र प्रजानां प्रभूतं बहुविधं सहस्रं गातुं शक्तो भवत्येव । ततस्तादृशकर्मानुष्ठानं सिध्यति ॥

एतयेति ॥ अथ सहस्रदक्षिणाकेन यागेनेष्टवतः [15]उपरितनबहुविधयज्ञसाधनद्रव्यार्थं विधत्ते— 'एतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति ' इति ॥ यः पुमान् गोसहस्रदक्षिणाकेन यागेनेष्टवान् भवति स एष पशूनाम् अवसानं प्राप्नोति । तेनोत्तरक्रतूननुष्ठातुमसमर्थो भवति । अतस्तत्सामर्थ्याय पशुकामः सन् प्रजापतिवत् [16]एतया इष्ट्वा पशुयोनेरस्मादेव यागात् पशून् प्राप्नोति । [17]तत उत्तरक्रतुषु [17]दातव्यं गोसहस्रम् एव यजमानः प्राप्नोति ॥

देवताभ्य इति ॥ यत्र संकल्प्याननुष्ठानं संकल्पभ्रंशपरिहारार्थं विधत्ते— 'देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञो यत् त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते ' इति ॥ [18]आवश्चनं सर्वथा विच्छेदो देवताद्रोह इति यावत् ॥

१५ मै४– त्रैधातवीयाख्यात । १६ त१ त२ प२ ट– स्थीयते ।

१३ ट– °मशक्त । १४–१४ शृ हो१– इष्ट्वा । १५ ड हो१– 'उपरितनबहुविध°' नास्ति । १६ आ ब– एतेन । १७–१७ आ– तदुत्तर° । १८ अ आ उ क जो ड ना पा शृ हा हो१– आवृश्चनं ।

सर्वो वा एष यज्ञो (४) यत् त्रैधातवीयꣲ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिष्षमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोका यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣲ समृद्ध्यै

सर्वः । वै । एष । यज्ञः (४) । यत् । त्रैधातवीयम् । सर्वेण । एव । यज्ञेन । यजते । न । देवताभ्य । एति । वृश्च्यते । द्वादशकपाल इति द्वादश कपाल । पुरोडाशः । भवति । ते । त्रयं । चतुष्कपाला इति चतु कपाला । त्रिष्षमृद्धत्वायेति त्रिष्षमृद्ध त्वाय । त्रयं । पुरोडाशा । भवन्ति । त्रयं । इमे । लोका । एषाम् । लोकानाम् । आप्त्यै । उत्तरउत्तर इत्युत्तर -उत्तर । ज्यायान् । भवति । एवम् । इव । हि । इमे । लोका । यवमय इति यव-मय । मध्ये । एतत् । वै । अन्तरिक्षस्य । रूपम् । समृद्ध्या इति सम् ऋद्ध्यै ।

द्वादशकपाल इति ॥ चतुरो मुष्टीन् व्रीहीणा निरुप्य चतुरो यवाना निरुप्य पुनश्चतुरो व्रीहीणा निर्वपेत् । गार्हपत्ये द्वादशकपालान्युपदधाति । सर्वत्रैव द्वात्रिंशुभ्यामेव निर्वापादि । ते त्रय इति । अवयुत्य सख्यास्तुति । त्रिष्षमृद्धत्व तिसृभिरावृत्तिभिर्योग । त्रैधातवीयानुरूपत्वम् । त्रय इति । उपर्युपर्यवस्थिता । [v]उत्तरउत्तर पूर्वस्मात् पूर्वस्मात् [v]ज्यायान् वृद्धतर । [v]इमे खलु [v]लोका पृथिव्यादय उत्तरमुत्तर ज्यायास । यवमय इति । "द्व्यचश्छन्दसि" (पा ४ ३ १५०) इति विकारे मयट् । एतद्वा इति । यौति [१७]पृथग्भावे । [१८]पृथग्भूत वा सर्वपदार्थेभ्योऽन्तरिक्षम् [१८]।

द्वादशकपाल इति ॥ अस्मिन् कर्मणि द्रव्य विधत्ते- 'द्वादशकपाल पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिष्षमृद्धत्वाय' इति ॥ समुदायाकारेण [१९]गणनाया द्वादशकपाल चेऽप्यनुष्ठाने त्रिसख्याका [२०]चतुष्कपाल कर्तव्या । [२१]तथा त्रिसख्यया यजमानस्य त्रिवार समृद्धत्व सपद्यते ॥

त्रय इति ॥ पुरोडाशसख्या प्रशसति- 'त्रय पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्यै' इति ॥

उत्तर उत्तर इति ॥ [२२]पूर्वप्रपाठकोक्तत्रिधामादिव (तैस २ ३ ६) प्रमाणवैषम्य विधत्ते- 'उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोका' इति ॥

यवमय इति ॥ चोदकप्राप्त व्रीहिमयत्वमपवदितु [२३]यवमय विधत्ते- 'यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣲ समृद्ध्यै' इति ॥ भूलोकवर्तिनो मनुष्या स्वर्गलोकवर्तिन सूर्यचन्द्रादयश्च विस्पष्टम्

१७ तै१ तै२ मै ग- पृथग्भाव । १८-१८ तै१ तै२ मै ग- पृथग्भूतश्च सर्वपदार्थेभ्योऽन्तरिक्षम् ।

१९ को१- गणनाया । २० आ क ट ग ५ को१- तथा । २१ ड- एव प्रश॰, ग- ॰त्रिधामा वा । २२ ड ग- 'यवमय' नास्ति ।

सर्वेषामभिगमयन्नवे घ्यत्यछम्बट्कारुꣳ हिरण्यं ददाति तेज एवा(५)वे रुन्द्धे तार्प्यं ददाति पशूनेवावं रुन्द्धे धेनुं ददात्याशिषं एवावं रुन्द्धे साम्नो वा

सर्वेषाम् । अभिगमयन्नित्यभि-गमयन् । अवेति । द्यति । अछम्बट्कारमित्यछम्बट्-कारम् । हिरण्यम् । ददाति । तेजः । एव (५) । अवेति । रुन्द्धे । तार्प्यम् । ददाति । पशून् । एव । अवेति । रुन्द्धे । धेनुम् । ददाति । आशिषः इत्या-शिषः । एव । अवेति । रुन्द्धे । साम्नः । वै ।

सर्वेषामभिगमयन्नित्यादि । व्याख्यातम् (तैस २.३.६) ॥

हिरण्यमिति ॥ अन्वाहार्यमासाद्य सहस्र [12]हिरण्य [13]ददाति । तार्प्यं घृताक्त वासः, तत् घृतसंबन्धात् पशुलाभहेतुः । धेनुः प्रत्यग्रप्रसवा गौः । "सा प्रीणनहेतुत्वात्[19]" तत आशिषां लाभः । साम्नो वा इति । तस्य तैजसत्वात् "सर्वं तेजः सामरूप्यम्" (तैब्रा ३.१२.९)

उपलभ्यन्त इत्यस्ति तयोरेकविधत्वम् । अन्तरिक्षवर्तिनस्तु यक्षगन्धर्वादयो नोपलभ्यन्त इति वैलक्षण्यम् । एवं [23]यवमयस्य [24]इतरवैलक्षण्यादन्तरिक्षरूपत्वम् । तच्च [25]समृद्ध्यै संपद्यते ॥

सर्वेषामिति ॥ [26]त्रिधातुवत (तैसं २.३.६) त्रिष्वपि पुरोडाशेषु सकृदेव हस्तस्पर्शेनावदानं विधत्ते– 'सर्वेषामभिगमयन्नव द्यत्यछम्बट्कारम्' इति ॥

हिरण्यमिति ॥ यदुक्तं सूत्रकारेण–"हिरण्यं तार्प्यं धेनुरिति दक्षिणा" (आपश्रौ १९.२७.२१) इति तदेतद्विधत्ते –'हिरण्यं ददाति तेज एवाव रुन्द्धे तार्प्यं ददाति पशूनेवाव रुन्द्धे धेनुं ददात्याशिष एवाव रुन्द्धे साम्नो वा एष वर्णो यद्धिरण्यं यजुषां तार्प्यमुक्थामदानां धेनुरेतानेव सर्वान् वर्णानव रुन्द्धे' इति ॥ हिरण्यस्य [27]तेजस्वित्वात् तद्दानेन तेजःप्राप्तिः । तार्प्यस्य [28]घृताक्तवस्त्रत्वात् तद्दानेन पशुप्राप्तिः । धेनोः कामधेनुत्वसाम्यात् तद्दानेनाऽऽशिषां प्राप्तिः । "सर्वं तेजः सामरूप्यꣳ ह शश्वत्" (तैब्रा ३.१२.९) इत्याम्नानाद्धिरण्यस्य सामवर्णत्वम् । "यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिम्" (तैब्रा ३.१२.९) इत्याम्नातत्वात्, तार्प्यस्य च राजसूये *क्षत्रियेण परिहितत्वादीदृशं संबन्धमभिप्रेत्य तार्प्यं यजुषां वर्णः स्वरूपमित्युच्यते ।

१२–१९. मै– सप्रीणनहेतुत्वात् ।

२३. इ – यवमानस्य । २४. अ – वैलक्षण्यात्, उ.पा – इह वैलक्षण्यात् । २५. हा– समृद्ध्यैव । २६. हो१– त्रिधातावेव । २७. इ– तेजस्त्वात्° । २८. हो१– °वस्तुत्वात्° । *[द्र. तैब्रा १.७.६–"क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति तार्प्यं चोर्णायं च प्रयच्छति सयोनित्वाय"; आपश्रौ १८.१४.१ ] ।

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
उदग्ने शुचयस्तव॰ वि ज्योतिषा॰–

रेवतीः । नः । सधमाद इति सध मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि वाजाः ।
क्षुमन्तः । याभिः । मदेम ॥
उदिति । अग्ने । शुचयः । तव ॥ वीति । ज्योतिषा ॥

सह अभिषुणाव"। यद्वा– सोतुर्नाद्भिर्म्या "सुयत सुष्ठु यन्त्रित, अत एव 'नार्वा नारणशील स्वकार्यकरणे सुप्रतिष्ठित । यद्वा–अत न अर्वा न पाप, कार्यविरोधित्वमेव पापम्। अर्तेः "अन्येभ्योऽपि दृश्यन्ते" (पा ३ २ ७५) इति वनिप्। ततस्तुष्टस्त्वमस्मभ्यम् अभिमत देहीति ॥

अथ चतुर्थस्य याज्या, 'कदा चन' इति सूत्रकारवचनात् (द्र आपश्रौ १९ २३ २, बौश्रौ १३ २९), सैव पञ्चमस्य च "इन्द्राय शाक्वराय" (तैस २ ३ ७) इत्यस्य पुरोनुवाक्या। पञ्चमस्य याज्या– 'रेवतीर्न' इति गायत्री, इयमेव षष्ठस्य च "इन्द्राय रैवताय" (तैस २ ३ ७) इत्यस्य पुरोऽनुवाक्या। व्याख्याता चेयम्–"अन्वह मासा" (तैस १ ७ १३) इत्यत्र। रेवत्यो धनवत्य "सधमाद" सह मादयन्त्य । "तुविवाजा बहुन्ना समृद्धान्ना ना अस्माक "सन्तु अस्मदीया वा "इन्द्रे सन्तु, ईदृश्य सन्तु आपो गावो वा। "याभि वय "क्षुमन्त कीर्तिमन्त "मदेम मादयेमेति ॥

"यश्चक्षुष्काम स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपाल" (तैस २ ३ ८) इत्यत्र 'अग्नये भ्राजस्वते' इत्यस्य पुरोनुवाक्या– 'उदग्ने शुचयस्तव' इति गायत्री ॥ व्याख्यातेय "त्वमग्ने रुद्र" (तैस

रेवतीरिति ॥ शाक्वरेन्द्रस्य याज्या, रैवतेन्द्रस्य पुरोनुवाक्येत्युभयरूपामृच पठति– 'रेवतीर्न सधमाद इन्द्रे सन्तु तुविवाजा । क्षुमन्तो याभिर्मदेम' इति ॥ रेवत्यो धनवत्य, 'सधमाद अस्माभि सह मादयन्त्यो हर्षयुक्ता, 'तुविवाजा बह्वन्नोपेता आप 'न अस्माक स्वामिनि 'इन्द्रे 'सन्तु अस्माक सुखाय तिष्ठन्तु। 'याभि अद्भि सह वय 'क्षुमन्त शब्दयन्त इन्द्र स्तुवन्त 'मदेम 'हृष्याम ॥

उदिति ॥ "यश्चक्षुष्काम स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्" (तैस २ ३ ८) इत्यत्राऽऽग्नेये कर्मणि याज्यानुवाक्ययो प्रतीके दर्शयति– 'उदग्ने शुचयस्तव, वि ज्योतिषा' इति ॥ 'उदग्ने शुचयस्तव शुक्रा' इत्येषा पुरोनुवाक्या। सा च प्रथमकाण्डस्य तृतीयप्रपाठके (तैस १ ३ १४) व्याख्याता। 'वि ज्योतिषा बृहता भात्यग्नि' इत्येषा याज्या। सा तु प्रथमकाण्डस्य द्वितीयप्रपाठके (तैस १ २ १४) व्याख्याता ॥

४५-४५ त१ त२ मै ल– अद्रि सुषाव ५२– अद्रि त्वा सुषाव। ४६ त१ त२ ल– 'सधमाद' नास्ति।

१९ ह–हृष्यास ।

–दु त्यं जातवेदसम्॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशं विचक्षण ॥

उदिति। उ। त्यम्। जातवेदसमिति जात-वेदसम् ॥
सप्त। त्वा। हरितः। रथे। वहन्ति। देव। सूर्य।
शोचिष्केशमिति शोचि –केशम्। विचक्षणेति वि-चक्षण।

१·३·१४ ) इत्यत्र। तस्याः[47] इह प्रतीकग्रहणम्। हे vअग्ने, ते vतव vशुक्राः निर्मला. vशुचय. रश्मयः vभ्राजन्तः राजन्तः vउत् vईरते उद्गच्छन्ति तव। किं च vतव vअर्चय तेजांसि vज्योतींषि ग्रहनक्षत्राणि भवन्ति। यद्वा– तवार्चयितार ज्योतींषि भवन्तीति ॥

तत्रैव याज्या 'नि ज्योतिषा' इति त्रिष्टुप् ॥ इयमपि "कृणुष्व पाज." (तैस १·२ १४) इत्यत्र व्याख्याता। [48]प्रतीकमात्रमत्रास्या गृह्यते। अयम् vअग्निः vबृहता vज्योतिषा vनि vभाति निविध भाति, vविश्वानि च vमहित्वा माहात्म्यानि vआवि· vकृणुते आविष्करोति। vअदेवी अदेवनशीलाश्च vदुरेवाः दुःखेन गन्तव्याः vमायाः vप्र vसहते प्रकर्षेणाभिभवतु। किं च– vशृङ्गे गोशृङ्गस्थानीये ज्वाले vशिशीते निशितीकरोति। किमर्थम्? रक्षसो विनाशार्थमिति ॥

अथ [49]सौर्यस्य चरो. पुरोऽनुवाक्या– 'उदु त्यम्' इति गायत्री ॥ व्याख्याता [50]चेय [51]ग्रहप्रश्ने ( तैस १·४·४३ )। प्रतीकग्रहणमिदम्। vदेव vसूर्यं vजातवेदस जाताना वेदितार देव vकेतव रश्मयः vउत् vवहन्ति विश्वस्य लोकस्य vदृशे दर्शनार्थमिति ॥

[52]तत्रैव पुरोऽनुवाक्या विकल्प्यते–'सप्त त्वा' इति गायत्री ॥ हे vदेव vसूर्य, त्वा vसप्त सर्पणशीलाः vहरित. रसभरणा. रश्मय vरथे रहसो रमन्तेऽस्मिन् आप इति वा, रथे मण्डले vवहन्ति। vशोचिष्केश दीप्तरश्मि केशस्थानीया रश्मयः केशाः। हे vविचक्षण प्रकाशक।

उदिति ॥ सौर्ये कर्मणि पुरोनुवाक्यायाः प्रतीकं दर्शयति–'उदु त्यं जातवेदसम्' इति ॥ सेयं प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्याता ( तैस १·४·४३ ) ॥

सप्तेति ॥ तत्रैव याज्यामाह– 'सप्त त्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशं विचक्षण' इति ॥ हे vसूर्य vदेव, त्वां vसप्त vहरितः अश्वा. vरथे vवहन्ति। कीदृशं त्वाम्? vशोचिष्केश शोचींषि दीप्यमानाः केशस्थानीया रश्मयो यस्य तादृशम्। हे vविचक्षण इति सूर्यविशेषणम् ॥

४७. मै– तस्य। ४८. मै– प्रतीकग्रहणमत्रास्या, मै४ – प्रतीकमात्रमस्याः। ४९. तै१.तं२ मै.६– सौम्यस्य। ५०. तै१.तं२– इयम्। ५१. मै४– ग्रहप्रकरणे। ५२. तै१.तं२– अत्रैव।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ( ४ )थ ॥

चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ॥
एति । अप्राः । द्यावापृथिवी इति द्यावा-पृथिवी । अन्तरिक्षम् ।
सूर्यः । आत्मा । जगतः । तस्थुषः ( ४ ) । च ॥

चष्टिर्दर्शनकर्मा । विविधं चष्टे पश्यतीति विचक्षणः । "अनुदात्तेतश्च हलादेः" (पा ३ २ १४९ ) इति युच् । स त्वमस्माकं चक्षुर्देहीति ॥

तत्रैव याज्या– 'चित्रम्' इति त्रिष्टुप् ॥ चित्रं चायनीयं सर्वलोकपूजितं देवानां रश्मीनामिन्द्रादीनां [53]वा ऋत्विजाम्[53] अनीकं मुखस्थानीयं समूहस्थानीयं वा उत् अगात् उद्गच्छति सर्वात्मकसमष्टिरूपत्वात् । किं च– चक्षुः स्थानीयं ख्यातिकरं वा मित्रादीनाम् । अथ देवः द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च आ अप्राः [54]आपूरयति तेजसा । प्रा पूरणे, पुरुषव्यत्ययः । जगतः जङ्गमस्य सर्वस्य तस्थुषः स्थावरस्य सर्वस्य आत्मा सूर्यः एकः प्रेरको ना सर्वस्य तस्मादात्मा, सर्वोपकारकत्वात् । यद्वा– "यश्चायं पुरुषे । यश्चासावादित्ये । स एकः" ( तैउ २ ८ ) इति दर्शनात् आत्मा सर्वस्य । अत्राचार्येण 'समानी याज्यानुवाक्ये भवतः' ( तस २ ३ ८ ) इत्येतदनुसारेण [55]उक्तम्– "उदग्ने शुचयस्तव, वि ज्योतिषा, उदु त्यं जातवेदसं, चित्रं देवानाम्, [56]उदग्ने शुचयस्तव, वि ज्योतिषा[56]" ( द बौश्रौ १३ ३० ) इति हविषां याज्यानुवाक्याः, "उदु त्यं जातवेदसं, सप्त त्वा हरितो रथे, चित्रं देवानाम् इति पिण्डान् प्रयच्छति" (बौश्रौ १३ ३० ) इति ॥

**चित्रमिति ॥** तत्रैव विकल्पितां याज्यामाह– 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च' इति ॥ चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनाम् अनीकं सैन्यसदृशं मण्डलम् उदगात् उदेति । कीदृशम्? मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयम् । तन्मण्डलस्थः सूर्यः जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा । स लोकत्रयम् आऽप्राः सर्वतः पूरितवान् ॥

५३–५३ मै४– ऋत्विजां वा । ५४–५४ पर,मै४– आऽप्रात् आपूरयति, मै– आ (प्रागा ) पूरयति । ५५ त१ त२,मै ल–'उक्तम्' नास्ति । ५६–५६ मै– 'उदग्ने शुचयस्तव वि ज्योतिषा' नास्ति ।

विश्वे॑ दे॒वा ऋ॑ता॒वृध॑ ऋ॒तुभि॑र्हवन॒श्रुतः॑ । जु॒षन्तां॒ युज्यं॒ पयः॑ ॥

विश्वे॑ । दे॒वा । ऋ॒ता॒वृध॒ इत्यृ॑त वृधः॑ । ऋ॒तुभि॒रित्यृ॒तु भिः॑ । ह॒व॒न॒श्रुत॒ इति॑ हवन-श्रुतः॑ । जु॒षन्ता॑म् । यु॒ज्य॑म् । पयः॑ ॥

अथ " वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकाम " ( तैस २ ३ ९ ) इत्यस्या पुरोऽनुवाक्या– ' विश्वेदेवा ऋतावृध ' इति गायत्री ॥ विश्वे देवा ऋतावृध ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितार । ण्यन्तात् क्विप्, " बहुलमन्यत्रापि॰ " ( उ १९० ) इति णिलुक्, " अन्येषामपि दृश्यते " ( पा ६ ३ १३७ ) इति पूर्वपदस्य दीर्घत्वम् । हवनश्रुत आह्वानस्य श्रोतार आह्वानप्रयोजनस्य कर्तार इति यावत् । ह्वयतेर्लिटि " बहुल छन्दसि " (पा ६ १ ३४) इति सम्प्रसारणम् । ते ऋतुभि कालावयवै पर्वादिभि सह जुषन्ता सेवन्ता युज्य योग्य पय पयसि चरुम्, अत एव वचनादिति ॥

तत्रैव याज्या– ' विश्वे देवा शृणुत ' इति त्रिष्टुप् ॥ हे विश्वे देवा, मे मम इम हवम् आह्वान शृणुत । ये यूयम् अन्तरिक्षे स्थ, ये च उप समीपे पृथिव्या स्थ, ये च दिवि द्युलोके स्थ । ये च अग्निजिह्वा अग्ने जिह्वाया स्थिता हविर्भागार्हा । तात्स्थ्यात् ताच्छब्द्यम् । यद्वा– अग्निर्जिह्वास्थानीयो येषाम् । छान्दसमन्तोदात्तत्वम् । उत वा अपि वा ये

विश्व इति ॥ " वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकाम " ( तैस २ ३ ९ ) इत्यत्र पुरोनुवाक्यामाह– ' विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुत । जुषन्ता युज्य पय ' इति ॥ विश्वे देवा युज्य योग्य पय क्षीरवत् सारभूत हवि जुषन्ताम् । कीदृशा देवा ? ऋतावृध ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितार, ऋतुभि हवनश्रुत तैस्तैर्ऋतुभिरुपलक्षिते कर्मण्याह्वानस्य श्रोतार ॥

विश्वे इति ॥ तत्रैव याज्यामाह– ' विश्वे देवा शृणुतेमं हव मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ' इति ॥ हे विश्वे देवा, मे मदीयम् इम हवम् आह्वान शृणुत । ये यूयम् अन्तरिक्षे स्थ अन्तरिक्षलोके स्थिता ये च उप समीपे पृथिव्या स्थिता ये च द्यवि द्युलोके स्थ, ये च अग्निजिह्वा अग्निरेव जिह्वा येषा ते अग्निजिह्वा अग्निद्वारेण हविष स्वीकर्तार उत वा अन्येऽपि वा यजत्रा यष्टव्या ते सर्वेऽपि अस्मिन् बर्हिषि यज्ञे आसद्य उपविश्य मादयध्व हृष्टा भवत यजमान हर्षयध्वम् ॥

५७ तै१ तै२– इत्यस्य । ५८ तै१ तै२ मै८ – ' यावत् ' नास्ति । ५९. मै४ – ' योग्यं ' इत्यस्यानन्तरं ' युजि साधु ' । ६० मै४– चरु । ६१ तै१ तै२ मै– ' अग्निजिह्वा ' इत्यस्यानन्तरं ' ये च ' । ६२. मै– हविर्भाज ।

२० ह– ' पय ' नास्ति । २१. ह हो१– च यूयम् । २२. ह– स्थ । २३–२३ हो१– अग्निद्वारा हवि स्वीकुर्वन्तु ह– अग्निद्वारा हवि स्वीकुर्वन्ति । २४–२४ ह हो– किन्तु कालान्तरे यष्टव्या ते सर्वेऽपि पूर्वं दर्शपूर्णमासावुपक्रम्यन्ताम् । श्रुत्वा च अस्मिन् बर्हिषि यज्ञे आगत्य उपविश्य मादयध्वं यजमानं हर्षयध्वम् ।

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्॥ १४ ॥

[ तनीशानमदित्तस्तुर्पत्रिंशच्च । ] [ देवा मनुष्या देवासुरा अब्रुवन् देवासुरास्तेषां गायत्री प्रजापतिस्ता यत्राग्ने गोभिश्रियत्रो मारुत देवा वसव्या अग्ने मारुतमिति देवा वसव्या देवा शर्मण्या मर्माणि त्वष्टा हतपुत्रो देवा वै राजन्यान्नरोनवधर्तुर्दश॥ ] [ देवा मनुष्या प्रजा पुरस्तन् देवा वसव्या परिदिष्यादिदमस्म्यष्टाचत्वारिंशत्॥ ] [ देवा मनुष्या मादयध्वम्॥]

विश्वे। देवा। शृणुत। इमम्। हवम्। मे। ये। अन्तरिक्षे। ये। उपति। द्यवि। स्थ॥
ये। अग्निजिह्वा इत्यग्नि जिह्वा। उत। वा। यजत्रा। आसद्येत्या सद्य। अस्मिन्। बर्हिषि।
मादयध्वम्॥ १४॥

[ भैस काम ]

यजत्रा [63]यजनीया पूजामात्रभान। ते सर्वेऽपि यूयम् अस्मिन् बर्हिषि यज्ञे आसद्य आसित्वा मादयध्व तृप्यत। मद तृप्तियोगे चौरादिक, अनुदात्तेत्, तृप्ताश्चास्माक ग्राम साधयतेति॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये द्वितीये काण्डे चतुर्थे प्रश्ने चतुर्दशोऽनुवाक समाप्त॥

समाप्तश्च प्रपाठक॥

अत्र विनियोगसंग्रह—

"आदित्येष्टौ नवो द्वे तु प्राच्यामित्यादिक त्रय (चाष्टक) म्।
[25]राजादिगुणकेन्द्रस्य पुरोडाशसमूहके॥ १॥
आग्नेय उद्विज्यो द्व उदु त्य जातवेदसम्।
सप्त चित्र त्रय सौर्यं साग्रहण्या उभे इमे॥
विश्वे देवा इति प्रोक्ता मन्त्रा [26]सप्तदशैव हि॥ २॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाक॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे चतुर्थ प्रपाठक॥ ४॥

६३ मै४- पूजनीया।

२५ अ ठ जो पा हा- सामादिगुण°। २६ ठ ग्र-सप्तदोह।

# ( अथ द्वितीयकाण्डे पञ्चमः प्रपाठकः )

हरिः ॐ ।

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां

विश्वरूप इति विश्व-रूप । वै । त्वाष्ट्र । पुरोहित इति पुर -हित । देवानाम् । आसीत् । स्वस्रीय । असुराणाम् ।

अथ दर्शपूर्णमासब्राह्मण प्राजापत्य काण्ड, विश्वरूप इत्यादय षडनुवाका । तत्राग्नीषोमीयमेकादशकपाल पूर्णमासे विधास्यन् तदर्थमर्थवाद प्रस्तौति– विश्वरूप नाम त्वष्टु पुत्र देवाना पुरोहित आसीत् । "पुरोऽव्ययम्" (पा १ ४ ६७) इति गतित्वात् "गतिरनन्तर" (पा ६ २ ४९) इति गते प्रकृतिस्वरत्वम् । असुराणा स्वस्रीय स्वसु पुत्र ।

यस्य नि श्वसित वेदा यो वेदेभ्योऽखिल जगत् ।
निर्ममे तमह वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
द्वितीयादिचतुर्थान्तैस्त्रिभिरेतै प्रपाठकै ।
उक्ता याज्येष्टयस्तासा प्रश्निस्त्वथ वर्ण्यते ॥ २ ॥
पौरोडाशिककाण्डे तु मन्त्रव्याख्यानमीरितम् ।
विधयो मन्त्रसबद्धा बहुध प्रतिपादिता ॥ ३ ॥
तच्छेषविधयो याज्या व्याख्येया हौत्रमन्त्रका ।
तत्रोऽनुवाकषट्क स्यात् वर्ण्यते याज्ययद्वये ॥ ४ ॥
प्रपाठक पञ्चमेऽनुवाका द्वादश संस्थिता ।
आद्यषट्के पूर्वपट्क विधिशेषो विविच्यते ॥ ५ ॥
व्याख्यात हौत्रमन्त्राणा सन्निधि प्राय उत्तरे ।
दर्शपौर्णमासयोर्विधो विधिन्यायाऽऽसयोरयो ॥ ६ ॥

विश्वरूप इति ॥ अत्र द्वितीयानुवाके पौर्णमास्यामग्नीषोमीयपुरोडाशं विधित्सुः पुरोडाशस्य प्रशसार्थमाख्यायिकामाह– 'विश्वरूपो वै त्वाष्ट्र पुरोहितो देवानामासीत् स्वस्रीयो असुराणा [illegible] [illegible] ॥ विश्वानि बहूनि रूपाणि यस्यासौ विश्वरूप । त्रिणि शिरांसि [illegible]

तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं वि पर्यावर्तयतीति

तस्य । त्रीणि । शीर्षाणि । आसन् । सोमपानमिति सोम पानम् । सुरापानमिति सुरा पानम् । अन्नादनमित्यन्न अदनम् । स । प्रत्यक्षमिति प्रति अक्षम् । देवेभ्य । भागम् । अवदत् । परोक्षमिति पर –अक्षम् । असुरेभ्य । सर्वस्मै । वै । प्रत्यक्षमिति प्रति अक्षम् । भागम् । वदन्ति । यस्मै । एव । परोक्षमिति पर –अक्षम् । वदन्ति । तस्य । भाग । उदित । तस्मात् । इन्द्र । अबिभेत् । ईदृङ् । वै । राष्ट्रम् । वीति । पर्यावर्तयतीति परि आवर्तयति । इति ।

" स्पसुश्छ " (पा ४ १ १४३) इति छ, ईयादेशश्च (पा ७ १ २)। तस्य सोमपानादीनि त्रीणि शीर्षाणि आसन् । " शीर्षंश्छन्दसि " (पा ६ १ ६०) इति शीर्षादेश । सोम पीयते अनेन इति करणे ल्युट् । एव सर्वत्र । स देवेभ्य प्रत्यक्ष भागम् अवदत् यूयमेव भागार्हा इति देवाना सनिधौ देवानवदत् । प्रत्यक्षपरोक्षशब्दौ व्याख्यातौ (तैस १ ७ ३)। असुरेभ्य तु परोक्ष भागमवदत्, स्वसीयत्वात् तेषामसनिधावेवासुरा भागार्हा इत्यवदत् । अथव कुर्वतोऽस्य दुष्टाभिप्रायत्वमस्तीत्याह– सर्वस्मा इति । यस्मै भाग दास्यन् भवति तस्मै सर्वस्मै [1]प्रत्यक्ष भाग [2]वदन्ति लौकिका [2]। त्वमेव सर्वमर्हसि इति सनिधा [3]अपहृदया एव वदन्ति । तस्मात् यस्मै एव परोक्ष वदन्ति असनिधा स्वयमेव [4]भागभोक्तृत्वेन बहु मन्यते [5]तस्य भाग उदित उक्त उद्धृत सुनिश्चित इति यावत्, अन्योऽनुक्तप्राय । यद्वा– हस्तस्थप्राय । " कर्षात्वतो घञोऽन्त उदात्त " (पा ६ १ १५९) इति भागशब्द अन्तोदात्त । [6]तस्मात् तथा कुर्वतो विश्वरूपात् इन्द्र अबिभेत् ईदृक् ईदृशमाचरन् [6]राष्ट्रम् अपि [6] अस्माकमपि वि पर्यावर्तयति [7]अस्मत्तोऽपहृत्य असुरेभ्यो दास्यतीति ॥

[9]बहुरूपत्वम् । यो विश्वरूपनामकस्त्वष्टु पुत्र स देवाना पुरोहित न तु शरीरसबन्धी, असुराणा तु भागिनेय । स च [10] सात्त्विकेन शिरसा सोम पिबति । [11]राजसेन अन्नमत्ति । [12]तामसेन सुरा पिबति । स च यज्ञमण्डपेषु गत्वा सर्वेषा श्रोत्रप्रत्यक्ष यथा भवति तथा देवेभ्य हविर्भागो युक्त इति [13]वदति । सर्वेषा परोक्ष यथा भवति तथा रहस्ये ऋत्विग्भि सह भय हविर्भाग असुरेभ्य [14]एव युक्त

१ मै– प्रीयते । * [ सभावित पाठ, मै-मुद्रितपुस्तके लिखितपुस्तकेषु ‘अप्रत्यक्षम्’ इति । ]। २–२ मै– वदति लौकिक । ३ मै – अह्वदया । ४ त१ त२ त३ मै ल– भागभाक्त्वेन । ५ प२ ल– तस्मात् । ६–६ त१ त२ त३– राष्ट्रमाभ विट । ७–७ त१ त२ त३ अस्मात् ता प्रापयित्वा ।

९ आ ड– विश्वरूपत्वम् । १० ड – सात्त्विक° । ११ ड श्र हो१ – राजस° । १२ ड श्र हो१– तामस° । १३ श्र– वक्ति । १४ आ– ‘एव’ नास्ति ।

**तस्य वज्रमादाय शीर्षाण्यच्छिनद्यत् सोमपान( १ )मासीत् स कपिञ्जलोऽभवद्यत् सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरिस्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति**

तस्य । वज्रम् । आदायेत्या दाय । शीर्षाणि । अच्छिनत् । यत् । सोमपानमिति सोम पानम (१)। आसीत् । स । कपिञ्जल । अभवत् । यत् । सुरापानमिति सुरा पानम् । स । कलविङ्क । यत् । अन्नादनमित्यन्न अदनम् । स । तित्तिरि । तस्य । अञ्जलिना । ब्रह्महत्यामिति ब्रह्म हत्याम् । उपेति । अगृह्णात् । ताम् । संवत्सरमिति सम् वत्सरम् । अबिभ । तम् । भूतानि । अभीति । अक्रोशन् । ब्रह्महन्निति ब्रह्म हन् । इति ।

तस्येत्यादि ॥ गतम् । vकपिञ्जल [८]अपाश्वाति (?) । [९]vकलविङ्क चटकविशेष । vतित्तिरि [१०]चिच्चिदिति [११]कटुकरावीति । अञ्जलिनेति । [१२]बुद्धिपूर्वकृतत्वख्यापनार्थम् अञ्जलिग्रहणम् । vतस्य इति सबन्धसामान्ये षष्ठी, तत्सबन्धेन [१३]उत्थिता ब्रह्महत्येति । तस्य वधेनेति वा सामर्थ्याल्लभ्यते । " हनस्त च " ( पा ३ १ १०८ ) इति हन्ते क्यप । तामिति । अकृतप्रायश्चित्त एव vता vब्रह्महत्या vसवसर भृतवान् । vब्रह्महन् vइति ब्राह्मण हतवानिति, किंरूपमिद तवेति vत vभूतानि भूतजातान्यनिन्दन् । यद्वा– तस्याभिमुखे स्थित्वा भूतानि ब्रह्महन्नित्याक्रोशमकुर्वन् । तत vस इन्द्र vपृथिवीम् vउप vअसीदत् [१४]उपसन्न आह[१४] अस्या

[१५]अतस्तानेवोद्दिश्य प्रयच्छत [१५]इत्येव वदति । तेषामृत्विजा तस्मिन् परोक्षवादे विश्वास उत्पन्न । तस्य परोक्षवादस्य हृदयपूर्वकत्वात् । लोकेऽपि तवाय भाग इति [१६]सर्वस्मै पुरुषाय प्रीतिमुत्पादयितुं तत्समीपे सर्वे [१६]वदन्ति । हृदयपूर्वकत्वाभावाच्च [१७] स उदितो भवति [१७] । [१]परोक्ष यदर्थं तु भाग उच्यते [२]तस्य एव [३]भाग [१८]हृदयपूर्वकत्वात् [४]उदित भवति । एव वृत्तान्तं श्रुत्वा [५]तस्मात् विश्वरूपात् [६]इन्द्र [७]अबिभेत् । किमिति ? [१९]ईदृश स्वामिद्रोही सर्वथा कालान्तरे [१९] [८]राष्ट्र नि [९]पर्यावर्तयति [१०]इति । असत्तोऽपनीय सुरेभ्य समर्पणं विपर्यावृत्ति । तत तस्य द्रोहिण शिर सु छिन्नेषु तानि शिरांसि पक्षित्रयरूपेणोत्पन्नानि ॥ तस्येति ॥ तस्येन्द्रस्य प्रत्यवाय जनापवाद च दर्शयति–' तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ताꣳ संवत्सरमबिभर्स्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति ' इति ॥ [१]तस्य [२]असुरस्य वधेन निष्पन्ना या ब्रह्महत्या ताम् [३]अञ्जलिना स्वीचकार । पापिना शिक्षायामीश्वरेण नियुक्ताना यमचित्रगुप्तादीना पुरतोऽञ्जलि कृत्वा

८ मै४– अपाक्याती (!)। ९. तै१ तै२ तै३– कलपिङ्क । १० मै ८– तिरश्चिदीनि (!)। ११ मै४– कटुक रावी । १२ मै४ – बुद्धिपूर्वकतत्व°, तै१ तै२ तै३ – °कृतत्वशापनार्थम्, तै२ तै३– °शापनार्थम् । १३ मै– आत्मा , ८– आत्मने । १४–१४ तै३– ' उपसन्न आह ' नास्ति ।

१५ इ–इति तस्यान चोद्दिश्य अ उ पा–इति तस्यान् चोद्दिश्य, जो ना हा– इत्यतस्तान° । १६ आ–इति स एवं । १७–१७ ड ग१ हो१– तत्परम् । १८ ड ग१ हो१– हृदयपूर्वकम् । १९–१९ आ– ईदृक्स्वामिद्रोहं सर्वथा कृत्वा, ड द१ हो– ईदृशस्त्वय द्रोही । २० क ड ग१ हो१– विश्वरूप्य

स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं वृणै खातात् पराभविष्यन्तीं मन्ये ततो मा परा भूवमिति पुरा ते (२) संवत्सरादपि रोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपि रोहति वारेवृत२ ह्यस्यै

स । पृथिवीम् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म-हत्यायै । तृतीयम् । प्रतीति । गृहाण । इति । सा । अब्रवीत् । वरम् । वृणै । खातात् । पराभविष्यन्तीति परा-भविष्यन्तीं । मन्ये । ततः । मा । परेति । भूवम् । इति । पुरा । ते (२) । सवंत्सरादिति सं-वत्सरात् । अपीति । रोहात् । इति । अब्रवीत् । तस्मात् । पुरा । संवत्सरादिति सं-वत्सरात् । पृथिव्यै । खातम् । अपीति । रोहति । वारेवृतमिति वारे-वृतम् । हि । अस्यै ।

ब्रह्महत्याया [v]तृतीय भाग [v]प्रति [v]गृहाण [v]इति । "पूरणाद्भागे तीयादन्" (पा ५ ३ ४८) इति स्वार्थिकोऽन्प्रत्यय । षष्ठ्यर्थे चतुर्थी (पा २ ३ ६२ वा १) । सेत्यादि । किं वृणै । प्राप्तकाले लोट् (पा ३ ३ १६३) । [१५-v]खातात् भूमे[१५] यत्र मृद खनति, पराभवो विनाश पराभविष्यामीति [v]मन्ये, [v]तत निमित्तात् अह [v]मा [v]परा [v]भूवम् [v]इति । अथेन्द्र [v]अब्रवीत्– सवत्सरसमाप्ते प्राक् तत्र खातम् [v]अपि [v]रोहात् विरोहति । "लेटयाडागम" (पा ३ ४ ९४) तस्मादित्यादि । गतम् । [१६]वारोऽभिमतवरलाभ । तत [v]तृतीय [v]प्रति [v]अगृह्णात् पृथिवी ब्रह्महत्याया ॥

निर्भय सन् ब्रह्महत्या मया बुद्धिपूर्वकमेव कृतेत्येवमङ्गीचकारेत्यर्थ । प्रायश्चित्तमकृत्वा [v]संवत्सर निरन्तर [२१]ताम् ब्रह्महत्यामङ्गीकृत्यैव तस्थौ । आत्मतत्त्वज्ञानेन पापलेपाभावाद्धीत्यभावस्तस्य युक्त । अत एव कौषीतकिन इन्द्रवाक्यम् [२२]एवम् आमनन्ति – "यन्मा विजानीयात् । त्रिशीर्षाण त्वाष्ट्रमहनम् । अरुर्मुखान् यतीन्सालावृकेभ्य प्रायच्छम्" (कौउ ३ १) इत्यादि । दुरितताभावेऽपि सर्वप्राणिन [v]तम् इन्द्र [v]ब्रह्महन् [v]इति एव सबोध्यामितस्तस्याऽऽक्रोश कृतवन्त ॥

स इति ॥ ततस्तस्य जनापवादस्य परिहारायेन्द्रेणानुष्ठितम् [२३]उपायविशेष दर्शयति– 'स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीय प्रति गृहाणेति साऽब्रवीद्वर वृणै खातात् पराभविष्यन्ती मन्ये ततो मा परा भूवमिति पुरा ते सवत्सरादपि रोहादित्यब्रवीत् तस्मात् पुरा सवत्सरात् पृथिव्यै खातमपि रोहति वारेवृतं ह्यस्यै तृतीय ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्नि श्रद्धादेव स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्ण ' इति ॥ [v]उपासीदत् उपेत्य प्रार्थितवान् । [v]खातात् [v]पराभविष्यन्ती [v]मन्ये, जना स्वेच्छया तत्र तत्र भूमिं खनन्ति तदुपद्रवात् पराभूता पीडिता भविष्यामीति मनसा चिन्तयामि । खातप्रदेश [२४]सपूरणमन्तरेण पांसुप्रक्षेपात् तृणाद्युत्पत्तेर्वा [v]अपि [v]रोहात् पूरितो भूयादिति वर । तदिदम्

१५–१५ मै४– खात श्वभ्र त३– खातात् भू' । १६–१६ तं१ तर.त३ मै ल– वरे हित वरणवाल ।

२१. आ– 'ताम्' नास्ति । २२ आ ङ– एतत् । २३ ङ – उपायम् । २४ भू– सवत्सरमात्रे, क ङ हो१– सवत्सरमात्रेण ।

तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्णः स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृक्णात् ( ३ ) पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत्

---

तृतीयम् । ब्रह्महत्याया इति ब्रह्म हत्यायै । प्रतीति । अगृह्णात् । तत् । स्वकृतमिति स्व कृतम् । इरिणम् । अभवत् । तस्मात् । आहिताग्निरित्याहित अग्नि । श्रद्धादेव इति श्रद्धा देव । स्वकृत इति स्व-कृते । इरिणे । न । अवेति । स्येत् । ब्रह्महत्याया इति ब्रह्म हत्याय । हि । एष । वर्ण । स । वनस्पतीन् । उपेति । असीदत् । अस्यै । ब्रह्महत्याया इति ब्रह्म हत्यायै । तृतीयम् । प्रतीति । गृह्णीत । इति । ते । अब्रुवन् । वरम् । वृणामहै । वृक्णात् ( ३ ) । पराभविष्यन्त इति परा भविष्यन्त । मन्यामहे । तत । मा । परेति । भूम । इति । आव्रश्चनादित्या व्रश्चनात् । व । भूयांस । उदिति । तिष्ठान् । इति । अब्रवीत् ।

---

तदित्यादि ॥ स्वेनैव कृतेन कारणान्तरेण कृत [v]स्वकृतम् । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । [v]इरिणम् ऊषरम् । [v]श्रद्धादेव धार्मिक [v]न [v]अव [v]स्येत् न वसेत् । कश्चिदाह— श्रद्धावान् [17]यष्टुक श्रद्धादेव स [v]स्वकृते [v]इरिणे देवयजनाध्यवसान न कुर्यादिति । अत्रैव हेतु — [v]ब्रह्महत्याय [v]हि [v]एष [v]वर्ण इति ॥

स वनस्पतीनित्यादि ॥ गतम् । [18]वृक्णादिति । छिन्नात् तदवयवात् । वृश्चते निष्ठायाम् "ओदितश्च" (पा ८ २ ४५) इति निष्ठानत्व, तस्यासिद्धत्वात् "स्कोः संयोगाद्योरन्ते च" (पा ८ २ २९) इति सलोप, "खरि च" (पा ८ ४ ५५) इति चर्त्वम् ॥

---

[v]अस्यै [v]धारेयूतम् अस्या पृथिव्या खातपूर्णं चरेण एकधम् । पृथिव्या स्वीकृतस्तृतीयो ब्रह्महत्याया भाग [v]स्वकृतम् [v]इरिणम् [v]अभवत्, इतस्तत आनीय [v]प्रक्षिप्त न [v]भवतीति स्वत सिद्धमूषरक्षेत्रमासीत् । यस्मादिरिणं ब्रह्महत्याया स्वरूप [v]तस्मात् [v]आहिताग्नि [v]श्रद्धादेव तस्मिन् [v]इरिणे कदाचिदपि [v]न तिष्ठेत् । यद्वा — [v]"देवयजनत्वेन नाध्यवस्येत्" । श्रद्धैव देवो यस्यासौ श्रद्धावानित्यर्थ ॥

स इति ॥ एकस्य ब्रह्महत्याभागस्य परिहारोपायमुक्त्वा [v]"भागान्तरस्य तं दर्शयति— 'स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृक्णात् पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत् तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस

---

१७ तै१ तै२— यष्टव । १८ तै१ तै२ ८— प्रकरणादिति ।

---

१८. अ इ उ पा हा— प्रक्षिप्ते १९ इ— भवतीति किन्तु । २७–२७ हो१— अदेवयजनत्वेन नाध्यवस्येत् । १८ आ— अरण्य ।

तस्मादानर्श्वनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्यं (४) काममन्यस्य स स्त्रीषꣳसादमुपासीदद्स्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजा विन्दामहै काममा विजनितोः सं भवामेति तस्मादृत्वियात् स्त्रियः प्रजा

---

तस्मात्। आव्रश्चनादित्या-व्रश्चनात्। वृक्षाणाम्। भूयाꣳस। उदिति। तिष्ठन्ति। वारेवृतमिति वारे वृतम्। हि। एषाम्। तृतीयम्। ब्रह्महत्याया इति ब्रह्म हत्यायै। प्रतीति। अगृह्णन्। सः। निर्यास इति नि-यासः। अभवत्। तस्मात्। निर्यासस्येति नि–यासस्य। न। आश्यम्। ब्रह्महत्याया इति ब्रह्म हत्यायै। हि। एषः। वर्णः। अथो इति। खलु। यः। एव। लोहितः। यः। वा। आव्रश्चनादित्या व्रश्चनात्। निर्येषतीति नि–येषति। तस्य। न। आश्यम् (४)। कामम्। अन्यस्य। सः। स्त्रीषꣳसादमिति स्त्री-सꣳसादम्। उपेति। असीदत्। अस्यै। ब्रह्महत्याया इति ब्रह्म-हत्यायै। तृतीयम्। प्रतीति। गृह्णीत। इति। ताः। अब्रुवन्। वरम्। वृणामहै। ऋत्वियात्। प्रजामिति प्र जाम्। विन्दामहै। कामम्। एति। विजनितोरिति वि जनितोः। समिति। भवाम। इति। तस्मात्। ऋत्वियात्। स्त्रियः। प्रजामिति प्र जाम्।

---

[v]अथो [v]खलु। अस्ति पक्षान्तरं, [v]लोहितः लोहितवर्णः [v]यः [v]वा [v]आव्रश्चनात् [v]निर्येषति निर्गच्छति। येषृ प्रयत्ने, अनुदात्तेत् व्यत्ययेन परस्मैपदम्। अन्यस्येति। अलोहितस्य अनाव्रश्चनान्निर्गतस्य [v]तस्य निर्यासस्य [v]कामम् आश्यं न आश्यं वा। काम्यत इति कामम्॥

स स्त्रीषꣳसादमित्यादि॥ स्त्रियः सह सीदन्त्यस्मिन्निति [v]स्त्रीषꣳसादः स्त्रीसमूहः। छान्दसः साꣳहितिकः षत्वम्। ऋत्वियादिति। ऋतुः प्राप्तोऽस्येति ऋत्वियम् आर्तवम् उच्यते। ' छन्दसि

---

उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाऽऽश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्यं काममन्यस्य' इति॥ [v]वृश्चनात् छेदनात्। [v]आव्रश्चनात् छिन्नप्रदेशात् [v]भूयांसः बह्वङ्कुराः उत्तिष्ठन्तीत्यर्थः। वृक्षान्निर्गत्य घनीभूतो रसः [v]निर्यासः। ब्रह्महत्यायाः स्वरूपत्वात् [v]निर्यासस्य स्वरूपं [v]न भोज्यं भवति। अपि च पक्षान्तरमस्ति, न सर्वोऽपि निर्यासो निषिद्धः किं तु [31]यः लोहितवर्णः [v]यः च [30]छिन्नात् वृक्षप्रदेशान्निर्गतस्तद्द्वयोरुभयं निषिद्धम्। [v]अन्यस्य तु निर्यासस्य स्वरूपं [31]कामम् आश्यम् इच्छायां सत्यामशितुं योग्यम्॥

स इति॥ त्रिषु ब्रह्महत्याभागेषु द्वयोः परिहारमुक्त्वा [32]अवशिष्टस्य परिहारं दर्शयति–'स स्त्रीषꣳसादमुपासीदद्स्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजा

---

१९ भै–'तस्य' नास्ति तरे– तस्य अस्ति च।

२९ क हा– 'य' नास्ति। ३० आ–छिन्न॰। ३१ आ हा–'कामम्' नास्ति। ३२ आ–तृतीयस्याव॰।

**विन्दन्ते काममा विजनितोः सं भवन्ति वारेवृत१ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्य- गृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न सं वदेत् (५) न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति**

विन्दन्ते। कामम्। एति। विजनितोरिति वि-जनितोः। समिति। भवन्ति। वारेवृतमिति वारे-वृतम्। हि। आसाम्। तृतीयम्। ब्रह्महत्याया इति ब्रह्म हत्यायै। प्रतीति। अगृह्णन्। सा। मलवद्वासा इति मलवत् वासा। अभवत्। तस्मात्। मलवद्वाससेति मलवत्-वाससा। न। समिति। वदेत् (५)। न। सह। आसीत। न। अस्याः। अन्नम्। अद्यात्। ब्रह्महत्याया इति ब्रह्म-हत्यायै। हि। एषा। वर्णम्। प्रतिमुच्येति प्रति-मुच्य। आस्ते। अथो इति। खलु। आहुः। अभ्यञ्जनमित्यभि-अञ्जनम्। वाव। स्त्रियाः। अन्नम्। अभ्यञ्जनमित्यभि अञ्जनम्। एव। न। प्रतिगृह्यमिति प्रति गृह्यम्। कामम्। अन्यत्। इति।

---

घस्" (पा ५.१.१०६) इति घस्प्रत्यय, वृषादि (पा ६.१.२०३) द्रष्टव्य । विजनन प्रसव । "भावलक्षणे स्थेण्°" (पा ३.४.१६) इति जने स्तोसुन्प्रत्यय । सभव सयोग । प्रथमसयोगे गर्भो भवतीति यद्यपि द्वितीयादिप्रवृत्ति [२०]अप्रजार्था, तथापि कामानुरूपम् आ विजनितो स भवाम; गर्भं सुख वर्धताम् इति ॥

मलवद्वासा रजस्वला। वासोग्रहण वाससि रज स्पर्शात् प्रभृति अज्ञातेऽप्यप्रायत्य(?)-मस्तीति सूचनार्थम्। तेन वासस्यस्पृष्टे [२१]ज्ञानादूर्ध्वमेवाशुद्धि । तस्मादिति। सहभाषण सवाद । तस्य प्रतिषेध. पुरुषार्थ. प्रासङ्गिक । एव सर्वत्र। नास्या इति। अनया स्पर्शादिना दूषित न अद्यात्। अनया वा दत्त न [२२]गृह्णीयात्। एषा हि ब्रह्महत्यायाः वर्णं प्रति मुच्य देहे बद्ध्वा आस्ते। अथो अपि खलु आहुः तद्विद । अभ्यज्यते परिष्क्रियते शरीरमनेनेति अभ्यञ्जनं तैलादि। तच्च अन्न स्त्रीणा प्रियतमत्वात्, तस्मात् तत् एव तस्या अन्न न [२३]प्रतिग्राह्यम्। केचिदाहु — तया अभ्यञ्जन न कर्तव्यमिति। ब्रह्महत्याभिकायास्तस्या अभिमततम सर्वदा वर्ज्यमिति विवक्षितम् ॥

---

विन्दामहै काममा विजनितो सम्भवामेति तस्मादृत्वियात् स्त्रिय प्रजा विन्दन्ते काममा विजनितो स सं भवन्ति वारेवृत१ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न सं वदेत न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति' इति। स्त्रिय सम्यक् सीदन्ति विश्रम्भेणोपविशन्ति यस्यां समायामिति स्त्रीसमायितेव स्त्रीसंस्कार। 'ऋत्वियात् ऋतुसम्बन्धाद्दीयात् प्रथमसंभोगादेव गर्भे

---

२०. तै१ तै२ग- प्रजार्था। २१ तै३- ज्ञानादूर्ध्वमित्येवा°। २२. तै३ मै४ ई- प्रतिगृह्णीयात्। २३ तै२- प्रतिग्राह्यम्।

यां मलवद्वाससꣳ संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको या( ६ )ऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो

याम्। मलवद्वाससमिति मलवत्-वाससम्। संभवन्तीति सम्-भवन्ति। यः। ततः। जायते। सः। अभिशस्त इत्यभि-शस्तः। याम्। अरण्ये। तस्यै। स्तेन। याम्। पराचीम्। तस्यै। ह्रीतमुखीति ह्रीत-मुखी। अपगल्भ इत्यप-गल्भः। या। स्नाति। तस्याः। अप्स्वित्यप्-सु। मारुकः। या (६)। अभ्यङ्क्त इत्यभि-अङ्क्ते। तस्यै। दुश्चर्मेति दुः-चर्मा। या। प्रलिखत इति प्र-लिखते। तस्यै। खलतिः। अपमारीत्यप-मारी। या। आङ्क्त इत्या-अङ्क्ते। तस्यै। काणः। या। दतः। धावते। तस्यै। श्यावदन्निति श्याव-दन्। या। नखानि। निकृन्तत इति नि-कृन्तते। तस्यै। कुनखी। या। कृणत्ति। तस्यै। क्लीब।

यामित्यादि॥ अभिशस्तः मिथ्यारोपितपातकेन दूषित गृहे अभिशस्त। अरण्ये स्तेन चोर। पराची स्नापाशनादिना अन्यपराम्। अवाङ्मुख शयानामित्येके। ह्रीतमुखी लज्जावनतवदन। कर्मधारयादिनि। अपगल्भोऽपगतगल्भः। अप्सु [14]मारुक अप्सु मरणशील। छान्दस उकञ्। दुश्चर्मा कुष्ठी। खलतिः केशशून्यमस्तकः। अपमारी अपमृत्युमान्। यद्वा–कुत्सितमरण। [15]काण कुण्ठिताक्ष। श्यावदन् व्याध्यापन्नदन्त, मलिनदन्तो वा। "विभाषा श्यावारोकाभ्याम्" (पा ५·४·१४४) इति दतृभाव। कुनखी कुत्सितनख। कृणत्ति कट सृजति। विकरणजातेऽपि कामम् उद्दिश्य आ विजनितोः आ प्रसवात् पुरुषेण संगच्छेमहि। गर्भोपद्रव. प्रत्यवायश्च निषिद्धदिनकृतोऽस्माकं मा भूदिति वर। अत एव याज्ञवल्क्यस्मृति – "[33]यथाकामी भवेद्वाऽपि स्त्रीणा वरमनुस्मरन्" ( याज्ञस्मृ १·८१ ) इति। यो ब्रह्महत्याया तृतीयो भाग. सा मलवद्वासा रजस्वला योषित् अभवत्। यस्मादियं ब्रह्महत्याया रूप शरीरे कञ्चुकवत् प्रतिमुच्य आस्ते तस्मात् तया सह संभाषणं न कुर्यात्। तया सह एकस्मिन् गृहे वास न कर्तव्य.। तत्स्वामिकं तत्स्पृष्ट वा अन्नं न [34]अद्यात्, अपि च [35]अभिशा केचिदेवम् आहु– स्त्रिया. [36]शृङ्गारप्रियत्वेन अभ्यञ्जनम् एवान्नस्थानीयं, मदीय तैलादिकमेव न गृह्णीयात्, तया वा [37]स्वशरीराभ्यञ्जनं न कारयेत्। अन्यत् अन्नं सत्यामिच्छाया भोक्तव्यमिति॥

यामिति॥ प्रसङ्गाद्रजस्वलाव्रतानि विधत्ते– 'यां मलवद्वाससꣳ संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो या पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको याऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन

१४ ल–मारुत·। १५. लं– 'काण' नास्ति।

३३. हा– यायाकामी। ३४. आ ड. अभीयात्। ३५. ड.ग्र– 'अभिशाः' नास्ति।
३६ आ–शृङ्गारोपयोगित्वेन। ३७ ड हो१–स्वशरीरस्य अभ्य°; ग्र– अन्य· स्वशरीरस्य अभ्य°।

या रज्जुं॑ सृ॒जति॒ तस्या॑ उद्ब॒न्धुको॒ या प॒र्णेन॒ पिब॑ति॒ तस्या॑ उन्मादु॒को या खर्वे॑ण पिब॑ति॒ तस्यै॑ खर्व॒स्तिस्रो॒ रात्री॑र्व्र॒तं च॑रेदञ्ज॒लिना॑ वा॒ पिबे॒दख॑र्वेण वा॒ (७) पात्रे॑ण प्र॒जायै॑ गोपी॒थाय॑ ॥ १ ॥

[ यत् सोमपानं ते ब्रूकणात् तस्य नाऽऽर्यं वदेत् मारुको याऽखर्वेण वा त्रीणि च । ]

या । रज्जुम् । सृ॒जति॑ । तस्या॑ । उ॒द्ब॒न्धुक॒ इत्यु॑त् बन्धुक॑ । या । प॒र्णेन॑ । पिब॑ति । तस्या॑ । उ॒न्मादु॒क इत्यु॑त् मादुक॑ । या । खर्वे॑ण । पिब॑ति । तस्यै॑ । खर्व॑ । तिस्र॑ । रात्री॑ । व्र॒तम् । च॒रेत् । अ॒ञ्ज॒लिना॑ । वा॒ । पिबे॑त् । अख॑र्वेण । वा॒ (७) । पात्रे॑ण । प्र॒जाया॒ इति॑ प्र जायै॑ । गो॒पी॒थाय॑ ॥ १ ॥

[ मैस २ ४ १, काश १२ १०, शब्रा १ ६ ३ १-१५, ५ ५ ४ २-६ ]

व्यत्ययेन श्नम् (पा ३ १ ८५)। ‘क्लीब यो न स्त्री न पुमान्। ‘उद्बन्धुक यो रज्ज्वा उद्बध्य आत्मान व्यापादयति। ‘पर्णेन पद्मदलादिना। ‘उन्मादुक उन्मदनशील । पूर्ववदुकञ्। ‘खर्व खरेनसोवर्तते (?) खण्डिताङ्ग खर्व इति केचित्। व्रत यथोक्तस्वरूप प्रजाया रक्षणार्थम्। औणादिकस्थप्रत्यय (उ १७४), इडागमश्च ॥

इति द्वितीये पञ्चमे प्रथमोऽनुवाक ॥

पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रत चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय’ इति ॥ ‘अभिशस्त मिथ्यापवादयुक्त । ‘याम् ‘अरण्ये, ‘मलवद्वाससम् सभवति’ इत्यनुवर्तते। [38]‘पराचीम् [39]इच्छाराहित्यात् लज्जया [40]वा [41]पराङ्मुखीम्। सभायामवाङ्मुखो वक्तुमशक्त ‘हीतमुखी ‘अपगल्भ इत्युच्यते। ‘मारुक मरणशील । ‘दुश्चर्मा कुष्ठी। ‘प्रलिखते [42]भित्तौ चित्रादिक करोति। ‘खलति केशशून्य । ‘अपमारी दुर्मरणयुक्त । ‘काण [43]कुण्ठिताक्ष । ‘श्यावदन् मलिनदन्त’। ‘कृणत्ति तृणादि छिनत्ति। ‘उद्बन्धुक रज्जु बद्ध्वा मरणशील । [44]पर्णेन पान भोजनस्याप्युपलक्षणम्। उन्मादुक उन्मादशील [45]। ‘खर्वेण वह्निपक्वेन शरावादिना। ‘खर्व वामन । यस्मादुक्ता दोषा [46]वर्तन्ते तस्मात् तत्परिहाराय रजस्वलागत सभवादिवर्जनरूप नियममाचरेत्। भोजनेऽञ्जलिरदग्धशरावादिर्वा साधनमस्तु। [47]एतच्च व्रताचरणमुत्पत्स्यमानाया प्रजाया रक्षणार्थं भवति ॥

अत्र मीमासा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

“न सवदेत मलवद्वाससेत्यपि पूर्ववत्।
पुमर्थ स्यात् क्रतौ वापि सवादस्याप्रसक्तित ” ॥ (जैन्या ३ ४ २०) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– “मलवद्वाससा न स वदेत” (तैस २ ५ १) इति। अस्य निषेधस्य प्रकरणात् क्रत्वर्थत्वमिति चेत्। न। अप्रसक्तप्रतिषेधप्रसङ्गात्। “यस्य व्रत्येऽहन् पत्न्यनालम्भुका भवति। तामपरुध्य यजेत” (तैब्रा ३ ७ १) इति रजस्वलाया नि सारणाच्च क्रतौ सवादप्रसक्ति । तस्मात् [48]क्रत्व पुरुषार्थस्यास्य प्रकरणादुत्कर्ष ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाक ॥

३८. हा-पराची। ३९ आ-उच्चारणलीना। ४०, ड-‘वा’ नास्ति। ४१ हा-पराङ्मुखी। ४२. ना-भूमौ। ४३ अ ई उ ओ ना पा हा- कुणितान । ४४-४५. आ ड-‘पर्णे पान ... शील’ नास्ति। ४६ ड ओ हा १-तिष्ठन्ते। ४६ आ-‘एतच्च’ नास्ति। ४७ अ ई उ ओ ना पा हा-वेदर्थ पुरुषार्थस्य मादस्य।

त्वष्टा हुतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्ये( १ )न्द्रः शत्रुरभवत् स संभवन्नग्नीषोमावभि समभवत्

त्वष्टा । हुतपुत्र इति हुत - पुत्र । वीन्द्रमिति वि - इन्द्रम् । सोमम् । एति । अहरत् । तस्मिन् । इन्द्रे । उपहवमित्युप - हवम् । ऐच्छत । तम् । न । उपेति । अह्वयत । पुत्रम् । मे । अवधीः । इति । सः । यज्ञवेशसमिति यज्ञ - वेशसम् । कृत्वा । प्रासहेति प्र - सहा । सोमम् । अपिबत् । तस्य । यत् । अत्यशिष्यतेत्यति - अशिष्यत । तत् । त्वष्टा । आहवनीयमित्या - हवनीयम् । उप । प्रेति । अवर्तयत् । स्वाहा । इन्द्रशत्रुरितीन्द्र - शत्रु । वर्धस्व । इति । यत् । अवर्तयत् । तत् । वृत्रस्य । वृत्रत्वमिति वृत्र - त्वम् । यत् । अब्रवीत् । स्वाहा । इन्द्रशत्रुरितीन्द्र - शत्रु । वर्धस्व । इति । तस्मात् । अस्य ( १ ) । इन्द्रः । शत्रुः । अभवत् । सः । संभवन्निति सं - भवन् ।
अग्नीषोमावित्यग्नी - सोमौ । अभि । समिति । अभवत् ।

त्वष्टा हतपुत्र इत्यादि ॥ व्याख्यातम् (तैस २·४ १२)। यदिति। यस्मादेनम् [v]आहवनीय [v]त्वष्टा [v]अवर्तयत् [v]उप [v]प्रावर्तयत्, पीतशेषेण सोमेनादीपयत् तस्मात् ततो जात वृत्र, [1]वृत्र इति [2]व्यपदेश्य भवति। वृतेर्ण्यन्तादौणादिक कर्मणि रक्प्रत्ययः (उ १७८), "बहुलमन्यत्रापि°" (उ १९०) इति णिलुक् ॥

यदब्रवीदिति ॥ इन्द्रस्य शत्रु [v]वर्धस्व [v]इति विवक्षन् अन्तोदात्तम् इन्द्रशत्रुशब्दम् आद्युदात्त *-प्रयुक्तवान् [v]तस्मात् [v]अस्य वृत्रस्य [v]इन्द्रः एव [v]शत्रु शातयिता सजात। बहुव्रीहिपूर्वपदप्रकृतिस्वरत्वेन इन्द्रशत्रुशब्द आद्युदात्तो भवति। इन्द्रोऽस्य शत्रु. शातयितेति।

उपोद्घाते विश्वरूपवध [1]आद्ये समीरित ॥

त्वष्टेति ॥ अथ द्वितीयानुवाकेऽग्नीषोमीयपुरोडाश विधित्सुरादौ तस्योपोद्घातस्य विध्युपयोग दर्शयति–'त्वष्टा हुतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत त नोपाह्वयत पुत्र मेऽवधीरिति स यज्ञवेशस कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्येन्द्र शत्रुरभवत् स सभवन्नग्नीषोमावभि समभवत् स इषुमात्रमिषुमात्र विष्वङ्ङवर्धत स इमाँल्लोकानवृणोत् यदिमाँल्लोकान-वृणोत् तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्' इति। यस्मात् कारणादस्योत्पत्त्यर्थमाहुतिम् [2]अवर्तयत् तस्मात्

१. तइ–अत्र। २. ल–व्यपदेशम्। *-* तइ मै–'प्रयुक्तवान्. इति तत्त्वम्' इति नास्ति।

१. आ ह–सम्यक्।

स इ॑षुमा॒त्रमि॑षुमात्रं॒ विष्व॑ङ्ङवर्धत॒ स इ॒माँल्लो॒कान॑वृणो॒द्यदि॒माँल्लो॒कानवृ॑णो॒त् तद्वृ॒त्रस्य॑ वृत्र॒त्वं तस्मा॒दिन्द्रो॑ऽबिभे॒त् स प्र॒जाप॑ति॒मुपा॑धाव॒च्छत्रु॑र्मेऽजनी॒ति तस्मै॒ वज्र॑ᳪ सि॒क्त्वा प्राय॑च्छदे॒तेन॑ ज॒ही॒ति तेना॒भ्याय॑त॒ ताव॑ब्रूताम॒ग्नीषोमौ॒ मा(२) प्र हा॒रा॒वम॒न्तः स्व॒ इ॒ति

स॒। इ॒षु॒मा॒त्रमि॑षुमात्र॒मिती॑षुमात्र॒म् - इ॒षु॒मा॒त्रम्। विष्व॑ङ्। अ॒व॒र्ध॒त॒। सः॒। इ॒मान्। लो॒कान्। अ॒वृ॒णो॒त्। यत्। इ॒मान्। लो॒कान्। अवृ॑णोत्। तत्। वृ॒त्रस्य॑। वृ॒त्र॒त्वमिति॑ वृत्र - त्वम्। तस्मा॑त्। इन्द्रः॑। अ॒बि॒भे॒त्। सः॒। प्र॒जाप॑ति॒मिति॑ प्र॒जा - प॒ति॒म्। उपेति॑। अ॒धा॒व॒त्। शत्रुः॑। मे॒। अ॒ज॒नि॒। इति॑। तस्मै॑। वज्र॑म्। सि॒क्त्वा। प्रेति॑। अ॒य॒च्छ॒त्। ए॒तेन॑। ज॒हि॒। इति॑। तेन॑। अ॒भीति॑। आ॒य॒त॒। तौ। अ॒ब्रू॒ता॒म्। अ॒ग्नीषो॑मा॒वित्य॒ग्नी-सोमौ॑। मा ( २ )। प्रेति॑। हा॒ः। आ॒व॒म्। अ॒न्तः॒। स्वः॒। इति॑।

ततश्च शत्रुशब्दस्य क्रियाशब्दत्वात् वृत्रस्यैव इन्द्रः नाशयिता तेन होमेन बभूव। शद्लृ शातने। णिचि "शदेरगतौ तः" (पा ७·३·४२) इति तत्वम्[*]। ततः औणादिके क्रुन्प्रत्यये (उ ५५३) "बहुलमन्यत्रापि॰" ( उ १९० ) इति णिलुक्। उक्तं च– "यथेन्द्रशत्रुः स्वरतोऽपराधात्" ( पाशि ५२ ) इति। स संभवन्नित्यादि। व्याख्यातम् ( तैसं २·४·१२ )। वृत्रत्वमिति। वृणोते त्रप्रत्ययः। इदं द्वितीयं वैत्रत्वमस्य ॥

स प्रजापतिमित्यादि ॥ गतम्। सिक्त्वा तीक्ष्णं कृत्वा। उत्पाद्येत्येके। अथेन्द्रः तेन वज्रेण सह वृत्रमभ्यागच्छत्। अथ यदग्नीषोमौ, पूर्वं सः संभवन् वृत्रः अभि समभवत् तौ अग्नीषोमौ प्रहर्तुकामम् अब्रूतां मा त्वमावां प्रहार्षीः, यं त्वं प्रहर्तुमारभसे अत्रान्तर्भूतौ स्व. आवाम्

कारणात् वर्तयति एतदर्थमिति व्युत्पत्त्या वृत्रत्वं संपन्नम्। यस्मात् कारणात् षष्ठीसमासस्वरं विसृज्य बहुव्रीहिस्वरमुच्चारितवान्, तस्मात् इन्द्रः शातयिता यस्येति व्युत्पत्त्या वृत्रस्य अस्य इन्द्रः घातकः अभवत्। अवशिष्टं पूर्वप्रपाठके व्याख्यातम् ॥

स इति ॥ तस्य वधोपायं दर्शयति– 'स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रᳪ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत' इति ॥ सः इन्द्रो मम कश्चित् शत्रुः जातः इति वदन् प्रजापतिम् असेवत। तस्मै इन्द्राय स प्रजापतिः वज्रं सिक्त्वा वृत्रमुद्दिश्य कृत्याभिमन्त्रितजलेन प्रोक्ष्य एतेन जहि इति वदन् प्रायच्छत्। जहि मारयेत्यर्थः ॥ तेन वज्रेण सहितः स इन्द्र एनं वृत्रं हन्तुमभिलक्ष्य आयत आगतवान् ॥

ताविति ॥ इत्थमुपोद्घातं तदुपयोगं चोक्त्वाऽग्नीषोमीयपुरोडाशविधिमर्थवादेनोन्नयति- 'तावब्रूतामग्नीषोमौ मा प्र हारावमन्तः स्व इति मम वै युवᳪ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेय-

३. लं– वृत्रमभ्य। ४. लं– उत्पाद्येके। ५. तै३– 'अथ' नास्ति। ६–६. तै२–प्रहर्तुकामौ अब्रूतां मा मावाम्। ७. तै२– यः।

२. गृ–॰स्वरितं। ३. आ– विसृज्य। ४. आ– तस्मात् कारणात्। ५. अ.इ.उ.ओ.पा.हा– शाता। ६. ब.हो१– 'अस्य' नास्ति। ७. आ– अभूत्। ८. आ– शेषम्। ९. आ– 'सः' नास्ति। १०. इ.उ.ओ.पा.हा– 'सिक्त्वा' नास्ति; ब.गृ– सिक्त्वा तीक्ष्णीकृत्वा। ११. ब– हन्तुमागत॰।

मम॒ वै यु॒वꣳ स्थ॒ इत्य॑ब्रवी॒न्माम॒भ्येत॒मिति॒ तौ भा॒ग॒धेय॑मैच्छेतां॒ ताभ्या॑मे॒तम॑ग्नीषो॒मीय॒-मेका॑दशकपालं पू॒र्णमा॑से॒ प्राय॑च्छ॒त् ताव॑ब्रूता॒म॒भि संद॑ष्टौ॒ वै स्वो॒ न श॑क्नुव॒ ऐतु॒मिति॒ स इन्द्र॑ आ॒त्मनः॑ शीतरू॒राव॑जनय॒त्

मम॑। वै। यु॒वम्। स्थ॒। इति॑। अ॒ब्र॒वी॒त्। माम्। अ॒भि। एति॑। इ॒त॒म्। इति॑। तौ। भा॒ग॒धेय॒मिति॑ भाग-धेय॑म्। ऐ॒च्छे॒ता॒म्। ताभ्या॑म्। ए॒तम्। अ॒ग्नी॒षो॒मी॒यमित्य॑ग्नी-सो॒मीय॑म्। एका॑दशकपा॒लमित्येका॑दश-क॒पा॒लम्। पू॒र्णमा॑स॒ इति॑ पू॒र्ण मा॒से। प्रेति॑। अ॒य॒च्छ॒त्। तौ। अ॒ब्रू॒ता॒म्। अ॒भीति॑। संद॑ष्टा॒विति॒ स दृ॒ष्टौ। वै। स्थ॒। न। श॒क्नु॒व॒। ऐ॒तु॒मित्या॒ ए॒तु॒म्। इति॑। स। इन्द्र॑। आ॒त्मन॑। शी॒त॒रू॒रा॒विति॑ शीत-रू॒रौ। अ॒ज॒न॒य॒त्।

इति। ह्वतेर्लुङि (पा ३ २ ११०), सिचि वृद्धौ (पा ७ २ १) "बहुल छन्दसि" (पा ७ ३ ९७) इतीडभाव । अथेन्द्र अब्रवीत् मदीयौ सुहृदौ युवा स्थ । इतिकरणो हेतौ। यस्मादेव तस्मात् माम् एव अभ्येत रक्ष्यतामय जाल्म इति। अथाग्नीषोमौ भागधेय किंचिदात्मीय भागम् इन्द्राल्लब्धु ऐच्छेताम्। अथ विदिताभिप्राय इन्द्र ताभ्याम् एतम् अग्नीषोमीयम् एकादशकपाल * पूर्णमासे आग्नेयस्य अनुनिर्वाप्य प्र अयच्छत् प्रादात्। "द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च" (पा ४ २ ३२) इति छ । तस्मादग्नीषोमीयमेकादशकपाल पूर्णमासे प्रधानमेव * कुर्यादिति विधिरनुमीयते ॥

अथाग्नीषोमौ लब्धभागावपि पुनरपि अब्रूताम्— आवामत्र वृत्रभोगे अभि सदष्टौ स्व लग्नाविव भवाव । तस्मादिम हित्वा त्वाम् ऐतुम् आगन्तु न शक्नुव न क्षमावह

मैच्छेता ताभ्यामेतमग्नीषोमीयमेकादशकपाल पूर्णमासे प्रायच्छत्' इति ॥ हे इन्द्र, मा प्र हा, पुन मा प्रहर। आवाम् अन्त स्व, आवामुभावेतस्य [11]मुखमध्ये तिष्ठाव । [12]तच्छ्रुत्वा स इन्द्र अब्रवीत् युवा [13]मम स्थ [14-15]मे खलु इति, तस्मात् माम् अभ्येत मामभिलक्ष्याऽऽगच्छतम्[15] इति। ततोऽग्नीषोमौ [16]त्वत्सकाशमागतयो [17]आवयो किं भागधेयम् इति पप्रच्छतु । स चेन्द्र [18]पूर्णमासे योऽग्नीषोमीयपुरोडाश स युवयोर्भाग इति दत्तवान्। 'अग्नीषोमीयमेकादशकपाल [19]निर्वपेत्' इति विधिरत्र द्रष्टव्य ॥

ताविति ॥ अग्नीषोमयोर्निर्गमनप्रकार दर्शयति— 'तावब्रूतामभि सदष्टौ वै स्वो न शक्नुव ऐतुमिति स इन्द्र आत्मन शीतरूरावजनयत् तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद नैनꣳ

८. ल— ताम्। *—* ल— 'पूर्णमासे आग्नेयस्य. प्रधानमेव' नास्ति। ९. मै४— वृत्रभागे, प२—वृत्रभेदे।

११ आ— मुखे। १३ आ— तच्छ्रुत्वा। १४. ह४,हो१— मदीयौ। १५-१५ ह४ हो१— तस्मा मामभिलक्ष्यागतम्, ह— तस्मा मामभिलक्ष्यागच्छतम्। १६ ह४,हो१ त्वत्समीपमा°। १७ ह— 'आवयो' नास्ति। १८. ह४ हो१— पूर्णमासयागे। १९. ह— कुर्यात्।

तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद (३) नैनꣳ शीतरूरौ हतस्ताभ्या-मेनमभ्यनयत् तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिता प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति

तत्। शीतरूरयोरिति शीत-रूरयोः। जन्म। यः। एवम्। शीतरूरयोरिति शीत रूरयोः। जन्म। वेद (३)। न। एनम्। शीतरूराविति शीत रूरौ। हतः। ताभ्याम्। एनम्। अभीति। अनयत्। तस्मात्। जञ्जभ्यमानात्। अग्नीषोमावित्यग्नी-सोमौ। निरिति। अक्रामताम्। प्राणापानाविति प्राण-अपानौ। वै। एनम्। तत्। अजहिताम्। प्राण इति प्र अन। वै। दक्षः। अपान इत्यप-अन। क्रतुः। तस्मात्। जञ्जभ्यमानः। ब्रूयात्। मयि। दक्षक्रतू इति दक्ष-क्रतू। इति।

vइति। अथ vइन्द्र vआत्मन शीतरूराख्यौ रोगविशेषौ ''आलस्यजृम्भणकारिणौ vअजनयत्। देहस्यायासकरौ यत्नविशेषाविति येके। तदित्यादि। गतम्। अथ इन्द्र vताभ्यां शीतरूराभ्याम्, vएनं वृत्रम् vअभ्यनयत् अभिसप्राप्तमकरोत्। यद्वा– अन्येनाविष्टस्य तन्मयत्वं प्रतिपन्नस्य तदात्मतया चेष्टा अभिनय, तत्कारिणं वृत्रमकरोत्। शीतरूरावावेश्य तद्भावापन्नं वृत्रमभिनयति स्म। तत vतस्मात् vजञ्जभ्यमानात् शीतरूरावेशनेन आस्यं व्यादाय जृम्भमाणगात्रात् वृत्रात् vअग्नीषोमौ vनि vअक्रामता निष्क्रान्तौ। "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" (पा ३ १ २४) इति यङ्॥

अथ प्रसङ्गात् इद परमुच्यते। यदाऽग्नीषोमौ वृत्रमत्यजता vतत् तदा vप्राणापानौ एव खलु ''vएनं वृत्रम् vअजहिताम् अत्यजताम्। किं च vप्राण vदक्ष दक्षयिता। vअपान vक्रतु ''कारयिता। vतस्मात् vजञ्जभ्यमान vब्रूयात् vमयि vदक्षक्रतू vइति, न निष्क्राता

शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामताम्' इति॥ वृत्रस्य मुखे दन्तपङ्क्तिस्थावभित सम्यग्दष्टावेव वर्तावहे। तस्मादागन्तुं 'न 'शक्नुव 'इति उक्त 'इन्द्र' तयो रागमनाय स्वात्मन सकाशाच्छीतज्वरं तदनन्तरमाविसताप चोभावुत्पादितवान्। तदानीं शीतरूरशब्दा भिधेययोर्ज्वरतापयो 'जन्म समुत्पन्नम्। तज्जन्मवेदिन '-'न 'शीतरूरौ 'हत न मारयत '। तत स इन्द्र 'ताभ्यां शीतरूराभ्यामायुधभूताभ्याम् 'एनं वृत्रमभिलक्ष्य प्रयुक्ताभ्याम् 'अनयत् एनं वृत्रं संयोजितवान्। तदा शीतज्वरसंतापाभ्यां 'जञ्जभ्यमानात् मुखविदारण कुर्वत तस्मात् वृत्रात् 'अग्नीषोमौ निर्गतौ॥

प्राणापानाविति॥ प्रसङ्गान्मन्त्र ''कश्चिन्नुपाय विनियुज्यते– 'प्राणापानौ वा एन तदजहिता प्राणो वै दक्षोऽपान क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायु

१० तै३ मै– मुखस्य जृम्भण°, पै२,१०– मुखस्य जृम्भण°। ११ तै३ मै१०– एतम्। १२ मै८ कारयिता।

१०–१० तै शीतरूरौ न मारयत। ११ आ ३– 'कति?' नास्ति।

प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायुरेति स देवता वृत्रान्निर्हूय वार्त्रघ्नं हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आ( ४ )ऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते

प्राणापानाविति प्राण - अपानौ । एव । आत्मन् । धत्ते । सर्वम् । आयुः । एति । सः । देवताः । वृत्रात् । निर्हूयेति निः - हूय । वार्त्रघ्नमिति वार्त्र - घ्नम् । हविः । पूर्णमास इति पूर्ण - मासे । निरिति । अवपत् । घ्नन्ति । वै । एनम् । पूर्णमास इति पूर्ण - मासे । एति ( ४ ) । अमावास्यायामित्यमा - वास्यायाम् । प्याययन्ति । तस्मात् । वार्त्रघ्नी इति वार्त्र - घ्नी । पूर्णमास इति पूर्ण - मासे । अन्विति । उच्येते इति ।

विति । एवं ब्रुवन् प्राणापानौ आत्मनि [13]स्थापयति । ततः सर्वम् आयु प्राप्नोति । इदं च क्रत्वङ्गमेवेति राद्धान्तितम्— " अहीनवत् पुरुषधर्मस्तदर्थत्वात् " (द्र. मीसू ३·४·१४) इत्यत्र ॥

अथाज्यभागयोर्निर्देश उच्यते— अथेन्द्रः देवता [14]अग्नीषोमादीन् वृत्रात् निर्हूय निर्गतान् कृत्वा हन्तु योग्यं वृत्रं कृत्वा पूर्णमासे वार्त्रघ्नं [15]वृत्रहणः सम्बन्धि हविः आज्यभागलक्षणं [16]निरवपत् । यद्वा—वृत्रहन्त्वर्थं हविराज्यं निरवपत् स्थाल्या [17]पृथक् कृतवान् । हेतुमाह— एनं हि वृत्रं पूर्णमासे देवा घ्नन्ति तमोरूपत्वात् [18]विनाशोपायस्तदा भवति । तस्मात् वार्त्रघ्नी वृत्रहन्तुः सम्बन्धिन्यौ तल्लिङ्गवत्यौ ऋचौ पूर्णमासे अनु उच्येते आज्यभागयो.

वेति' इति । अग्नीषोमौ यदा निर्गतौ तदान । प्राणापानौ एव एनं वृत्रं त्यक्तवन्तौ । तयोश्च प्राणापानयोः क्रमेण दक्षः क्रतुः [22]इत्येते नामनी । यस्मात् कारणात् एते तयोर्नामनी तस्मात् कारणात् मन्त्रकाले जञ्जभ्यमानः मुखविदारणरूपं गात्रविनामं कुर्वन् यजमान ' मयि दक्षक्रतू ' इति मन्त्रं ब्रूयात् । तिष्ठतामिति मन्त्रवाक्यशेषस्याध्याहारः । तेन मन्त्रपाठेन प्राणापानौ एव स्वात्मनि [23]स्थिरौ धारितवान् भवति । ततोऽपमृत्युपरिहारेण सर्वम् आयु प्राप्नोति ॥

स इति ॥ अथानेन वृत्रवधप्रसङ्गेनाऽऽज्यभागमन्त्रयुगलयोः कालभेदेन व्यवस्थां विधत्ते— 'स देवता वृत्रान्निर्हूय वार्त्रघ्नं हविः पूर्णमासे निरवपद्घ्नन्ति वा एनं पूर्णमास आऽमावास्यायां प्याययन्ति तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्' इति ॥ स. इन्द्रोऽग्नीषोमप्रमुखा वृत्रमुखे स्थिता. सर्वा. देवता वृत्रात् निर्हूय नि मार्य वृत्रहननहेतुभूतं हविः आज्यभागद्वयरूपं पूर्णमासे समादित्सवान् । लोकेऽपि एनं वृत्रम् [24]आवरणात्मकान्धकाररूपेणावस्थितं वधं पूर्णिमादिने ज्योत्स्नया

१३. तै१.लै— स्थापयते । १४. तै२. ? — अग्नीषोमादिभि. । १५. मै — वृत्रह.सम्बन्धि । १६. मै.ल— 'निरवपत्' नास्ति । १७. तै१.मै.ल— पृथक्कृतवान् । १८. तै१—विनाशोपायस्तदा ।

२२. आ—इत्येव, हो१—इत्येते तयोः । २३. ड हो१— स्थिरौ । २४. आ— आवरणात्मकं वृत्रान्धकार°; ड—आवरणात्मकान्धकाररूपेणावस्थितम् ।

वृर्धन्वती अमावास्यायां तत्सश्स्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै

वृर्धन्वती इति वृर्धन् - वती । अमावास्यायामित्यमा - वास्यायाम् । तत् । सꣳस्थाप्येति स स्थाप्य । वार्त्रघ्नमिति वार्त्र - घ्नम् । हवि । वज्रम् । आदायेत्या - दाय । पुनः । अभीति । आयत । ते इति । अब्रुताम् । द्यावापृथिवी इति द्यावा - पृथिवी । मा । प्रेति । हा । आवयो । वै । श्रित । इति । ते इति । अब्रुताम् । वरम् । वृणावहै ।

पुरोऽनुवाक्ये *कार्ये । ते च "अग्निर्वृत्राणि", "त्व सोमासि" इत्येते (तैब्रा ३ ५ ६)। हविर्ग्रहण निर्वपति । ग्रहण च हविर्धर्मविशेषप्राप्त्यर्थम् । [v]अमावास्यायाम् एनम् [v]आ [v]प्यायन्ति, प्रवृद्ध इव भवति, तदानीं तमोपावृद्धया । तस्मात् [v]वृधन्वती वृधिक्रियालिङ्गवत्यौ ऋचौ [v]अमावास्यायाम् अनूच्येते, आज्यभागयो पुरोनुवाक्ये* क्रियेते– "अग्नि प्रत्नेन", "सोम गीर्भि." (तैब्रा ३ ५.६) इत्येते । वृधेरौणादिके कनिन्प्रत्यये मतुप्, "अनो नुट्" (पा ८ २ १६) च । [v]वार्त्रघ्न्यो वृत्रस्यैव [v]वृद्धि' शब्देनोच्यते । स एव पौर्णमासे हन्यते । वृधन्वत्योस्तु सोमस्य वृद्धि शब्देनोच्यते । तद्वृद्ध्या वृत्रस्य वृद्धिरित्यर्थात् गम्यते । वृत्रश्च तदानीं वर्धते इति [v]प्रसिद्धि' । उभयत्रापि "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् ॥

तत्सꣳस्थाप्येत्यादि । गतम् । ते इत्यादि । पूर्वं वर्धमानो वृत्रो ये द्यावापृथिव्यो अभिसमभवत् [v]ते [v]अब्रूताम्– [v]मा आवा [v]प्र [v]हा. प्रहार्षी [v]आवयोः खल्वसौ वृत्र [v]श्रित, तस्मात्

विनाशयन्ति । 'अमावास्याया ज्योत्स्नाया अभावात् वृत्ररूपमन्धकारम् 'आ 'प्याययन्ति ''सर्वतो वर्धयन्ति''। यस्मादेव 'तस्मात् वृत्रहननशब्दलाञ्छिते ऋचावाज्यभागयो 'पूर्णमासे पुरोनुवाक्ये कर्तव्ये। वृधिधातुयुक्ते ऋचौ 'अमावास्याया पुरोनुवाक्ये कर्तव्ये। "अग्निर्वृत्राणि जङ्घनत्", "त्वꣳ सोमासि सत्पतिः... वृत्रहा", (तैब्रा ३.५ ६) इत्यनयोर्वृत्रहननप्रतीतेरेते ऋचौ वार्त्रघ्न्यौ। "कविर्विप्रेण वावृधे", "वर्धयामो वचोविद" (तैब्रा ३.५ ६) इत्येते ऋचौ, वृधिधातुयुक्तत्वाद्वृधन्वत्यौ॥

तदिति॥ प्रासङ्गिकीमाज्यभागमन्त्रव्यवस्था" विधाय प्रकृत वृत्रवधप्रकारं दर्शयति– 'तत्सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत ते अब्रूतां द्यावापृथिवी मा प्र हारावयोर्वै श्रित इति ते अब्रूता वरं वृणावहै नक्षत्रविहिताऽहमसानीत्यसाववर्वीच्चित्रविहिताऽहमितीय तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेय य एवं द्यावापृथिव्योर्वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्' इति।

०–० तैर मै ०–'कार्ये. ... पुरोनुवाक्ये' नास्ति। १९. तैर–वार्त्रघ्न्यौ। २०. तैर–वृद्धि०। २१. तैर मै स–प्रवृद्धि.।

१५–१५. गे– 'सर्वतो वर्धयन्ति' नास्ति। २६. आ– °भागव्यवस्था।

नक्षत्रविहिताऽहमसानीत्यसावब्रवीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं य एवं द्यावापृथिव्यो(५)र्वरं वेदैनं वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन् ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्यं नो वहतमिति

नक्षत्रविहितेति नक्षत्र-विहिता। अहम्। असानि। इति। असौ। अब्रवीत्। चित्रविहितेति चित्र-विहिता। अहम्। इति। इयम्। तस्मात्। नक्षत्रविहितेति नक्षत्र-विहिता। असौ। चित्रविहितेति चित्र-विहिता। इयम्। य। एवम्। द्यावापृथिव्योरिति द्यावा-पृथिव्यो (५)। वरम्। वेद। एति। एनम्। वरः। गच्छति। सः। आभ्याम्। एव। प्रसूत इति प्र-सूतः। इन्द्रः। वृत्रम्। अहन्। ते। देवाः। वृत्रम्। हत्वा। अग्नीषोमावित्यग्नी-सोमौ। अब्रुवन्। हव्यम्। न। वहतम्। इति।

अस्मदाश्रय प्रहर्तुं नार्हसि इति। पुनश्च ते अब्रूताम् वरमित्यादि। नक्षत्रविहिता नक्षत्रैर्विविध "हिता स्थापिता[23] नक्षत्राधीनस्थितिः। यद्वा– नक्षत्रैः विशिष्टावस्थानशरीरा। चित्रविहिता चित्रैः नानाविधैः पूजितैर्वा [24]कुलशैले समुद्रादिभिः विहिता तदधीनस्थितिः, तद्विशिष्टावस्थाना वा। उभयत्रापि "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम्। स इत्यादि। [25]तत [26]इन्द्र द्यावापृथिवीभ्या प्रसूत अनुज्ञात वृत्र हतवान्। अथ ते देवा इन्द्रेण राज्ञा

स इन्द्रो वृत्रहननहेतुभूतमाज्यभागरूप हवि सपूर्णं कृत्वा पूर्ववत् वज्रम् आदाय पुन अपि वृत्रमभिलक्ष्य हन्तुमागतवान्। तदानीं द्यावापृथिवी अब्रूताम्– अय वृत्रो भूमिमारभ्य द्युलोकपर्यन्त व्याप्य आवयो आश्रितो वर्तते तस्मान्मदीयमेन "मा प्रहर इति। तत इन्द्रस्तावनङ्गीकारमवलोक्य प्रहारमभ्यनुज्ञातुमुत्कोचत्वेन वर वृतवत्यौ। नक्षत्रैर्विहिताऽलङ्कृता स्याम् इति दिवो वर। [28]मनुष्यपशुवृक्षनगनदीसमुद्रादिरूपेण [29]विचित्रेण विहिताऽलङ्कृता स्याम् इति पृथिव्या वर। तेन वरेण ते तथैव स्याताम्। एतद्वराभिज्ञोऽपि स्वाभीष्ट वर प्राप्नोति। तत स इन्द्रो द्यावापृथिवीभ्यामनुज्ञात वृत्र हतवान्॥

त इति॥ [30]अथाभिहितस्याग्नीषोमीयपुरोडाशस्य [31]वेदनं प्रशंसति– 'ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्य नो वहतमिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साऽब्रवीद्वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति' इति॥ इन्द्रयुक्ता पार्श्ववर्तिन सर्वे देवा वृत्र हत्वा तन्मुखगाग्निसतो अग्नीषोमौ प्रति हव्यम् अस्मदर्थं वहतम् इति अब्रुवन्। तत तौ अग्नीषोमौ तान् देवान् प्रत्येकम् अब्रूताम्–त्यौ

२२. तै३ मै ल–विहिता। २३. मै४– 'स्थापिता' इत्यस्यानन्तर 'विर्द् विशिष्टे ता'। २४ मै४–कुशले। २५. मै ल– तत्र। २६. ल–'इन्द्र' नास्ति।

२७. हो१– न। २८. ड ग१, हो१– °कुलगिरिनदी°। २९. ड–चित्रेण। ३०. क ड ग१, हो१– अप विहितस्या°। ३१. आ भे–देवौ।

तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव सर्वस्य मित्रमिति साऽब्रवीत् (६) वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत् तस्माद्गवि सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद्घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव भवति

तौ । अब्रूताम् । अपतेजसावित्यप - तेजसौ । वै । त्यौ । वृत्रे । वै । त्ययोः । तेजः । इति । ते । अब्रुवन् । कः । इदम् । अच्छ । एति । इति । गौः । इति । अब्रुवन् । गौः । वाव । सर्वस्य । मित्रम् । इति । सा । अब्रवीत् ( ३ ) । वरम् । वृणै । मयि । एव । सता । उभयेन । भुनजाध्वै । इति । तत् । गौः । एति । अहरत् । तस्मात् । गवि । सता । उभयेन । भुञ्जते । एतत् । वै । अग्नेः । तेजः । यत् । घृतम् । एतत् । सोमस्य । यत् । पयः । यः । एवम् । अग्नीषोमयोरित्यग्नी - सोमयोः । तेजः । वेद । तेजस्वी । एव । भवति ।

वृत्र हत्वा । अग्नीषोमावित्यादि । गतम् । त्याविति । ताविमौ वामपगततेजस्कौ स्व वृत्रे खलु त्ययो [* तेज इति । ते देवा अब्रुवन् क नाम इद तेज आसु गच्छति इति * ।] पुन स्वयमेव देवा अब्रुवन् ननु गौ सर्वस्य मित्र भवति तस्मात् सर्वत्र गच्छन्तीमिमा न कश्चिन्निवारयति तस्मादियमेव गत्वा तत्तेज आहरत्विति ॥

साऽब्रवीदित्यादि ॥ यथाऽऽज्ञापित देवै तदिद क्रियत एव मया, अहमपि किंचित् वर वृणे वरितु प्राप्तकालाऽहम् । किं तदिति चेत्[१] इद निज्ञाप्यते– मयि एव सता उभयेन घृतेन पयसा च भुनजाध्वै सुहिता भवितुमर्हथ । भोगेन सौहित्य लक्ष्यते । लेटि आडागम, (पा ३ ४ ९४) "वैतोऽन्यत्र" (पा ३ ४ ९६) इत्यैकार, "छन्दस्युभयथा" (पा ३ ४ ११७) इति लेटि आर्धधातुकत्वेन ङित्त्वाभावात् "श्नसोरल्लोप" (पा ६ ४ १११) इति न प्रवर्तते । तदित्यादि । गतम् ॥

तथाविधौ वृत्रेण चिर दलनादपगततेजस्कावेव सपत्नौ । त्ययो तथाविधयो आवयो[३२] तेज सामर्थ्यं वृत्रे एव स्थितम् इति । [३३]ते देवा परस्परम् अब्रुवन्– क नाम इद तेज आसु गच्छति इति । तत्र बुद्धिमन्त [३४] कथन गो [३५] सर्वमित्रत्वेन वैराभावात् गौ एव वृत्रशरीरं गत्वा तेज समानेष्यति इति उक्तवन्त । सा [३६]च [३७]गोरूपोपचरूपं [३८]परमेयमयाचत–अनयो सम्बन्धि घृतपयोरूपं तेजो वृत्रशरीरादानेष्यामि, आनीत च तत् मयि एव सर्वदा तिष्ठतु, मयि एव स्थितेन तेन उभयेन तदा तदा स्वीकृतेन [३९]यूयं भोजन निर्वर्तयथ इति । तमिम वरं लब्ध्वा तत् तेन गौ आहरत् । तस्मात् वरवृतत्वाल्लोकेऽपि निरन्तरं गवि पयस् इति । [भौ-भा]

०-० [लिखितपुस्तकेषु एतावान् नोपलभ्यते, मै-मुद्रितपुस्तकमनुसृत्य पूरितोऽयं भाग । ]।

३२ आ द-'आवयो' नास्ति । ३३. द-ततो । ३४-३४ जो ना- वैरा अभाव उपा- गो । - ३५. आ हो १- अपि । ३६ आ- °गोपचरूपत्वे । ३७ ग्रे- परमेतम् । ३८ ३९ आ द- 'यूयं' नास्ति ।

ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं निरवासाययदिति तस्मा(७)ज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ॥ २ ॥

[ अस्य मा वेदा द्यावापृथिव्योरब्रवीदिति तस्माच्चत्वारि च ]

ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । किंदेवत्यमिति कि-देवत्यम् । पौर्णमासमिति पौर्ण-मासम् । इति । प्राजापत्यमिति प्राजा-पत्यम् । इति । ब्रूयात् । तेन । इन्द्रम् । ज्येष्ठम् । पुत्रम् । निरवासाययदिति नि–अवासाययत् । इति । तस्मात् । ज्येष्ठम् । पुत्रम् । धनेन । निरवसाययन्तीति नि.–अवसाययन्ति ॥ २ ॥

[ मैसं . कासं ... कपिसं . ]

आज्यभागयोर्विधिः– ‘ब्रह्मवादिनः’ इत्यादि ॥ कस्यै देवतायै इदम् । “देवतान्तात् तादर्थ्ये यत्” (पा ५ ४ २४) । पौर्णमास्या कार्यं कर्म पौर्णमासम् । तदिद किंदेवत्यम् इति [27]यदा ब्रह्मवादिन पृच्छेयु. तदा ब्रूयात् उत्तर– प्राजापत्यम् इति । प्रदर्शनार्थत्वात् आमावास्यमपि गृह्यते । यदुक्त–“परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्” (तैस १·६ ९) इति, तदेव[28] स्मारयति । इन्द्रग्रहण चोपलक्षण तत्रोक्ताना त्रयाणाम् इन्द्राग्निसोमानाम् । एतदुक्त भवति –प्रशस्ततमान् पुत्रान् इन्द्राग्निसोमान् प्रजापतिरनेन कर्मणा निः अवासाययत् [29]देवतान्तरेभ्यो व्यावृत्तानकरोत्, प्रशस्ततमान् [30]एतान् मन्यमानो ज्येष्ठभागमिन्द्राग्न्यादिभ्यः कर्मैतदुक्तवानिति । तस्मादित्यादि । वयसा विद्यादिना[31] वा प्रशस्यतम पुत्र धनेन निरवसाययन्ति पुत्रान्तरेभ्यो व्यावृत्तमधिकधन कुर्वन्ति पितर. । “शाच्छासाह्वाव्यावेपा°” (पा ७ ३·३७) इति युक्, “गतिर्गतौ” (पा ८·१·७०) इति पूर्वस्य निघाताभाव । “उदात्तवता तिङा” (द्र. पामा २·२ १८ वा ४) इति समास. ॥

इति द्वितीये पञ्चमे द्वितीयोऽनुवाकः ॥

[32-32]तिष्ठत्येव तेजसा घृतपयोरूपेण[32] उभयेन यदा तदा स्वीकृतेन सर्वे भोजनं निष्पादयन्ति । तत्र यत् घृतम् एतत् एव अग्नेः तेजः, यत् पयः एतत् एव सोमस्य तेजः, तदुभयवेदनेन तेजस्वी भवति इति ॥

ब्रह्मवादिन इति ॥ तदिदमग्नीषोमीयपुरोडाशरूपं पौर्णमासकर्म प्रजापतिसम्बन्धित्वेनेन्द्रसम्बन्धित्वेन च प्रशंसति– ‘ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं

२७. तै३.मै.लं– यावत् । २८. तै३.मै.लं– तदवसरे । २९. तै३.मै– देवान्तरेभ्य ३०. तै३.मै.लं– ‘एतान्’ नास्ति । ३१. तै३– विद्यादिना (!) ।

३२–३२. ग्रं– तिष्ठता तेज पयो°, ङ होर– तिष्ठति तेज पयो° ।

निरवासाययदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति' इति ॥ नात्र प्रजापतेः हविर्भावत्वेन[40] पौर्णमास देवतात्वं किं [41]तु तत्कर्मस्रष्टृत्वेन। तच्च पूर्वकाण्ड उदाहृतम्– "प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं च" (तैस १ ६ ९) इत्यादि। स च प्रजापतिः 'तेन पौर्णमासकर्मणा स्वकीयं 'ज्येष्ठं 'पुत्रम् 'इन्द्रं 'निरवासाययत् नि शेषवित्तदानेन स्थिरनिवासमकरोत्। एतदपि पूर्वकाण्ड एव स्पष्टमुदाहृतम् –"तेनेन्द्रं निरवासाययत् तेनेन्द्रः परमां काष्ठामगच्छत्" (तैस १ ६ ९) इति। यथा प्रजापतिर्यज्ञान् ससर्ज तथेन्द्रोऽप्यग्नीषोमौ वृत्राक्षि सार्धं ताभ्यामिमं पुरोडाशं दत्तवानिति अस्ति प्रजापतेरिवेन्द्रस्यापि संबन्धः। यस्मात् प्रजापतिरिन्द्रं निरवासाययत् 'तस्मात् लोकेऽपि 'ज्येष्ठं 'पुत्रं 'धनेन 'निरवसाययन्ति नि शेषमायुषोऽवसानं धनेन युक्तो यथा प्राप्नोति तथा कुर्वन्तीत्यर्थः ॥

[42]अत्र मीमांसा ॥ पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"अग्नीषोमीय आग्नेयात् पूर्वो नो वाऽस्तु पूर्वता ।
ब्राह्मणक्रमतो नैव मन्त्रक्रमबलत्वत ॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वत ॥
[43]प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता" ॥ (जैन्या ५ १ १८ १९) ॥

अग्नीषोमीययागस्तैत्तिरीयब्राह्मणे[44] पञ्चमप्रपाठके द्वितीयानुवाके समाम्नात –"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" (तैस २ ५ २) इति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाक आम्नात – "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" (तैस २ ६ ३) इति। [45]तत्रानुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति[45] प्राप्ते ब्रूमः – मन्त्रकाण्डे पूर्वं पठिता आग्नेय मन्त्राः। तथा हि हौत्रकाण्ड आज्यभागमन्त्रानुवाकात् तस्मिन्ननुवाके प्रथमम् "अग्निर्मूर्धा" (तैब्रा ३ ५ ७) इत्यादिके आग्नेय्यौ, याज्यानुवाक्ये आम्नाते। ततः –"प्रजापते न त्वदेतानि" (तैब्रा ३ ५ ७) इत्यादिके प्राजापत्ये। ततः – "अग्नीषोमा सवेदसा" (तैब्रा ३ ५ ७) इत्यादिके अग्नीषोमीये। [46]आध्वर्यवकाण्डे- "अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम्" (तैस १ १ ४) इत्याग्नेयं पूर्वमाम्नातं । [47]याजमानकाण्डेऽपि- "अग्नेरहं देवयज्ययाऽन्नादो भूयासम्" (तैस १ ६ २) इत्याम्नाय[48] पश्चात् "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्" (तैस १ ६ २) इत्याम्नायते। मन्त्रक्रमश्च प्रबल । [49]मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात्। ब्राह्मणं त्वप्राप्तपदार्थविधिनाऽपि चरितार्थम्। अतोऽनुष्ठानस्मरणायैवोत्पन्नान् मन्त्रान् बाधितुं नालमिति मन्त्रक्रमेणाऽऽग्नेयस्यैव [50]प्रथममनुष्ठानम् ॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत ।
वाक्यादाद्यः प्रक्रियया द्वितीयस्त्वविरुद्धया" ॥ (जैन्या ३ ४ १०) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "प्राणो वै दक्षोऽपानः क्रतुस्तस्माज्जञ्जभ्यमानो ब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायुरेति" इति। गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमान,

---

४० आ ह– हविर्भावस्तुत्वेन। ४१. ग.हो१– तर्हि। ४० आ– अप। ४३ अ इ उ जो ना पा हा– प्राबल्यात्। ४४. अ इ उ जो हा– °रीये तु ब्राह्मणेन, ना– °रीये तु ब्राह्मणे क– °रीये ब्राह्मणे। ४५–४५. अ इ उ पा–तत्रानुष्ठानस्योक्तविध्यधीनत्वादग्नीषोमीयस्य पूर्वत्वे, ह हो१–अत्रानुष्ठानेऽक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानमिति, जो ना हा– तत्रानुष्ठानस्य प्रथममनुष्ठाने। ४६ अ इ उ जो पा हा– यथाजर्य°, ना हो१– तथाध्वर्य°। ४७ आ हा हो१– यजमान°। ४८ क ना जो ह– इत्याम्नाय, हो१–इत्याम्नाय तत्°। ४९. हा– मन्त्रैश्च। ५० ह–प्रथमानु°।

तस्य वाक्यात् मन्त्रोक्ति प्रतीयते। वाक्यं च प्रकरणाद्बलीय । तस्मात् केवल मुख्य इति चेत्। मैवम्। क्रतावपि जञ्जभ्यमानपुरुषसम्भवेन वाक्यप्रकरणयोर्विरोधाभावे सत्युभाभ्या क्रतुयुक्तपुरुषसंस्कारत्वाव गमात्[51] ॥

तत्रैव प्रथमपादे चिन्तितम्—

" [52]वार्त्रघ्न्यौ पौर्णमासे स्तो वृधन्वत्यौ तु दर्शगे।
इति [53] प्रधानशेषत्वमुक्त किं[53] वा व्यवस्थिति ॥
क्रमेण प्रापिता [54]मन्त्राश्चत्वारोऽप्याज्यभागयो ।
क्रमाद्वाक्यं बलीयोऽत एषा दर्शादिशेषता ॥
न मुख्ये सोम एकोऽस्ति नाऽऽधारत्वादिकालयो ।
दर्शादेरव्यवस्थित्याऽप्राप्तौ वाक्याद्व्यवस्थिति " ॥ (जैन्या ३ १ २९-३१ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते–" तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्" (तैस २ ५ ६ ) इति। तत्रैव वार्त्रघ्नीयुगल वृधन्वतीयुगल च होतृकाण्ड आज्यभागयो क्रमे "अग्निर्वृत्राणि जङ्घनत्" (तैब्रा ३ ५ ६ ) इत्यनुवाकेनाऽऽम्नातम्[55]। उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरव गम्यते। तत्र वाक्यस्य प्रबलत्वादेषा मन्त्राणा दर्शपूर्णमासयागाङ्गत्व [56] न त्वाज्यभागाङ्गत्वम् [56] इति प्राप्ते ब्रूम –" अग्निर्वृत्राणि जङ्घनत्" (तैब्रा ३ ५ ६ ) इत्याग्नेयी प्रथमा वार्त्रघ्नी। "त्व सोमासि सत्पति " (तैब्रा ३ ५ ६ ) इति सौम्या द्वितीया वार्त्रघ्नी। "अग्नि प्रत्नेन जन्मना" (तैब्रा ३ ५ ६ ) इत्याग्नेयी प्रथमा वृधन्वती। "सोम गीर्भिष्ट्वा वयम्" (तैब्रा ३ ५ ६ ) इति सौम्या द्वितीया वृधन्वती। तत्र मुख्ययो [57]दर्शपूर्णमासयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यात्व[58] कथंचित् [59]भवतु। सौम्ययोस्तु तत्र सम्भवति। सोमदेवताया अभावात्। न ह्यग्नीषोमीयेऽपि केवल सोमो विद्यते। किं च [60] पूर्णमासे, अमावास्यायामिति [60] [61]सप्तमीभ्याम् आधारत्व गम्यते। [62]तच्च यागवाचित्वे यागस्य मुख्यत्वात्र सम्भवति। कालस्य तूपसर्जनत्वात् तद्वाचित्व युक्तम्। किं च प्रधानमन्त्रानुवाक्यानन्तर मेवायमनुवाक पठित । स चाऽऽज्यभागयोरङ्गयो क्रमो न तु मुख्ययोर्दर्शपूर्णमासयो । तस्मात्र मन्त्र चतुष्टयस्य मुख्ययागाङ्गत्व [63] किं तु आज्यभागाङ्गत्वम् [63]। तन्वतत् क्रमेणैव लब्ध तत्राप्याग्नेये प्रथम आज्यभागे मन्त्रोऽप्याग्नेय । सौम्ये द्वितीये सौम्य इत्येषा व्यवस्था लिङ्गेनैव लभ्यते। [64]यद्यम्। तथाऽपि[65] वार्त्रघ्नीयुगल पूर्णमासे वृधन्वतीयुगलममावास्यायामित्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येन [66]विधीयते इति न [66]वैयर्थ्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाक ॥

---

५१ अ इ उ जो ना पा हा–°त्वाभ्युपगमात्। ५२ अ इ उ ड पा–वार्त(!)घ्नी, जो गृ हो१–वार्त्रघ्नी। ५३–५३ अ इ उ पा–°शेषत्वमुतास्मिन् वा। ५४ अ इ उ पा–मन्त्रा श्रुत्या नैष्याच°। ५५ अ इ पा–इत्यादिनानुवाकेनाम्नातम्। ५६–५६ अ उ ड पा हो१–'न त्वाज्यभागाङ्गत्वम्' नास्ति। ५७ क जो ना हा–°मासयागयोराग्नेय°। ५८ हा–पुरोनुवाक्यार्थत्वम्। ५९ अ इ उ पा हो१–भवति। ६०–६० आ क जो ना–पौर्णमास्याममावा°, अ इ उ पा–पौर्णमासे अमावास्या°। ६१ अ इ पा–सप्तम्या। ६२ गृ–तत्र। ६३–६३ अ इ उ पा गृ हो१–'किं तु आज्यभागाङ्गत्वं' नास्ति। ६४–६४ अ इ उ पा–'यद्यम् तथापि' नास्ति, ड हो१–यद तथापि। ६५ क हो१–अभिधानं। ६६ क ड जो ना हा हो१–तद्वैयर्थ्यम्।

इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत् तं निरवपत् तेन वै स मृधोऽपाहत यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृधं एव तेन यजमानोऽपं हत इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि ( १ )

इन्द्रम् । वृत्रम् । जघ्निवाꣳसम् । मृधः । अभि । प्रेति । अवेपन्त । सः । एतम् । वैमृधम् । पूर्णमास इति पूर्ण-मासे । अनुनिर्वाप्यमित्यनु-निर्वाप्यम् । अपश्यत् । तम् । निरिति । अवपत् । तेन । वै । सः । मृधः । अपेति । अहत । यत् । वैमृधः । पूर्णमास इति पूर्ण-मासे । अनुनिर्वाप्य इत्यनु-निर्वाप्यः । भवति । मृधः । एव । तेन । यजमानः । अपेति । हते । इन्द्रः । वृत्रम् । हत्वा । देवताभिः । च । इन्द्रियेण । च । वीति । आर्ध्यत । सः । एतम् । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । अमावास्यायामित्यमा-वास्यायाम् । अपश्यत् । ऐन्द्रम् । दधि

इन्द्र वृत्रमित्यादि ॥ वैमृधस्यैकादशकपालस्य विधिः । [१]वृत्रं हतवन्तम् [२]इन्द्रं [३]मृधः सङ्ग्रामाभिमुख्येन आगत्य प्रकर्षेणावेपयन् । स एतमित्यादि । विमृदिन्द्र , तस्येदं कर्म [४]वैमृधं प्रधानानन्तरम् [५]अनुनिर्वाप्यम् । गतमन्यत् ॥

इन्द्रो वृत्रं हत्वेत्यादि ॥ ऐन्द्राग्नस्य विधिः , ऐन्द्रस्य च दध्नः ॥

[१]द्वितीयेऽग्नीषोमयागोऽभिहितः पूर्णिमादिने ॥

अथ तृतीयेऽमावास्यायां सान्नाय्ययागो वक्तव्यः ।

इन्द्रमिति ॥ तत्र प्रथमं तावत् पौर्णमास्यामनुनिर्वाप्यं वैमृधं विधित्सुः [१] प्रस्तौति– 'इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत् तं निरवपत् तेन वै स मृधोऽपाहत' इति ॥ अथ य इन्द्रः [२]वृत्रं हतवांस्तम् [३]इन्द्रं [४]मृधः वृत्रपक्षपातिनो वैरिणोऽभितः समागत्य प्रवेपनं भयमुत्पादयितुमुपक्रान्ताः । विनाशिता मृधो वैरिणो येन देवेनासौ [५]विमृत् । स देवो यस्यैतादृशस्य पुरोडाशस्य सोऽयं वैमृधः । तं पुरोडाशं [६]पूर्णमासयागे [७]अनुनिर्वाप्यं प्रधानकर्मणः पश्चान्निर्वापयोग्यम् [८]अपश्यत् ॥

यदिति ॥ अथ विधत्ते– 'यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हते' इति ॥

इन्द्र इति ॥ अथ सान्नाय्यनामकमैन्द्रं दधि विधातुं प्रस्तौति– 'इन्द्रो वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि तं निरवपत् तेन वै स देवताश्चेन्द्रियं

तं निरवपत् तेन वै स देवताश्चेन्द्रियं चावारुन्द्ध यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्द्ध इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं ( २ ) पृथिवीमनु व्यारत् तदोषधयो

( १ )। तम्। निरिति। अवपत्। तेन। वै। स। देवता। च। इन्द्रियम्। च। अवेति। अरुद्ध। यत्। आग्नेय। अष्टाकपाल इत्यष्टा कपाल। अमावास्यायामित्यमा वास्यायाम्। भवति। ऐन्द्रम्। दधि। देवता। च। एव। तेन। इन्द्रियम्। च। यजमान। अवेति। रुन्द्धे। इन्द्रस्य। वृत्रम्। जघ्नुष। इन्द्रियम्। वीर्यम्। पृथिवीम्। अनु। वीति। आर्छत्। तत्। ओषधय। वीरुध। अभवन्। स। प्रजापतिमिति प्रजा पतिम्। उपेति। अधावत्। वत्रम्। मे। जघ्नुष। इन्द्रियम्। वीर्यम् ( २ )। पृथिवाम्। अनु। वीति। आरत्। तत्। ओषधय।

‘इन्द्रस्य वृत्र जघ्नुष’ इत्यादिना सानाय्यादीनामुपत्तिक्रम दर्शयति– वृत्र हतवत इन्द्रस्य इन्द्रिय वीर्यं च[२] पृथिवीम् अनुप्रविश्य वि आर्च्छत् त्रिविध व्याप्तमभवत्। अर्ते “पाघ्रा°” (पा ७ ३ ७८) इत्यादिना ऋच्छादेश। तत् च पृथिवीमनुप्रविष्टम् इन्द्रिय वीर्यं च ओषधय वीरुध च अभवन् तदात्मना परिणतमभूत्। “ओषध्य फलपाकान्ता * लता गुल्माश्च वीरुध *” (द्र अको २ ४ ६ ९) इति। अथेन्द्र प्रजापतिम् उपाधावत्, ‘वृत्र जघ्नुष’ इत्यादि वदन्। अथ तच्छ्रुत्वा प्रजापति पशून् अब्रवीत्

चावारुन्द्ध’ इति॥ [५]इन्द्र वृत्रवधेन भीतो दूरे पलायमान स्वकीयाभि देवताभि [६]च स्वकीयेन सामर्थ्येन [७]च [७]व्यार्छत वियुक्तोऽभूत्॥

यदिति॥ अथ विधत्ते – ‘यदाग्नेयोऽष्टाकपालोऽमावास्याया भवत्यैन्द्र दधि देवताश्चैव तेनेन्द्रिय च यजमानोऽव रुन्द्धे’ इति॥ अत्राऽऽग्नेयो न विधीयते। षष्ठे प्रपाठके–“यदाग्नेयोऽष्टाकपालोऽमावास्याया च पौर्णमास्या चाच्युतो भवति” (तैस २ ६ ३) इति वाक्यद्वये विधानात्। अत एव ‘ऐन्द्राग्नैकादशकपाल-विध्युपस्थापनाय क्षयमर्थवाद – यदा केवलेनाप्याग्नेयेन देवतानामिन्द्रियस्य चावरोधो भवति तदानीमैन्द्राग्नेन तदवरोध इति किमु वक्तव्यमिति। [९]अनया श्रुत्या[९] तद्विधिरनुमीयते। शाखान्तरे समानप्रकरणे स्पष्ट तद्विधानात्। ऐन्द्रदधिविधिस्त्वसंदिग्ध एव॥

इन्द्रस्येति॥ तमेत विधिं स्तोतु सानाय्यनिर्वचन दर्शयति– ‘इन्द्रस्य वृत्र जघ्नुष इन्द्रिय वीर्यं पृथिवीमनु व्यार्छत् तदोषधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्र मे जघ्नुष इन्द्रिय वीर्यं पृथिवीमनु व्यारत् तदोषधयो वीरुधोऽभूवन्निति स प्रजापति पशूनब्रवीदेतदस्मै स नयतेति तत् पशव ओषधीभ्योऽ-

२. तत्र– ‘च’ इत्यस्यानन्तर ‘न’। *–* [ “प्रतानैर्वीरुध स्मृता” इति चरक–संहिताया सूत्रस्थाने ( १ ७२ ) ]

५ ह शृं हो१– ‘इन्द्र’ नास्ति। ६ अ इ उ ओ ना पा हा– ‘च’ नास्ति। ७ आ क हो१– व्यृद्धो, शृं– व्यर्धो। ८ आ हा– ऐन्द्राग्नविध्युपस्थापनाय। ९–९ आ ह–अनया स्तुत्या।

(३) शृतं कुरुतेत्यब्रवीत् तदस्मै शृतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छृतस्य शृतत्वꣳ समनैषुः प्रत्यधुक्षञ्छृतमक्रन् न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वं

शृतम्। कुरुत। इति। अब्रवीत्। तत्। अस्मै। शृतम्। अकुर्वन्। इन्द्रियम्। वाव। अस्मिन्। वीर्यम्। तत्। अश्रयन्। तत्। शृतस्य। शृतत्वमिति शृत त्वम्। समिति। अनैषुः। प्रतीति। अधुक्षन्। शृतम्। अक्रन्। न। तु। मा। धिनोति। इति। अब्रवीत्। एतत्। अस्मै। दधि। कुरुत। इति। अब्रवीत्। तत्। अस्मै। दधि। अकुर्वन्। तत्। एनम्। अधिनोत्। तत्। दध्न। दधित्वमिति दधि त्वम्।

तत् तु मयि न श्रयते न पच्यते न मयि प्रीतिं करोति। श्रिञ् पाके, व्यत्ययेन शप्। अथ प्रजापति पशून् अब्रवीत्। एतत् अस्मै इन्द्राय शृत पक्व कुरुत। यद्वा–न तु मयि श्रयते स्थितिं न करोति। श्रीञ् सेवायाम्। एवमिन्द्रेणोक्ते प्रजापतिरब्रवीत् एतदस्मै शृत पक्व कुरुत यथाऽस्मिन् श्रयत इति। शृतेति "शृत पाके" (पा ६ १ २७) इति निपात्यते। यद्वा–शृणाते श्रृतमिति छान्दस सम्प्रसारणम्॥ आह च–तत् अश्रयन्, तत् शृतस्य शृतत्वम् इति। अथेन्द्र आह– सम् अनैषु प्रति अधुक्षन् शृतम् अक्रन् अकार्षु। न तु मा धिनोति प्रीणयति इति। करोते लुङि "मन्त्रे घस०" (पा २ ४ ८०) इति च्लेर्लुक्। धिवि

भो प्रजापते, त्वदाज्ञया पशव समनैषु प्रत्यधुक्षन् च क्षीररूप तद्वीर्यं मयि न श्रयते पाकाभावात् मदुदरे तन्न जीर्यति [15] इति उक्तवान्। तत प्रजापति [16] पाककर्तॄन् प्रति शृत पक्व कुरुत इति अब्रवीत्। तथा कृते सति [17] तदिन्द्रियसामर्थ्यरूप पक्व पयोऽस्मिन्निन्द्रोदरे सम्यगाश्रितमभूत्। [18] तस्मात् श्रा पाक इत्यस्मात् श्रिञो वा शृतमिति नाम [19] निष्पन्नम्॥

समिति॥ अथ दधिनामनिर्वचन दर्शयति– 'समनैषु प्रत्यधुक्षञ्छृतमक्रन्न तु मा धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वम्' इति। सनयनप्रतिदोहनशृतत्वानि सपन्नान्येव, किंतु तच्छृत मा तु न धिनोति न प्रीणयतीत्युक्त [20] प्रजापतिरातञ्चनकर्तॄन् प्रति दधि कुरुत इति अब्रवीत्। तत् च दधिकृत सत् एनम् इन्द्रम् अधिनोत् अप्रीणयत्। तस्मात् [21] धिनोतीति व्युत्पत्त्या [21] दधिनाम सपन्नम्। अत्र 'ऐन्द्र दधि' इति विधिश्चस्पष्ट एव दृश्यते [22]। शृतनामनिर्वचनार्थवादेन 'ऐन्द्र पय' इत्यपि [23] विधिमुन्नयेत्। अन्यथा वक्ष्यमाणशृतावदानविचारानुदय प्रसङ्गात्॥

५–५. तै३ मे ल– कर्तुर्मपि। ६–६ तै३ मे ट– अक्रन्।

१५. आ क– इत्यर्थम्। १६ आ हा– पाक, हो१– शाककर्तॄन्। १७ अ आ इ न ओ ना पा हा– °सामर्थ्यं। १८–१८. अ आ इ उ ओ पा हा– पमन्, ह हो१ ग१– पमान् परमाश्रित च। १९ ह– र्षपनम्। २०. आ– °तीत्युक्ते। २१–२१ आ– 'धिनोतीति व्युत्पत्त्या' नास्ति। २२ १० आ श्रे– 'दृश्यते' नास्ति। २३ आ– 'अपि' नास्ति।

ब्रह्मवादिनो वदन्ति दध्नः पूर्वस्यावदेयं (४) दधि हि पूर्वं क्रियत इत्यनादृत्य तच्छृतस्यैव पूर्वस्याव द्येदिन्द्रियमेवास्मिन् वीर्यं॰ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं तद्यत् क्वलै राक्षसं तद्यत् तण्डुलैर्वैश्वदेवं

ब्रह्मवादिन इति ब्रह्म वादिन । वदन्ति । दध्न । पूर्वस्य । अवदेयमित्यव देयम् (४) । दधि । हि । पूर्वम् । क्रियते । इति । अनादृत्येत्यना दृत्य । तत् । शृतस्य । एव । पूर्वस्य । अवेति । द्येत् । इन्द्रियम् । एव । अस्मिन् । वीर्यम् । श्रित्वा । दध्ना । उपरिष्टात् । धिनोति । यथापूर्वमिति यथा पूर्वम् । उपेति । एति । यत् । पूतीकैः । वा । पर्णवल्कैरिति पर्ण-वल्कैः । वा । आतञ्च्यादित्या तञ्च्यात् । सौम्यम् । तत् । यत् । क्वलै । राक्षसम् । तत् । यत् । तण्डुलै । वैश्वदेवमिति वैश्व देवम् ।

प्रीणने, इदित्वान्नुम् (पा ७ १ ५८), "धिन्विकृण्व्योर च" (पा ३ १ ८०) इत्युप्रत्यय । अथ प्रजापति [v]अब्रवीत् पशून् [v]एतत् [v]अस्मै [v]दधि प्रीणन [v]कुरुत [v]इति । ते च [v]अस्मै प्रीणनम् [v]अकुर्वन् । तदेनमित्यादि । गतम् । धिनोतीति दधि । धिनोते नि, द्विवचनादि । दधातिर्वा प्रीणने, इदित्वान्नुम् (?), "आदृगमहन°" (पा ३ २ १७१) इति कि प्रत्यय । दध्न इत्यनडादेशस्योदात्तत्वादुदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

ब्रह्मवादिन इत्यादि ॥ [v]अतीतायामेव रजन्या [v]दधि उत्पाद्यते उत्तरेद्यु प्रातर्दोह [v]इति दध्न पूर्वत्वमिति । एतद्दूषयति– अनादृत्येत्यादि । यदिन्द्रस्येन्द्रियादिकमोषधीभ्य आनीय इन्द्राय प्रतिदुग्ध तदिन्द्रे प्रथम [v]श्रित्वा सेवित पक्व [v]वा कृत्वा [v]उपरिष्टात् उत्तरकाल [v]दधिभागेन इन्द्र [v]धिनोति तस्माच्छृतस्यैव पूर्वत्वम् । गतमन्यत् ॥

यदित्यादि ॥ पूतीक सोमसदृशो लताविशेष । पर्णवल्क पलाशवल्कम् । आतञ्चन द्रव्यान्तरसंप्रयोगेन पयसो घनीभाव । तञ्च् सकोचने । क्वल हस्वबदर । तण्डुला गता ।

ब्रह्मवादिन इति ॥ तमेव विचारमभिप्रेत्य पूर्वपक्षमुपन्यस्यति– 'ब्रह्मवादिनो वदन्ति दध्न पूर्वस्यावदेय दधि हि पूर्वं क्रियत इति' इति ॥ यस्मात् पूर्वदिने रात्रौ [v]दधि [v]क्रियते तस्मादुत्तमवदान [illegible] [v]दध्न स्वरूपमेव पूर्वम् [v]अवदेयम् ॥

अनादृत्येति ॥ तमेव पूर्वपक्ष [v]दूषयित्वा सिद्धान्त विधत्ते– 'अनादृत्य तच्छृतस्यैव पूर्वस्याव द्येदिन्द्रियमेवास्मिन् वीर्यं श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति' इति । [v]तत् पूर्वं दध्यवदानम् [v]अनादृत्य [illegible] [v]एव स्वरूप पूर्वमवदेयम् । तथा सति [v]अस्मिन् यजमाने [v]इन्द्रियरूपं वीर्यं [v]प्रथम [illegible] [v]उपरिष्टात् [v]दध्ना प्रीणयति । इति पूर्वभावि दधि पश्चाद्भावि [illegible] भवति ॥

७ [illegible]– [illegible]म् । ८ [illegible]–'वा' नास्ति । ९ [illegible]– दधिभागेन, [illegible]–दधिभागेन । [illegible] [illegible]– [illegible], [illegible]–'अपि' नास्ति । २५ [illegible]– [illegible] । २६ [illegible] [illegible]– '[illegible]' नास्ति ।

तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत् सेन्द्रं दध्नाऽऽतनक्ति ( ५ ) सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्या इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्यः प्रथमोऽनुविन्दति

---

तत् । यत् । आतञ्चनेनेत्या-तञ्चनेन । मानुषम् । तत् । यत् । दध्ना । तत् । सेन्द्रमिति स इन्द्रम् । दध्ना । एति । तनक्ति (५)। सेन्द्रत्वायेति सेन्द्र त्वाय । अग्निहोत्रोच्छेषणमित्यग्निहोत्र-उच्छेषणम् । अभ्यातनक्तीत्यभि - आतनक्ति । यज्ञस्य । सतत्या इति स तत्यै । इन्द्र । वृत्रम् । हत्वा । पराम् । परावतमिति परा-वतम् । अगच्छत् । अपेति । अराधम् । इति । मन्यमान । तम् । देवता । प्रैषमिति प्र-एषम् । ऐच्छन् । स । अब्रवीत् । प्रजापतिरिति प्रजा पति । य । प्रथम । अनुविन्दतीत्यनु विन्दति ।

---

आतञ्चनद्रव्य दधि प्रसिद्धम् । [v]सेन्द्रम् इन्द्रेण देवतया सहितम् । अग्निहोत्रोच्छेषणम् [१०]अग्निहोत्र होमशेष यवागूशेष । तत् [v]अभि [v]आतनक्ति दध्ना आतच्य उपरि आ तनक्ति, [v]यज्ञस्य अविच्छेदाय ॥

इन्द्रो वृत्र हत्वेति ॥ पितृयज्ञविधि । परा परावतमिति । दूरदेशम् [v]अगच्छत् । " उपसर्गाच्छन्दसि धात्वर्थे " (पा ५ १ ११८) इति वति । [v]अप [v]अराधम् [११]अपारात्सम् । छान्दस सिङ्लुक् । वृत्र हतवान् [v]इति सापराधमात्मान [v]मन्यमान दूरात् गन्तु श्रेय इति निश्चित्यागच्छत् । अथ [१२][v]देवता [v]त [v]प्रैष प्राप्तुम् [v]ऐच्छन् । इष गतौ, [१३]छान्दस सिङ्लुक्[१३] । सोऽब्रवीदित्यादि ।

---

यदिति ॥ अथाऽऽतञ्चन विधत्ते–" यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्य तद्यत् क्वलै राक्षस तद्यत् तण्डुलैर्वैश्वदेव तद्यदातञ्चनेन मानुष तद्यद्दध्ना तत् सेन्द्र दध्नाऽऽतनक्ति सेन्द्रत्वाय " इति ॥ सोमवल्लीसमानाया लताया खण्डा पूतीका । [२८]पलाशवृक्षस्याशा पर्णवल्का । भौदबदरफलानि क्वला । ईषदम्लतक्रमातञ्चनम् । पूतीकादिभिरातञ्चन सोमादीना प्रियम् । तथा सति [२९]अत्र इन्द्रप्रीत्यै दध्ना समातञ्च्यात् ॥

अग्निहोत्रोच्छेषणमिति ॥ दध्नाऽऽतञ्चनस्योपर्यग्निहोत्रार्थयवागूशेषेणातञ्चन विधत्ते– ' अग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सतत्यै ' इति ॥ दर्शयागस्याग्निहोत्रेण सहाविच्छेद सतति ॥

इन्द्र इति ॥ अथ पिण्डपितृयज्ञ विधत्ते– ' इन्द्रो वृत्रꣳ हत्वा परा परावतमगच्छदपाराधमिति मन्यमानस्त देवता प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्य प्रथमोऽनुविन्दति तस्य प्रथम भागधेयमिति त पितरोऽन्वविन्दन् तस्मात् पितृभ्य पूर्वेद्यु क्रियते ' इति । वृत्रवधेनासुराणामपराध कृतवान् अस्मि 'इति

---

१०. त३ मै ल– °होमशेष । ११ त३– अपाराद्धम् । १२ मै– देवा । १३–१३ मै– ' छान्दस सिङ्लुक् ' नास्ति, मै४– छान्दसो णमुल् ।

---

२८ क हो१– °शकाखस्याशा । २९ क हो१– ' अत्र ' नास्ति ।

तस्यै प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्यां प्रत्याऽगच्छत् तं देवा अभि समगच्छन्तामा वै नो( ६ )ऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वं

तस्यै । प्रथमम् । भागधेयमिति भाग धेयम् । इति । तम् । पितरः । अन्विति । अविदन् । तस्मात् । पितृभ्य इति पितृ भ्य । पूर्वेद्यु । क्रियते । स । अमावास्यामित्यमा - वास्याम् । प्रति । एति । अगच्छत् । तम् । देवा । अभि । समिति । अगच्छन्त । आमा । वै । न ( ६ ) । अद्य । वसु । वसति । इति । इन्द्र । हि । देवानाम् । वसु । तत् । अमावास्याया इत्यमा वास्याया । अमावास्यत्वमित्यमावास्य - त्वम् ।

गतम् । Vअनु Vविन्दति अनुक्रमेण लभते । Vपूर्वेद्यु पूर्वस्मिन्नहि । “ सद्य. परुत्° ” ( पा ५ ३·२२ ) इत्यादिना निपात्यते ।

Vअमावास्या Vप्रति, लक्षणे कर्मप्रवचनीयत्वम् (पा १·४ ८४), अमावास्यया गमन लक्ष्यते इति । अथामावास्याया Vदेवा Vतम् इन्द्रम् Vअभि Vसमगच्छन्त आभिमुख्येन सगता अभवन् । कथ [14]वदन्त ? Vअद्य अस्मिन्नहि Vन अस्माक Vवसु अस्मदीय धनम् इन्द्रोऽयम् Vअमा सहास्माभि Vवसति Vइति । एव [15]देवा वदन्त [16]एनमिन्द्रमभितः समागताः । इन्द्रो हीति । [17]Vवसु वरिष्ठ [18]द्रव्यम् । अमावास्यत्वमिति । अमा [19]सह वसन्त्यस्यामिन्द्रो देवताश्चेत्यमावास्या । अधिकरणे (पा ३ १ १२२) ण्यत् । इद च व्युत्पत्त्यन्तरम्, अमा वसत सूर्याचन्द्रमसावस्याम् इति [20]व्युत्पत्तिदर्शनात् ॥

मन्यमान इन्द्र भीतोऽत्यन्त दूरम् अगच्छत् । तम् इन्द्रं प्रति देवता आह्वानम् ऐच्छन् । देवताना मध्ये य अन्विष्य प्रथमम् इन्द्र लभते तस्य प्रथमम् भागो दीयते इति प्रजापतिनोक्ता. पितर प्रथमम् इन्द्र यस्मादलभन्त, तस्मात् पितृभ्य पूर्वेद्यु पिण्डपितृयज्ञ कुर्यात् । दर्शयागदेवतानाममावास्यायामारम्भ प्रतिपदि तद्याग । पितृणा त्वमावास्यायामेव पिण्डदानम् ॥

ननु ब्राह्मणग्रन्थे प्रथमकाण्डस्य तृतीयप्रपाठकेऽनन्यानुवाके महता प्रपञ्चेन पिण्डपितृयज्ञो विहित । बाढम् । एव तर्हि सान्नाय्यप्रशसार्थमत्र तदनुवादोऽस्तु ॥

स इति ॥ तामेव स्तुतिं द्योतयितुममावास्यानिर्वचन दर्शयति– ‘ सोऽमावास्यां प्रत्याऽगच्छत् तं देवा अभि समगच्छन्तामा वै नोऽद्य वसु वसतीतीन्द्रो हि देवाना वसु तदमावास्याया अमावास्यत्वम् ’ इति ॥ पितृभिरन्विष्य लब्ध स इन्द्र अमावास्याया पलायनदेशात् प्रतिनिवृत्त

[14]. तै३– ‘ वदन्त ’ इत्यस्यानन्तरम् ‘ आहु ’ । [15]. मै४– तृप्त्या । [16] तै३ मै४ °मभिगता । [17]. तै३– ‘ वसु ’ नास्ति । [18]. मै४– द्रव्यं वसु । [19]. तै३ ले– ‘ सह ’ नास्ति [20]. तै३– °दर्शनार्थम् ।

[30]. जो ना– देवाना, पा– ‘ देवानां ’ नास्ति । [31]. अ इ ठ.जो पा हा– प्रतिपदि निर्दिष्टं, ना– प्रतिनिर्दिष्टं ।

ब्रह्मवादिनो वदन्ति किंदेवत्यं॑ सानाय्यमिति॑ वैश्वदेवमिति॑ ब्रूयाद्विश्वे॑ हि तद्देवा भाग॒धेय॑मभि स॒मग॑च्छन्तेत्यथो॑ खल्वैन्द्रमित्येव ब्रूयादिन्द्रं॑ वाव ते तद्भिषज्यन्तो॒ऽभि सम॑गच्छन्तेति॑ ॥ ३ ॥

[ दर्धि मे जघ्नुष इन्द्रिय वार्यमित्यब्रवीदेतदस्मा अनुदेयं तनक्ति नो द्विर्चत्वारिंशच्च ] ॥

ब्रह्मवादिन इति ब्रह्म वादिन॑ । व॒द॒न्ति॒ । किंदेवत्य॑मिति॒ कि-दे॒वत्य॑म् । सा॒नाय्य॑मिति॒ सा-नाय्य॑म् । इति॑ । वैश्वदेवमिति॒ वैश्व दे॒वम् । इति॑ । ब्रू॒यात् । विश्वे॑ । हि । तत् । दे॒वा । भा॒गधेय॑मिति॒ भाग धेय॑म् । अ॒भीति॑ । स॒मग॑च्छ॒न्तेति॒ सम् अग॑च्छन्त । इति॑ । अथो॒ इति॑ । खलु॑ । ऐ॒न्द्रम् । इति॑ । ए॒व । ब्रू॒यात् । इ॒न्द्रम् । वाव । ते । तत । भि॒षज्य॑न्त । अ॒भि । समिति॑ । अ॒गच्छ॒न्त॒ । इति॑ ॥ ३ ॥

[ शवा १ ६ ४ ]

वैश्वदेवमिति ॥ 'वृत्रवधादनन्तरम् 'इन्द्रिय वीर्यं च ' दूरतर गतम् । पितृभि प्रत्यानीतमिन्द्रममावास्याया सानाय्येन प्रवृद्धेन्द्रियवीर्यं कर्तुं 'विश्वे 'देवा 'तत् सानाय्य एव ऐन्द्रम् 'भागधेयम् 'अभि 'समगच्छन्त । तस्माद्वैश्वदेव भवितु युक्तमिति ॥

दूषयति— अथो इति । तदानीं देवा 'इन्द्र 'भिषज्यन्त एव 'अभि 'सम् 'अगच्छन्त न 'त्वामभागलब्धये । तल्लाभहेतौ' शतृप्रत्यय (पा ३ २ १२६), इन्द्रभैषज्यार्थमेव अभिसम गच्छन्त । तस्माद्विश्वे देवा 'अप्रसक्ता 'एवेति 'ऐन्द्रम् 'इति 'एव उत्तर समीचीनमिति । भिषज्यति कण्ड्वादियगन्त (पा ३ १ २७) ॥

इति द्वितीये पञ्चमे तृतीयोऽनुवाक ॥

---

समागत । 'तदा 'देवा 'तम् इन्द्रम् अभिमुखीकर्तुं सम्प्राप्ता परस्परमिदमब्रुवन्– 'अय 'न अस्माक 'वसु श्रेष्ठ धनम् 'अमा 'वसति सह तिष्ठति, सर्वेषा साधारणत्वेन वर्तत इत्यर्थ । किं तद्वस्विति चेत्' तदुच्यते–'इन्द्र' खलु सर्वेषा 'देवाना 'वसु श्रेष्ठ धन, तस्मिन् वर्तमाने सति स्वामिलाभात् । यस्माद्देवा एवमुक्तवन्तस्तस्मादमा वसत्यस्येति व्युत्पत्त्या 'अमावास्या नाम' सपन्नम् ॥

२१ मै४–वृत्रवधानन्तरम् । २२-२३ मै४ इन्द्रियवीर्यहीनम् । २३. मै४–एतद्दूषयति–अथो खल्विति । ऐन्द्रमित्येव उत्तरं ब्रूयात् । हेतुमाह इन्द्र वा इति । यद्यपि विश्वेऽपि देवा अभिसमगच्छन्त तथापि गिरवि व्यत्ययेन इन्द्रस्यैव प्राधान्यात् ऐन्द्रमेव भवितुमर्हतीति । यद्वा तदानीं विश्वेदेवा भागधेयं वयमपि भागिनो भूयास्मेति । एवमात्मीयभागभूतमेव तत् समगच्छन्त । तस्मात् वैश्वदेव भवितु युक्तमिति दूषयति । २४–२८ मै४–°भागलिप्सया हेतौ । २५ त३ मै८ – प्रसक्ता चेति । २६ मै४–'एवेति' । इत्यस्यानन्तरम् 'ऐन्द्रमिति' ।

३२. आ छ ते हो१ – तदा ते । ३३ अ इ ठ ओ ग पा हा हो१ – अय । ३४ आ – 'चेत्' नास्ति । ३५–३५ ग१– तन्नाम ।

ब्रह्मवादिन इति ॥ 'ऐन्द्रं दधि' इति विधिवाक्ये सांनाय्यस्य यदैन्द्रत्वमुक्तं तदेव पूर्वोत्तरपक्षाभ्यां द्रढयति– 'ब्रह्मवादिनो वदन्ति किंदेवत्यꣳ सांनाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति' इति॥ पितृभिरानीयमानमिन्द्रमभिमुखीकर्तुं सर्वेऽपि 'देवाः यदा समागच्छंस्तदा[36] तत्सांनाय्यलक्षणं [37]भागमभिलक्ष्यैव समागच्छन्निति [38-]'सांनाय्यं 'वैश्वदेवम्[-38] 'इति केषांचित् पक्षः। अथोशब्दः पक्षान्तरार्थः। भीत्या दूरदेशं गतम् 'इन्द्रम् 'भिषज्यन्तः एव भयनिवारणेन समाधित्सन्त एव 'ते [39]'देवास्तत्र समागताः, न तु सांनाय्यलिप्सया। तस्मात् सांनाय्यम् 'ऐन्द्रम् 'इति 'एव बुद्धिमान् 'ब्रूयात्॥

अत्र मीमांसा॥ चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

"संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।
द्वयोरङ्गमुतैकस्य द्वयोः स्यात् प्रक्रियावशात्॥
उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात्।
तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता"॥ (जैन्या ४.३.२०-२१)॥

दर्शपूर्णमासप्रकरणे श्रूयते–"सꣳस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" (द्र. आपश्रौ ३.१५.१) इति। तत्रेयं वैमृधेष्टिः प्रकरणबलान् प्रयाजादिवदुभयोरपि दर्शपूर्णमासयोरङ्गमिति चेत्। न। वाक्यस्य प्रबलत्वात्। न च 'संस्थाप्य' इति [40]'पौर्णमास्याः समाप्त्यभिधानात् [41-]तदङ्गत्वमयुक्तमिति वाच्यम्[-41]। दर्शसाधारणाङ्गसमाप्त्यभिप्रायेण [42]तदुपपत्तेः। तस्मादुत्पत्तिवाक्यादेककर्तृकत्ववाचिक्त्वाप्रत्ययाच्च पूर्णमासस्यैवाङ्गम्॥

द्वितीयाध्याये तृतीयपादे चिन्तितम्—

"[43-]दर्शपूर्णिमयोः प्रोक्तः[-43] आग्नेयः [44]केवलोऽप्यसौ।
दर्शे यदिति वाक्याभ्यां कर्मान्यद्वाऽनुवादगीः॥
अभ्यासादन्यकर्मत्वं द्विर्दर्शेऽसौ प्रयुज्यताम्।
एकत्वं प्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः"॥ (जैन्या २.३.२३-२४)॥

"यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" (तैसं २.६.२) इति कालद्वये विहितम्, "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति" (तैसं २.५.३) इति एकस्मिन् काले पुनर्विहितम्। [45]तत्राविशेषपुनःश्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः। तथा सति आग्नेययागस्य दर्शकाले द्विः प्रयोग इति चेत्। न। प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्यानुवादकत्वात्[46]। न चानुवादो व्यर्थः। विधेयैन्द्राग्नस्तुत्यर्थत्वात्। यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथाऽपि न केवलेनाग्निना साधुर्भवति[47]। इन्द्रसहितोऽग्निः समीचीनतरः। तस्मादैन्द्राग्नः कर्तव्य इति विधेयस्तुतिः। प्रयाजवैषम्यं तूक्तमेवानुसंधेयम्। तस्मादनुवादः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

३६. ब.ग.हो१ – °त्सदानीम्। ३७. ब.ग.हो१ – भागधेयम°। ३८–३८. ब.ग.हो१ – सांनाय्यस्य वैश्वदेवत्वम्। ३९. आ– देवास्त्विन्द्र। ४०. क– पौर्णमासस्य। ४१–४१. हो१– अङ्गत्वमयुक्तमिति वाच्यम्। ४२. आ.ट– उपपत्तेः। ४३–४३. को.ना– यो दर्शपूर्णमासोक्तः, ब.हो१– दर्शपूर्णमासयोः प्रोक्तः। ४४. अ.उ.ब.पा.ग– केवलोऽप्यसौ। ४५ क– तत्राविशेषे पुनः°; हा– तत्र विशेषपुनः°। ४६. आ– °स्यानुवादत्वात्। ४७. ग– °र्भवतीति।

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता(१)मिष्टिमपश्यन्नाग्नावैष्णव-

ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। सः। तु। वै। दर्शपूर्णमासाविति दर्श-पूर्णमासौ। यजेत। यः। एनौ। सेन्द्राविति स-इन्द्रौ। यजेत। इति। वैमृधः। पूर्णमास इति पूर्ण-मासे। अनुनिर्वाप्य इत्यनु-निर्वाप्यः। भवति। तेन। पूर्णमास इति पूर्ण-मासः। सेन्द्र इति स-इन्द्रः। ऐन्द्रम्। दधि। अमावास्यायामित्यमा-वास्यायाम्। तेन। अमावास्येत्यमा-वास्या। सेन्द्रेति स-इन्द्रा। यः। एवम्। विद्वान्। दर्शपूर्णमासाविति दर्श-पूर्णमासौ। यजते। सेन्द्राविति स-इन्द्रौ। एव। एनौ। यजते। श्वश्व इति श्वः-श्वः। अस्मै। ईजानाय। वसीयः। भवति। देवाः। वै। यत्। यज्ञे। अकुर्वत। तत्। असुराः। अकुर्वत। ते। देवाः। एताम् (१)। इष्टिम्। अपश्यन्। आग्नावैष्णवमित्याग्ना-वैष्णवम्। एकादशकपालमित्येकादश-कपालम्।

ब्रह्मवादिन इत्यादि॥ गतम्। य एनावित्यादि। अविदुषो नार्थः। [१]पूर्णमासे वैमृधेन [१]अमावास्यायाम् ऐन्द्रेण दध्ना च इत्येन विदित्वेष्टवते यजमानायोत्तरमुत्तरं दिनं प्रशस्ततरं [१]भवति॥

देवा वा इत्यादि॥ गतम्। एतामिष्टिमिति। वक्ष्यमाणां त्रिहविष्कां पौर्णमासीसमाप्त्यनन्तरं तस्या [१]अनुनिर्वाप्याम् अकुर्वन्। पौर्णमास्येनानुनिर्वाप्यसहिता फलं ददाति॥

उक्ते वैमृधसांनाय्ये द्वितृतीयानुवाक्ये॥

अथ चतुर्थे आग्नावैष्णवादयो वक्तव्याः॥

ब्रह्मवादिन इति॥ तत्राऽऽदौ तावत् [१]पूर्वानुवाकोक्तयोः दर्शपूर्णमासयोः प्रशंसामाह–'ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति' इति॥ [२-३]यः [२]एनौ [२]दर्शपूर्णमासयागौ [२]इन्द्रसहितौ [३]यजेत [३]स एव दर्शपूर्णमासयाजी न त्वन्यः। तयोश्च यागयोः [४]सेन्द्रत्वं वैमृधसांनाय्याभ्यां सम्पद्यते। [५]एवं विदुषः सेन्द्रयागेनो(णो)त्तरोत्तरदिने धनाधिक्यं [५]भवति॥

देवा इति॥ अथ पौर्णमास्यां कार्यमनुनिर्वाप्यमिष्ट्यन्तरं विधातुं प्रस्तौति–'देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते चरुं तां पौर्णमासं संस्थाप्यानु निरवपन् ततो देवा अभवन् पराऽसुरा' इति॥ देवानां यज्ञं दृष्ट्वा

१. घ॰ङ– अभिव्याप्याम्; ड– अभिव्याप्याम्।

१. आ– पूर्वोक्तानुवाक्ये। २–३. आ,ई– एनौ, ङ– एनौ। ३. ~~ इत्यस्यानन्तरं 'च'। ४ आ– यतो। ५. अ,इ,उ,ए. ङ– भैत्र्यं।

मेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳ सꣳस्थाप्यानु निरवपन् ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनु निर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताभ्य यज्ञं च भ्रातृव्यस्य वृङ्क्ते मिथुनान् पशून्त्सारस्वताभ्यां यावदेवास्यास्ति तत् ( २ ) सर्वं वृङ्क्ते पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्याꣳ हत्वा भ्रातृव्यं नाऽऽप्याययति

---

सरस्वत्यै। चरुम्। सरस्वते। चरुम्। ताम्। पौर्णमासमिति पौर्ण मासम्। सꣳस्थाप्येति स-स्थाप्य। अनु। निरिति। अवपन्। ततः। देवाः। अभवन्। परेति। असुराः। यः। भ्रातृव्यवानिति भ्रातृव्य-वान्। स्यात्। सः। पौर्णमासमिति पौर्ण-मासम्। सꣳस्थाप्येति स-स्थाप्य। एताम्। इष्टिम्। अनु। निरिति। वपेत्। पौर्णमासेनेति पौर्ण-मासेन। एव। वज्रम्। भ्रातृव्याय। प्रहृत्येति प्र-हृत्य। आग्नावैष्णवेनेत्याग्ना-वैष्णवेन। देवताः। च। यज्ञम्। च। भ्रातृव्यस्य। वृङ्क्ते। मिथुनान्। पशून्। सारस्वताभ्याम्। यावत्। एव। अस्य। अस्ति। तत् ( २ )। सर्वम्। वृङ्क्ते। पौर्णमासीमिति पौर्ण-मासीम्। एव। यजेत। भ्रातृव्यवानिति भ्रातृव्य-वान्। न। अमावास्यामित्यमा वास्याम्। हत्वा। भ्रातृव्यम्। न। एति। प्याययति।

---

'आह च– 'पौर्णमासेनैव' इत्यादि'। 'वृङ्क्ते वर्जयति स्वयं गृह्णाति। यस्मादेव तस्माद् 'यावत् किंचित् भ्रातृव्यस्य विद्यते 'तत् 'सर्वम् अनयेष्ट्या 'वृङ्क्ते ॥

नामावास्यामिति॥ तत्र पितृयज्ञ एव क्रियते। 'हत्वेत्यादि। उक्तम्–"प्रति वा एन पूर्णमास आऽमावास्याया प्याययन्ति" (तैस २.५.२) इति'। 'तत्राप्यायितस्य यथादनाप्यायनमेव गेय

---

'अथैवानुचरतामसुराणां दर्शमानं विजयं दृष्ट्वा 'देवा तानसुरान् वधयित्वाऽनुष्ठितेनानुनिर्वाप्येन सर्वं विजयं प्राप्ता 'असुरा च पराभूता ॥

साकंप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति

साकंप्रस्थायीयेनेति साकं-प्रस्थायीयेन। यजेत। पशुकाम इति पशु-काम। यस्मै। वै। अल्पेन। आहरन्तीत्या-हरन्ति। न। आत्मना। तृप्यति। न। अन्यस्मै। ददाति। यस्मै। महता। तृप्यति। आत्मना। ददाति। अन्यस्मै। महता। पूर्णम्। होतव्यम्। तृप्तः। एव। एनम्। इन्द्रः। प्रजयेति प्र-जया। पशुभिरिति पशु-भिः। तर्पयति।

इति लुप्यते, अमावास्याया प्याययन्ति इति *। तद्वत् पौर्णमास्या, पौर्णमासे भ्रातृव्यं हत्वा [4]अमावास्यालोपेन आप्यायनम् अस्य निवर्तयति। यावदमावास्यामाप्यायितस्य वृद्ध्या वृत्रस्य अमावास्याया ऊर्ध्वं वध क्रियते। तत्राप्यायितस्य वधादनाप्यायनमेव श्रेय इति लुप्यते अमावास्या॥

साकप्रस्थायीयेनेति॥ साकं सह ब्राह्मणे प्रतिष्ठते होतुमिति साकप्रस्थायी अध्वर्युः। तस्य सम्बन्धी साकंप्रस्थायीयो याग, [5]यत्र द्वौ सायदोहौ द्वौ प्रातर्दोहौ। तत्र ब्राह्मणाः पूर्णपात्रैः अध्वर्युं जुह्वन्तमनुजुह्वति। [6]अमावास्यैव निक्रियते। यस्मै वेति। [7]यस्मै [7]अल्पेन प्रमाणेन धनादिकम् [7]आहरन्ति [7]यथा स [7]न [7]आत्मना [7]तृप्यति। येनात्मनि तृप्तिर्नास्ति

भ्रातृव्यवान्नामावास्याः हत्वा भ्रातृव्यं नाऽऽप्याययति' इति॥ द्वितीयानुवाके वृत्रप्रसङ्ग इदमुक्तम्–"घ्नन्ति वा एन पूर्णमास आऽमावास्याया प्याययन्ति" (तैस २५.२) इति। तस्मादत्रापि पूर्णमासानुष्ठानेन [1]भ्रातृव्यं [1]हत्वा दर्शयागपरित्यागेन भ्रातृव्यस्याऽऽप्यायनं परित्यक्तवान् भवति॥

साकंप्रस्थायीयेन इति॥ अथ [11]दर्शस्य गुणविकृतिरूपं कंचिद्यागं विधत्ते–'साकप्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳ होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति॥ दधिक्षीरपूर्णाभिश्चतसृभिः कुम्भीभिः [12]ब्राह्मणात् हस्ताभिः[12] साकमध्वर्यो प्रस्थानं होमस्थानं प्रति प्रस्थानं यस्मिन् [13]यागे सोऽयं साकंप्रस्थायीयो [14]याग, तेन [1]पशुकाम [1]यजेत। [15]तत्र [1]महता [16]दधिक्षीरद्रव्येण [1]पूर्णं हवि [1]होतव्यम्। लोके च [17][1]यस्मै [18]राज्ञे करप्रदायिन्यः प्रजा [1]अल्पेन प्रमाणेन धनम् [1]आहरन्ति स राजा [1]न स्वयं [1]तृप्यति [1]न अपि [1]अन्यस्मै दातुं शक्नोति। [1]यस्मै तु [19]महता प्रमाणेन धनमाहरन्ति स राजा [20]स्वयं [1]तृप्यति च [1]अन्यस्मै दातुमपि च[20] प्रभवति। तस्मादत्रापि महता[21] प्रमाणेन पूर्णस्य द्रव्यस्य होमे सति स्वयं

४ मै४–अमावास्यालोपेन पुनरेन नाप्याययति। ५ मै– तत्र। ६ मै४– अमा वा सैव।
७. मै–अय स।

११. आ– दर्शपूर्णमासस्य॥ १२–१२. ह– ब्राह्मणधृताभिः। १३ ह४– यागे सोऽस्ति। १४. ह– 'याग' नास्ति। १५. क– अन्यत्र। १६. आ–क्षीरद्रव्येण। १७ ह–यस्मिन्। १८. ह– राज्ञि। १९. अ इ उ जो पा– महता द्रव्येण। २०–२०.ह– स्वयमपि च तृप्यति अन्यस्मै च दातुम्। २१. हा– महता द्रव्येण।

**दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानश औदुम्बरं( ३ )भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्द्धे**

दारुपात्रेणेति दारु-पात्रेण। जुहोति। न। हि। मृन्मयमिति मृत्-मयम्। आहुतिमित्या-हुतिम्। आनशे। औदुम्बरम् (३)। भवति। ऊर्क्। वै। उदुम्बरः। ऊर्क्। पशवः। ऊर्जा। एव। अस्मै। ऊर्जम्। पशून्। अवेति। रुन्द्धे।

"असौ धनान्तरं च ᵛन ᵛअन्यस्मै" *दातुं शक्नोति*। यदि ᵛमहता प्रमाणेन अस्मा आहरन्ति, स स्वय च ᵛतृप्यति, ᵛअन्यस्मै चाय महता प्रमाणेन ᵛददाति, 'तस्याप्यति-तृप्तिर्भवतीति भावः ॥

दारुपात्रेणेति ॥ औदुम्बरैश्चतुर्भिः (द्र. आपश्रौ ३·१६·१५) पात्रैः। न हीति। ᵛमृन्मय ᵛकुम्भादिक ᵛन हि ᵛ आहुतिम् ᵛआनशे अश्नुते आहुतिसाधनं न भवति। मृन्मयेन हुता आहुतिरेव न स्यादिति यावत्। "एकाचो नित्य मयटमिच्छन्ति" (पा काशिका वा ४·३·१४४) इति मयट् ॥

औदुम्बरमित्यादि ॥ गतम् ( तैस २·१·१ )। "अनुदात्तादेरञ्" (पा ४·२·४४)॥

ᵛतृप्तः ᵛइन्द्रः ᵛप्रजया ᵛपशुभिः ¹¹-च ᵛएनं-¹¹ ¹¹यजमानं ᵛतर्पयति। ¹²एतद्यागप्रकारः सूत्रकारेण स्पष्टीकृतः- "साकंप्रस्थायीयेन यजेत पशुकामः इत्यमावास्या विक्रियते। द्वौ सायंदोहावेवं प्रातः। सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम्। सर्वेवा प्रातः" (आपश्रौ ३·१६·११-१४) इति ॥

दारुपात्रेणेति ॥ क्षीरश्रपणपात्राणां मृन्मयत्वाद्धोमेऽपि तत्प्रसक्तिं वारयितुं विधत्ते- 'दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानशे' इति ॥ ¹³यस्मात् मृन्मयपात्रम् ᵛआहुतिं व्याप्तुं ᵛन अर्हति तस्मात् ᵛदारुपात्रेण होमः। न ह्यत्र जुह्वामवदानमस्ति, पूर्णस्य होतव्यत्वात्। अतो हविष्पूरणक्षमेण जुहुयात् ॥

औदुम्बरमिति ॥ दारुविशेषं विधत्ते- 'औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्द्धे' इति ॥ ¹⁴प्रथमप्रपाठकस्याद्यानुवाके "औदुम्बरो यूपो भवति" (तैसं २·१·१) ¹⁴इत्यत्र वाक्यमेतत्-¹⁴ व्याख्यातम्। अत्र सूत्रम्- "पात्रसंसादनकाले ¹⁵चत्वार्यौदुम्बरपात्राणि प्रयुनक्ति। तेषां जुहूपत् कल्पः" (आपश्रौ ३·१६·१५-१६) इति; "यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा ¹⁶तैरेवाध्वर्युं जुह्वतमनु जुह्वति। हिवष्कृत्संस्था विपन्ते" (आपश्रौ ३·१७·१-२) इति च ॥

८-८. मै८ - अगाधनात् न चान्यस्मै। *-* मै८-ददाति। अन्यस्मै मिनाय दातुमर्हति भर्ता तथा अस्मै यस्मै आहरन्ति राजा वा गुहदो वा स वा पशुकामो वाऽनेन पशुकामो यक्षेन यस्मै महेन्द्रा दिना यतः यस्माद् यस्मै महता प्रमाणेन धनादिकमाहरन्ति स्वल्पं दातुं न पश्यति तृप्यन्त्यन्ना मे ऽनेनात्मनो महती तृप्तिर्भवति ददाति च अन्यस्मै महता प्रमाणेन धनादिकं ताद्दशोऽयं सार्वभौमादिसमर्थो भर्ता। पात्राणि पूर्णानि पर्याप्तं होतव्ये तावन्ति।]। ९. तै३-तृप्यति°। १०. तै३-तुम्नदिक्न।

भ्रातृव्यवत पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ ]

नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति

न। अगतश्रीरित्यगत श्री। महेन्द्रमिति महा इन्द्रम्। यजेत। त्रयः। वै। गतश्रिय इति गत-श्रिय। शुश्रुवान्। ग्रामणीरिति ग्राम नी। राजन्य। तेषाम्। महेन्द्र इति महा इन्द्र। देवता। य। वै। स्वाम्। देवताम्। अतियजत इत्यति यजते। प्रेति। स्वायै। देवतायै। च्यवते। न। पराम्। प्रेति। आप्नोति। पापीयान्। भवति।

नागतश्रीरित्यादि ॥ [V]शुश्रुवान् षडङ्गवेदत्रयवेदी श्रुतसपन्न। स च प्राप्तश्री, "सा हि श्रीरमृता सताम्" (तैब्रा १ २ १) इति श्रीमाद्वेदानाम्। [V]ग्रामणी ग्रामाध्यक्ष। राज्ञोऽपत्य [V]राजन्य। "राजश्वशुराद्यत्" (पा ४ १ १३७), "राज्ञोऽपत्ये जातिग्रहणम्" (पा ४ १ १३७ वा १) इति क्षत्रिय उच्यते। *स्पष्टमेतयोर्गतश्रीत्व, यतो हीद्र (हि [V]महेन्द्र) एषा [V]देवता। तस्मादेभ्योऽन्योऽगतश्री महेद्र यष्टु नार्हति ॥

यो वा इत्यादि ॥ आत्मीयदेवतातिक्रमेण [V]य अन्या देवता यजते स स्वाया देवताया * तावत् [V]प्र [V]-च्यवते "तस्या अनुग्राह्यो न भवति"। ततश्च [V]पापीयान् पापतर [V]भवति। [12]अयमुरस्यापापत्वमेव। यष्टु पापतरत्व स्यात्, [13]देवतानत्त्वाभावात् ॥

नेति ॥ अधिकारिभेदेन सानाय्यस्य देवताव्यवस्था विधत्ते– 'नागतश्रीर्महेन्द्र यजेत त्रयो वै गतश्रिय शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वा देवतामतियजते प्र स्वायै देवतायै च्यवते न परा प्राप्नोति पापीयान् भवति' इति ॥ [V]शुश्रुवान् वेदत्रयाभिज्ञ। वेदत्रयस्य च श्रीरूपत्वात् तदभिज्ञ प्राप्तश्रीर्भवति। श्रीरूपत्व चैवमाम्नायते– "अहे बुध्निय मन्त्र मे गोपाय। यमृषयस्त्रयिविदा विदु। ऋच सामानि यजूꣳषि। सा हि श्रीरमृता सताम्" (तैब्रा १ २ १) इति। ग्रामाध्यक्ष [V]ग्रामणी। राज्ञ पुत्र [V]राजन्य। तयो प्राप्तश्रीकत्व प्रसिद्धम्। [V]तेषाम् एव त्रयाणा [V]महेन्द्र [V]देवता। एव सति [V]य पुरुष स्वकीया [V]देवताम् अतिक्रम्य यजते, एतेषु कश्चिदिन्द्र यजति, अन्यो वा महेन्द्र यजति। तादृश [11]स्वकीयदेवताया प्रच्युत सन् [12]परकीया देवता[11] [12]न [V]प्राप्नोति। तद्देवताशापेन [V]पापीयान् दरिद्रश्च [V]भवति ॥

*–* [ ख – 'स्पष्टमेतयोर्गत　देवताया' नास्ति। ]। ११–११. तरै मै४ ल– भवति पारपराकीया देवताम् अनात्मीयदेवतात्वेन प्राप्नोति। तस्यानुग्राह्यो न भवति। पर– परा परकीया देवतामात्मीयदेवतात्वेन प्राप्नोति। तस्या अनुग्राह्यो न भवति। १२ मै४– यष्टुरस्य पापत्वमेव। १३. मै४– देवतात्वा°।

३१ ङ– स्वकीयाया देवताया। ३२–३२ ङ ग्ट – परा स्वदेवताम्। ३२ अ ङ च जो ना पा हा– च न।

[ भ्रातृव्यवत पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ

संवत्सरमिन्द्रं यजेत संवत्सरꣳ हि व्रतं नाति स्वै( ४ )वैनं देवतेज्यमाना भूत्या इन्द्रे वसीयान् भवति संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमा लम्भयति ततोऽधि कामं यजेत ॥४॥

[ एता तदौदुम्बरꣳ स्वा त्रिꣳशच्च ] ॥

सवत्सरमिति स वत्सरम्। इन्द्रम्। यजेत। सवत्सरमिति स-वत्सरम्। हि। व्रतम्। न। अतीति। स्वा ( ४ )। एव। एनम्। देवता। इज्यमाना। भूत्यै। इन्द्रे। वसीयान्। भवति। सवत्सरस्येति स वत्सरस्य। परस्तात्। अग्नये। व्रतपतय इति व्रत-पतये। पुरोडाशम्। अष्टाकपालमित्यष्टा कपालम्। निरिति। वपेत्। सवत्सरमिति स वत्सरम्। एव। एनम्। वृत्रम्। जघ्निवाꣳसम्। अग्नि। व्रतपतिरिति व्रत पति। व्रतम्। एति। लम्भयति। तत। अधीति। कामम्। यजेत ॥ ४ ॥

[ कास ३०४, ३१२ कपिस ४६७ ]

सवत्सरमित्यादि ॥ सवत्सरातिक्रमे [v]व्रत [v]न अस्ति। तस्मात् गतश्रीत्वाय सवत्सर व्रत चरन्त [v]स्वा आत्मीया [v]देवता इन्द्र [v]इज्यमाना [v]एनम् [14]अगतश्रिय भूत्यर्थम् [v]इन्द्रे दीपयति। तत· [v]वसीयान् वसुमत्तर. [v]भवति, महेन्द्रयागार्हो गतश्रीरेव भवति, गता श्री आत्मीया देवता अनेनेति कृत्वा ॥

ततः समाप्ते सवत्सरे गते [v]अग्नये [v]व्रतपतये [v]पुरोडाशम् [v]अष्टाकपाल [v]नि [v]वपेत्, स [v]अग्नि [v]व्रतपति तृप्त [v]एन व्रतफलम् [v]आ [v]लम्भयति गतश्रीत्वमस्योत्पादयति स्वयमप्य नुज्ञाय स्थिरीकरोति। कीदृशमित्याह [v]सवत्सर व्रत चरित्वा [15][v]वृत्र वारक पाप महेन्द्रयागानर्हत्व लक्षण [v]जघ्निवाꣳसम् अभिभवन्त तत्फल [16]प्रापयति। यथा इन्द्रो वृत्र [17]हत्वा महेन्द्रोऽभवत्, एवमयमपि [18]तु अयोग्यतालक्षणवृत्रवधेन महेन्द्रयागयोग्यो भवति। तत उपरि [v]काम यथेष्ट महेन्द्रमेव [v]यजेत ॥

इति द्वितीये पञ्चमे चतुर्थोऽनुवाक ॥

१४. तै३ मै८-अयगत°। १५. तै३ ल-'वृत्रं' नास्ति। १६ ल-प्रापयन्ति। १७ तै३ मै ल-'हत्वा' इत्यस्यानन्तरम् 'इन्द्र'। १८ मै४-'तु' नास्ति।

आग्नेयवत् पशुकामस्य च पौर्णमास्याम् अनुनिर्वाप्यौ ]

सवत्सरमिति ॥ अगतश्रिय [34]सर्वदेन्द्रप्राप्तौ विशेष विधत्ते– 'सवत्सरमिन्द्र यजेत सवत्सर हि व्रत नाति स्वैवैन देवतेज्यमाना भूत्या इन्द्रे वसीयान् भवति' इति ॥ सवत्सरम् अतिक्रम्य यस्मात् व्रत न अनुष्ठेय भवति [35]तस्मादगतश्री सवत्सरम् इन्द्र यजेत । एव सति स्वकीया एव देवता अन्यस्मिन् सवत्सरे इज्यमाना सती भूत्यर्थं यजमान प्रकाशयति । ततोऽय धनवत्तर भवति ॥

सवत्सरस्येति ॥ अगतश्रिय काचिदिष्टि विधत्ते– 'सवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपाल निर्वपेत् सवत्सरमेवैन वृत्र जघ्निवा समग्निर्व्रतपतिर्व्रतमा लम्भयति' इति ॥ व्रतपालक अग्नि महेन्द्रयागाधिकारनिवारक पापरूप वृत्र सवत्सरेन्द्रानुष्ठानेन हतवन्तम् [36]एन यजमान महेन्द्रयागानुष्ठानरूप व्रत प्रापयति ॥

तत इति ॥ व्रतपतेष्टेरूर्ध्वमगतश्रिय इन्द्रमहेन्द्रयोरैच्छिक च विधत्ते – 'ततोऽधि काम यजेत' इति ॥

[37]अत्र मीमासा ॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" आक्रामन् सह [38]कुम्भीभिरस्ति शेषक्रिया न वा ।
जुह्वावदानात् प्रकृताविव शेषक्रियोचिता ॥
कुम्भीषु शेषासंसिद्धे साकप्रस्थाय्यकर्मणि ।
न स्विष्टकृदिड [39]कार्यमग्नीधे स्रुक्प्रदानत [39]" ॥ (जैन्या ३ ५ ३ ४ ) ॥

" साकप्रस्थायीयेन यजेत पशुकाम " (तैस २ ५ ४ आपश्रौ ३ १६ ११ ) इति विहिते कर्मणि श्रूयते– " सह [40]कुम्भीभिरभिक्रामन् " (आपश्रौ ३ १६ १७) [41]इति । तत्र चतसृभि [42]दधिपय कुम्भीभि सहाऽऽहवनीयदेशेऽभिक्रमणमात्र श्रुतम् । न तु [43]तत्र कुम्भीभिर्होम [43] श्रुत । तथा सत्यस्य कर्मण सानाय्यविकृतित्वात् [44]जुह्वा कुम्भीभ्योऽवदाय [45]जुहुयात् । हुतशेषेण च स्विष्टकृदादिक सानाय्यशेषेणेव कर्तव्यमिति प्राप्ते ब्रूम – नात्र कुम्भीषु [46]हुतशेष सिध्यति [47]सानाय्य इव जुह्वावदानाभावात् [48]। " अग्नीधे स्रुचौ प्रदाय सह [49]कुम्भीभिरभिक्रामन् " (आपश्रौ ३ १६ १७ ) इत्युक्तत्वात् जुहूपभृतो प्रत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते, न [50]हु हवि शेष । तत्र कुत [51]शेषकार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाक ॥

---

३४ ङ– सर्वदेन्द्रदेवताप्राप्तौ । ३५ हो१– तस्मादेवाग° । ३६ आ– 'एनम्' नास्ति । ३७ भृ– अथ । ३८ आ हा– °भिरास्मिन् । ३९–३९ अ इ उ जो पा हा– कार्यमखिलस्य प्रदानत, क ना– कार्यमाग्नीध्रस्रुक्प्रदानत भृ हो१– कार्यमसिद्धि स्रुक्प्रदानत । ४० अ इ उ जो ना पा हा– °रभिक्रामन्ती क– °रभिक्रामन् जुहोति, ङ भृ– °भिरतिक्रामन्नाह । ४१ उ– 'इति' नास्ति । ४२ भृ– कुम्भीभि ङ– 'दधिपय कुम्भीभि' नास्ति । ४३–४३ अ इ उ जो ना पा हा– तत्कुम्भी° । ४४ आ क ङ हो१– जुह्वा । ४५ ङ भृ हो१ होतव्यम् । ४६ ङ भृ– हुतशेषे । ४७ आ– 'हुतशेष' नास्ति । ४८–४८ ना भृ– सानाय्य इव जुह्वा तदव°, क ङ हो१– सानाय्यवज्जुह्वा तदव°, हा– सानाय्य जुह्वा° । ४९ अ इ उ ङ जो ना पा हा– °रतिक्रामन् । ५० आ– हुत° । ५१ आ हा– शेषकर्म कार्यम् ।

नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी संनयेत् परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत् पयो वै सोमः पयः सांनाय्यं पयसैव पय आत्मन् धत्ते

न। असोमयाजीत्यसोम-याजी। समिति। नयेत्। अनागतमित्यना-गतम्। वै। एतस्य। पयः। यः। असोमयाजीत्यसोम-याजी। यत्। असोमयाजीत्यसोम-याजी। सनयेदिति स-नयेत्। परिमोष इति परि मोष। एव। सः। अनृतम्। करोति। अथो इति। परेति। एव। सिच्यते। सोमयाजीति सोम-याजी। एव। समिति। नयेत्। पयः। वै। सोमः। पयः। सानाय्यमिति सा-नाय्यम्। पयसा। एव। पयः। आत्मन्। धत्ते।

---

नासोमयाजी स नयेदित्यादि ॥ दधिपयोभ्या याग सनयनम्। अनागतमिति। असोमयाजिन' पय सबन्धो नास्ति, सर्वरसकारणेन सोमेन सबन्धाभावात्। तस्मात् [v]असोमयाजी यदि [v]स [v]नयेत् [v]स [v]परिमोष. चौर्यम् [v]एव, अस्वेन यष्टु प्रवृत्तत्वात्। तस्मादयम् [v]अनृत [v]करोति व्रतचारिणो यत् प्रतिषिद्ध तदेवानृत करोति। [v]अथो अपि च [v]परा [v]एव [v]सिच्यते एतद्यष्टव्य परा सिच्यते अस्थाने विनाश्यत एव। तस्मात् [v]सोमयाजी [v]एव [v]स [v]नयेत् इति ॥

पयो वा इत्यादि ॥ उभयोः पयस्त्वात् [v]पयसा सोमेन स आमनि [v]पय सानाय्य [v]धत्ते स्थापयति ॥

---

द्विधा चतुर्थे पुभेदात् प्रोक्ता सानाय्यदेवता ॥

अथ 'पञ्चमे अभ्युदयेष्ट्यादयो वक्तव्या ॥

नेति ॥ 'आदौ तावत् सानाय्याधिकारिणं विविनक्ति— 'नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी संनयेत् परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत् पयो वै सोम पय सानाय्य पयसैव पय आत्मन् धत्ते' इति। सोमयागात् पुरा 'दर्शयाजी सांनाय्य 'न अनुतिष्ठेत्। असोमयाजिन 'पय 'अनागतम् अप्राप्तम्। सोमस्यौषधिरसत्वेन तद्भावे सर्वोषधिरसविशेषस्य पयस सुतरामभावात्। एवं सति यदि 'असोमयाजी 'संनयेत् तर्ह्यसौ 'परिमोष ''एव तस्कर एव सन् ''अनृतम् अन्याय्यं ''करोति। अपि च यद्धी सिच्यमान तत् सानाय्यम् 'अनागतैव त्वात् 'परा 'एव 'सिच्यते विनाश्यत एव। तस्मात् 'सोमयाजी 'एव 'स 'नयेत्। न चायेनागत पयोऽनागतं, सोमस्यौषधिरसत्वेन पयोरूपत्वात्। 'सांनाय्यम् अपि तथाविधम्। अत सोमयाजी सोमरूपेण 'पयसा सह सांनाय्यरूपं 'पयः 'आत्मनि धारयति ॥

---

१. शृ पञ्चमे'नुवाके, ढ हो१– पञ्चमे'नुवाके। २. आ– तत्र। ३ आ हा– °दर्श°। ४ अ इ उ ओ ना पा हा– 'एव' नास्ति। ५ आ– अतो करोति। ६ अ इ ठ ओं ना पा हा– करोति च। ७ आ– अनागतत्वात्। ८. इ ह्रै– स्थापनीति।

वाक्यताया अभावात्। न हि– “ दर्शपूर्णमासाभ्या स्वर्गकामो यजेत ”, “ समिधो यजति ’ इत्यनयो वाक्ययो परस्पराकाङ्क्षाऽस्ति, [११३] येन वाक्यैकता [११३] कल्प्येत। तस्मात् प्रयाजादीना न दर्शपूर्णमासाङ्गत्वमिति प्राप्ते ब्रूम प्रयाजादय फलहेतव, [११४]पुरुषप्रवृत्तिरूपत्वात् [११५]सेवादिवत्। दर्शपूर्णमासौ [११६]उपकरणैरुपकार्यौ, करणत्वात्, प्रदीपोपकृतचक्षुर्वत्। तथा सति किं प्रयाजाद फल, किं वा दर्शपूर्णमासयो [११७]उपकरणमित्याकाङ्क्षाया सपन्न [११८]वाक्यैकवाक्यतारूप प्रकरण, तेन च प्रयाजादीनामङ्गत्व प्रतीयत॥

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्–

“ अभिक्राम जुहोतीति युक्त कर्त्राऽखिलस्य तत्।
किं [११९]वा प्रयाजमात्रस्य कृत्स्नकर्तृयुत भवेत्॥
[१२०] प्रयाजाभिक्रमणयो क्रियात्वादुभयोरपि।
मिथ सबन्धराहित्यान्नैव तेऽपि समत्वत॥
कर्तृयोगाददोषश्चेत् [१२१] समानेय समाहिति [१२१]॥
तत प्रयाजसांनिध्यात् तत्कर्त्रैवास्य सयुति ”॥ ( जैन्या ३ १ २० २२ )॥

दर्शपूर्णमासयो प्रयाजसमीपे श्रूयते– “ अभिक्राम जुहोति ” ( तैस २ ६ १ ) इति। तत्र होमकाले यदेतदाहवनीयस्याऽभिमुख्येन सचरण तत् कृत्स्नदर्शपूर्णमासकर्त्रा सबध्यते। न तु प्रयाजमात्रकर्त्रा। [१२२]कुत ? अभिक्रमणस्य क्रियारूपस्य [१२३] कारकत्वाभावेन प्रयाजक्रियया [१२३] सबन्धासभवादिति चेत्। [१२४]नैवम्। क्रियारूपत्वादेव दर्शपूर्णमासक्रियया सबन्धासभवात्। अथोच्येत, अभिक्रमण कर्तृकारकेण साक्षात् सबध्यत, तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा सबध्यत इति तदेतत् समाधान प्रयाजसबन्धेऽपि समानम्। अत संनिधिबलात् प्रयाजकर्त्रा सबध्यते॥

[१२५]चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्–

“ अभिघार्यं प्रयाजाना शेषेण हविरत्र किम्।
शेषधारणतत्पात्रं कार्यं नो वाऽभिघारणम्॥
नान्यथा तेन ते कार्यं न कार्यं प्रतिपत्तित।
प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात् ”॥ ( जैन्या ४ १ २८ २९ )॥

प्रकृतौ श्रुत– “ प्रयाजशेषेण हवींष्यभिघारयति ” ( हिश्रौ २ २ ३२ ) इति। तदेतत् [१२६]विकृतावनिर्दिष्टम्। विकृतयश्च वाजपेयगता पशव। त च द्विविधा– क्रतुपशव, [१२७]प्राजापत्या पशवश्चेति। “ आग्नेय पशुमालभेत ” ( तैब्रा १ ३ ४ ) इत्यादिना विहिता क्रतुपशव। इतरे तु– “ सप्तदश

११३–११३ ड१ गृ–येनैकवाक्यता। ११४ ड हो१–°प्रवृत्तिहेतुरूपत्वात्। ११५ हो१–नीवारादिवत्। ११६ अ इ उ ना पा °करणोपकार्यौ। ११७ अ इ उ पा – उपकारं कर्तुमुपकरणमित्याकाङ्क्षाया। ११८ अ इ उ पा– °वाक्यत्वरूप, जो ना हा– °वाक्यस्वरूप। ११९ हो१– तु। १२० अ इ उ पा–°क्रमणे। १२१–१२१ अ इ उ पा समानमपि समाहित, ड१–समानेऽपि समाहित, जो गृ हा– समानेय समाहित। १२२ अ इ उ जा पा हा– ‘कुत ’ नास्ति। १२३–१२३ इ उ पा– कारकत्वाभावेन प्रयागे क्रियया ड– कारकत्वाभावेन प्रयाजक्रियया अ – ‘कारकत्वाभावेन प्रयाजक्रियया’ नास्ति। १२४ अ इ उ पा– ‘नैवं’ नास्ति। १२५ ड– चतुर्थस्य। १२६ गृ– °वतिदिष्ट अ इ उ पा– ‘निर्दिष्टो। १२७ ड ड१– प्राजापत्य°।

प्राजापत्यान् पशूनालभते" (तैब्रा १.३.४) इति विहिताः। ते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते। ततः सर्वेषामर्थे सकृदेव प्रयाजा अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवाऽऽलब्धव्यत्वात् [128]तदा यज्ञहविषा[128] प्रयाजशेषेणाभिघारणं [129]निर्विघ्नमेव [130]सिध्यति। प्राजापत्यपशूनां तु पर्यग्निकरणपर्यन्तमेव तदानीमनुष्ठानम्। आलम्भस्तु माध्यन्दिने सवने, तत्कालविशेषस्य "ब्रह्मसाम्न्यालभते" (द्र. आपश्रौ १८.६.७) इति विधानात्। तेषां च [131]प्राजापत्यानां हविषामभिघारणार्थं[131] प्रातःकालीनः प्रयाजशेषो धारयितव्यः। न चात्र जुह्वां तद्धारणं संभवति। क्रतुपश्वनुष्ठाने जुह्वा व्यापृतत्वात्। अतः पात्रान्तरं संपाद्य तस्मिन्नयं शेषो धारयितव्यः। अन्यथा प्राजापत्यहविषां [132]प्रयाजशेषेणाभिघारणासिद्धेः। तस्मात् शेषधारणतत्पात्रे संपादनीये इति प्राप्ते ब्रूमः—ते [133]उभे न कर्तव्ये। कुतः? अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविःसंस्कारकत्वाभावात्। [134]न हि दृष्टेऽर्थे संभवति[134] अदृष्टोऽर्थः संस्कारः [135]कल्पयितुं युक्तः। दृष्टं च जुह्वा रिक्तीकरणम्। अन्यथा प्रयाजशेषोपेतायां जुह्वामाज्यभागार्थतया गृह्यमाणं संकीर्येत। ततो रिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषेणाभिघारणम्। अस्तु वा [136]तत्र हविःसंस्कारोऽपि। [137]तथाऽपि प्राजापत्यवपायामभिघारणं व्यर्थम्। रूक्षत्वनिवारणाय ह्यभिघार्यते। न च प्राजापत्यवपायां रूक्षताऽस्ति। ब्रह्मसाम्नैव तद्रूक्षताया निवारितत्वात्[137]। अत एव श्रूयते– "शम्या वा एतर्हि वपा [138]यर्ह्यनभिघृता [139]ब्रह्म वै[139] ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते [140]तेनाशम्यास्तेनाभिघृताः" इति। शम्या रूक्षा इत्यर्थः। तस्माच्छेषधारणतत्पात्रे न कर्तव्ये॥

तत्रैवान्यच्चिन्तितम्–

"चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम्।
[141]जुह्वामानयनीत्यौपभृतं [142]नैषा प्रयोजयेत्॥
[143]प्रयोजयेद्धुताऽऽनीतिः प्रयाजाद्यखिलार्थता।
श्रुतौपभृत [144]आज्येऽसौ जौहवेन विकल्पनात्॥
[145]न प्रयोजकता[145] मैवं त्रितयार्थं हि जौहवम्।
अतिहायेड इत्युक्तेश्चतुर्थे सा प्रयोजयेत्"॥ (जैन्या ४.१.३०-३२)॥

दर्शपूर्णमासयोः श्रूयते– "अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम्" इति। [146]अस्यायमर्थः– पञ्चानां प्रयाजानां मध्ये तृतीयः प्रयाज इट्शब्देन बहुवचनान्तेनाभिधीयते। तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुमुपभृत्संज्ञकायां स्रुचि स्थितं [147]घृतं जुह्वामानेतव्यमिति[146]। तदेतदानयनमुपभृत्याज्यग्रहणस्य[148] न प्रयोजकम्। तथा हि– जुहूपभृद्ध्रुवासु तिसृषु स्रुक्ष्वाज्यग्रहणप्रकारस्तद्विनियोगश्चैवमाम्नायते– "चतुर्जुह्वां गृह्णाति। अष्टावुपभृति। चतुर्ध्रुवायाम्।

१२८. आ.क.ड.ड– तदीयहविषा। १२९. अ.इ.उ.जो.पा.हा– संस्कारार्थत्वं। १३०. ड– 'सिध्यति' नास्ति। १३१–१३१. अ.आ.उ.पा–प्राजापत्यपशूनामभि°; जो.ना.हा–प्राजापत्यपशूना हवि°; हो१– प्राजापत्यानामभि°; ड–प्राजापत्यानामभिघारणार्थः; इ–'प्राजा ... धारणार्थं' नास्ति। १३२. थं– प्रयाजशेषाभि°। १३३. अ.इ.उ.पा– इह। १३४–१३४. क.ड.ड१– दृष्टे प्रतिपादने सति, थं.हो१– दृष्टप्रतिपादने सति। १३५. क.ड.ड१.हो१– 'कल्पयितुं' नास्ति। १३६. अ.इ.उ.ड.पा.हो१– अत्र। १३७–१३७. अ.इ.उ.पा– तथाऽपि... निवारितत्वात्' नास्ति, ड– प्राजापत्यवपाया अभिघारण रूक्षत्व°। १३८. अ.इ.उ.जो.पा.हा–वर्त्मेन(?)भिघृता। १३९–१३९. ड१– मह्यैव। १४०. अ.इ.उ.जो.ना.पा– तेन शम्या°; ड– ते सा शम्या°। १४१. ड.हो१– °मानयत्यर्थोप°। १४२. जो.हा– नैत। १४३. हा– प्रयोजयेत् या नीतिः, ड.हो१–प्रयोजयेदुपानीतिः। १४४. क.जो.ना.हा– आज्येन। १४५–१४५. हा– नाप्रयो°। १४६–१४६. अ.इ.पा.हो१– 'अस्यायमर्थः ... नेतव्यमिति' नास्ति। १४७. जो.ना.हा–'घृतं' नास्ति। १४८. अ इ उ जो.ना.पा.हा– °त्याज्यस्य ग्रहणस्य।

यज्जुह्वा गृह्णाति। प्रयाजेभ्यस्तत्। यदुपभृति प्रयाजानूयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्" (तैब्रा ३ ३ ५) इति। तत्र जौहव केवल प्रयाजार्थम् [149]औपभृत तु प्रयाजानूयाजार्थमिति प्रयाजेषु जौहवम् औपभृत चोभय [150]विकल्पते। तथा सति यदा जौहवेन प्रयाजा इज्यन्त तदानीमौपभृतस्याऽऽनयनमेव नास्ति कुत आनयनस्य प्रयोजकत्वम्। यदा त्वौपभृतेन प्रयाजहोमस्तदानीम् औपभृतस्यार्ध [151]प्रयाजार्थमितरदनूयाजार्थम्। तयो [152]प्रयाजसाधनमर्ध प्रथमप्रयाजकाल एव जुह्वामानीतम् इति न तस्य चतुर्थप्रयाज प्रति समानयन विधीयते। [153]यत्त्वनूयाजार्थमितरदर्धमुपभृत्यवशिष्ट तन्मध्ये किंचिच्चतुर्थप्रयाज प्रति समानेतव्यम्। तत्त्वनूयाजैरेव प्रयुक्तमिति न तस्याऽऽनयन प्रयोजकमिति प्राप्ते ब्रूम – यज्जौहव तत् प्रयाजत्रितयार्थं यदौपभृत तदेवावशिष्टप्रयाजद्वयार्थमनूयाजार्थं चेत्येव वाक्यद्वयस्य व्यवस्थाया [154]सभवन्त्यामष्टदोषप्रसक्तो विकल्पो नाऽऽश्रयितु शक्य । यदा जौहवस्वीकारस्तदानीम् [155]औपभृतवाक्यस्य प्राप्त प्रामाण्य परित्यज्येत, अप्राप्तमप्रामाण्य स्वीक्रियेत पुनरपि कदाचिदौपभृतस्वीकारे त्यक्त प्रामाण्य स्वीक्रियेत, स्वीकृतमप्रामाण्य [156]परित्यज्येतेत्यौपभृतवाक्ये चत्वारो दोषा । जौहववाक्ये प्येव चत्वार इत्यष्टौ दोषा । यथोक्तव्यवस्था [157]च "अतिहायेड" इति वाक्यादध्यवसीयते। तथा सत्यौपभृतस्यानूयाजा यथा प्रयोजकास्तथैव [158]चतुर्थपञ्चमप्रयाजनिष्पादकम् आनयनमपि प्रयोजकमेव ॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्–

"प्रयाजानूयाजसिद्धयै पात्रैक्यमुत भिन्नता।
एकोपभृद्‌द्वयोरर्थे [159]दृष्टान्तो विकृतौ तथा ॥
विकृतौ [160]पात्रभेदोऽस्तु [161]शुद्धाज्यपृषदाज्ययो ।
[162]एकपात्रे ग्रहाशक्तेर्द्वैक्य [162] प्रकृतौ द्वयो" ॥ (जैन्या ५ २ १३ १४) ॥

अग्नीषोमीयपशौ प्रयाजानूयाजसाधन द्रव्य [163]धारयितुमेकमेव पात्र कर्तव्यम्। कुत ? प्रकृता वुभयार्थस्याऽऽज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशादिति प्राप्ते ब्रूम – प्रकृतिवत् [164]केवलेन आज्येन [164] प्रयाजा इज्यन्ते। अनूयाजास्तु पृषदाज्येन यष्टव्या । "पृषदाज्येनानूयाजान् यजति" इति तद्विधानात्। पृषदाज्य नाम दधिमिश्रमाज्यम्। नहि शुद्धमिश्रयोरेकेन पात्रेण धारण सभवति। तस्मात् पृथक्पात्रम् ॥

यत् तु [165]चतुर्थस्य प्रथमपादे (जैन्या ४ १ ३३-३४) चिन्तित–जुह्वामाज्यग्रहण प्रयाजत्रयार्थम् उपभृत्याज्यग्रहणमनूयाजार्थं चेति, [166]यदप्यन्यत् तत्रैव[166] चिन्तितम्– उपभृति [167]चतुर्गृहीतद्वयादष्ट सख्येति (जैन्या ४ १ ३५ ३६) [168]तदुभयमस्माभिराज्यग्रहणविधायके "प्रत्युष्ट रक्ष" (तैस १ १ १०) इत्यनुवाके प्रदर्शितम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाक ॥

१४९ ह– उपभृति। १५० क ह१ ग्र हो१–विकल्प्यते। १५१ ह१ – पञ्चमप्रया°। १५२ अ इ उ पा– °साधनत्वमर्थे, जो हा– °साधनत्वमर्ध। १५३ अ उ जो पा हा– °मितरदर्ध तु परिशिष्ट, इ–°मितरदर्धे तु परिशिष्ट, ना– °मितरदर्धमुपभृतिपरिशिष्ट। १५४ अ आ उ इ जो ना पा– °दोषदुष्टो,। १५५ जो ना हा– °वाक्य°। १५६ क जो ना हा– त्यजेनेत्यौ°। १५७, हा– वा। १५८ आ हा– चतुर्थोत्तम°। १५९ अ इ उ क ह पा– दृष्टान्तो, हो१–दृष्टान्तौ। १६० अ इ उ पा– °भेदस्तु, ह ह१– भेदास्तु। १६१ ह हो१–सिद्धाज्य°। १६२–१६२ इ उ जो पा हा – एकपात्रग्रहेऽशक्ते°, ह१– एकपात्रग्रहाशक्ति° ह–एकपात्रे ग्रहेऽशक्ते°। १६३ अ उ पा–पूरयितुमेकमेव, इ–पूरयितुमेव। १६४–१६४ आ– केवलाज्येन। १६५ इ ह१– चतुर्थाध्यायस्य। १६६–१६६ हो१–यदन्यत् तत्रैव, आ क–यदप्यत्रैव। अ इ उ जो पा हा – यदप्यन्यत्रैव, ना – यदप्यन्यत्रैव, ह१ – यदप्यन्यत्रैव। १६७ अ इ उ जो पा– चतुर्गृहीतद्वयादष्टसंख्येति, हो१–चतुर्गृहीतद्वयादष्टसंख्येति। १६८ ह– °ग्रहणप्रतिपादके।

आद्यानुवाके विस्पष्टं प्रयाजाः पञ्च वर्णिताः ।
अनुवाके द्वितीयेऽस्मिन् वक्तव्यावाज्यभागकौ ॥

[1]तन्मन्त्रास्तन्मन्त्रकाण्डे ( तैब्रा ३·५·६ ) समाम्नाताः ॥

कल्पः– "यदा जानात्यग्नयेऽनुब्रूहीति तदाऽऽग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्यामन्वाहाग्निर्वृत्राणि जङ्घनदिति पौर्णमास्यामग्निः प्रत्नेन जन्मनेत्यमावास्यायां यदा जानात्यग्निं यजेति तज्जुषाणेन यजति जुषाणो अग्निराज्यस्य वेत्विति यदा जानाति [2]सोमायानुब्रूहीति तत्सोमस्य पुरोनुवाक्यामन्वाह त्वꣳ सोमासि सत्पतिरिति पौर्णमास्यां सोम गीर्भिष्ट्वा वयमित्यमावास्यायां यदा जानाति सोमं यजेति [3]तज्जुषाणेनैव यजति जुषाणः सोम आज्यस्य हविषो वेत्विति" ( द्र. आपश्रौ १·५·२९ ) इति ॥

तत्र प्रथमस्याऽऽग्नेयस्य पाठस्तु– "अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु" ( तैब्रा ३·५·६ ) इति । अयमग्निरस्माननुगृह्णात्विति शेषः[1] । कीदृशोऽग्निः ? वृत्राणि कर्मानुष्ठाननिवारकाणि पापानि जङ्घनदतिशयेन [4]हतवान् । विपन्यया विशिष्टया अस्मत्कृतया स्तुत्या द्रविणस्युरस्मदर्थं द्रविणेच्छुः समिद्धः सम्यक् [5]ज्वालितः शुक्रः शोचमान आहुतः समन्तादस्माभिराकारितोऽनेनाऽऽज्येनाऽऽहुतो वा । जुषाणः प्रीयमाणोऽयमग्निराज्यस्य वेतु [6]अस्माभिः दत्तमिदमाज्यमश्नातु ॥

प्रथमस्य सौम्यस्य पाठस्तु– "त्वꣳ सोमासि सत्पतिः । त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणः सोम आज्यस्य हविषो वेतु" ( तैब्रा ३·५·६ ) इति ॥ हे [7]सोम, त्वं सतां [8]सम्यगनुष्ठितानां कर्मणां पतिरसि । किं च, त्वं राजासि दीप्तिमान्, अपि च [8-]त्वं वृत्रहा[-8] पापघाती । किं च, त्वं भद्रः फलप्रदत्वेन [9]मङ्गलः क्रतुरसि, तस्य क्रतोः निष्पादकत्वात् । तादृशः सोमः [10]प्रीयमाणः इदमाज्य हविरश्नातु ॥

द्वितीयस्याग्नेयस्य पाठस्तु– "अग्निः प्रत्नेन जन्मना । शुम्भानस्तनुवꣳ स्वाम् । कविर्विप्रेण वावृधे । जुषाणो अग्निराज्यस्य वेतु" ( तैब्रा ३·५·६ ) इति । अयमग्निः प्रत्नेन पुरातनेन स्वजन्मना स्वां तनुवं स्वतनुं शुम्भानः [11]शोभयन् कविर्विपश्चित् पण्डितः पराभिप्रायज्ञः विप्रेण [12-]ऋत्विजा कृतां[-12] स्तुतिं ज्ञात्वा वावृधे वृद्धिं प्राप्तः । [13]सोऽयमग्निरिदमाज्यमश्नातु ॥

द्वितीयस्य सौम्यस्य पाठस्तु– "सोम गीर्भिष्ट्वा वयम् । वर्धयामो वचोविदः । सुमृडीको न आविश । जुषाणः सोम आज्यस्य हविषो वेतु" ( तैब्रा ३·५·६ ) इति । हे सोम, वचोविदो वाक्यतात्पर्याभिज्ञा वयं गीर्भिः स्तुतिरूपाभिर्वाग्भिः वर्धयामः । त्वं तु सुमृडीकः सम्यक् सुखयन् नः अस्माना-विश । तादृशः सोम आज्यं हविरश्नातु ॥

---

१. ङ.ङ१– तन्मन्त्रास्तु मन्त्र° । २. अ.इ.उ.पा– सोमस्यानु° । ३. अ.इ.उ.णो.पा.हा– जुषाणे° । ४. अ.इ.उ.णो.पा.ना.हा– हतवान् । ५. ङ.ङ१.हो१– प्रज्वालितः । ६. ङ१.गं.हो१– अस्मद्° । ७. आ.क–सन्निरतु°; हो१– सम्यगनुष्ठानानाम् । ८–८. आ.क– 'त्वं वृत्रहा' नास्ति । ९. आ.क– मङ्गलरूपः । १०. आ.क– 'प्रीयमाणः' नास्ति । ११. आ.क– शोधयन् । १२–१२. हो१– द्विजकृता । १३. आ.क– जुषाण इत्यादि पूर्ववत्; ङ१– सोऽयमाज्यमश्नातु ।

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी प्रबाहुग्जुहोति तस्मात् प्रबाहुक् चक्षुषी देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै

चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । आज्यभागावित्याज्य - भागौ । यत् । आज्यभागावित्याज्य भागौ । यजति । चक्षुषी इति । एव । तत् । यज्ञस्य । प्रतीति । दधाति । पूर्वार्ध इति पूर्व अर्धे । जुहोति । तस्मात् । पूर्वार्ध इति पूर्व - अर्धे । चक्षुषी इति । प्रबाहुगिति प्र - बाहुक् । जुहोति । तस्मात् । प्रबाहुगिति प्र - बाहुक् । चक्षुषी इति । देवलोकमिति देव - लोकम् । वै । अग्निना । यजमान । अन्विति । पश्यति । पितृलोकमिति पितृ - लोकम् । सोमेन । उत्तरार्ध इत्युत्तर अर्धे । अग्नये । जुहोति । दक्षिणार्ध इति दक्षिण - अर्धे । सोमाय । एवम् । इव । हि । इमौ । लोकौ । अनयोः । लोकयोः । अनुख्यात्या इत्यनु - ख्यात्यै ।

---

चक्षुषी वा इत्यादि ॥ आज्यभागयोर्विधिः । [1]आज्य भागो[2] ययोः तौ आज्यभागौ अग्नीषोमीयौ तयोश्चक्षुःस्थानीययो यागेन यज्ञस्य चक्षुषी प्रतिदधाति प्रतिमुखं स्थापयति ॥ प्रबाहुगिति ॥ देशत [2]प्रमाणतश्च सममित्यर्थ ॥

देवलोकं वा इत्यादि ॥ गतम् । अनुक्रमेण ख्यानमनुख्याति । "तादौ च" ( पा ६·२·५० ) इति गते प्रकृतिस्वरत्वम् ॥

---

चक्षुषी इति ॥ मन्त्रकाण्डोक्तैस्तैरेतैः साध्यावाज्यभागौ विधत्ते– 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति' इति ॥ याजमानब्राह्मणे "अग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान" ( तैब्रा ३·६·११ ) इति [14]श्रुतत्वात् आज्यभागयोर्यज्ञचक्षुष्ट्वम् ॥

पूर्वार्धे इति ॥ आहवनीयस्य [15]पूर्वार्धभागं होमदेशत्वेन विधत्ते– 'पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी' इति ॥ लोकेऽपि शिरसः पूर्वभागे चक्षुषी तिष्ठतो न तु पृष्ठभागे ॥

प्रबाहुगिति ॥ उभयोराहुत्योः [16]पङ्क्तिवक्रत्वं परिमाणवैषम्यं च वारयितुं साम्यं विधत्ते– 'प्रबाहुक् जुहोति तस्मात् प्रबाहुक् चक्षुषी' इति ॥ प्रबाहुक् समं यथा भवति तथा जुहुयात् इत्यर्थः ॥

देवलोकमिति ॥ एकस्यां पङ्क्तावुत्तरदक्षिणदेशं क्रमेण विधत्ते– 'देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै' इति ॥ देवलोक उत्तरदेशस्थः, पितृलोको दक्षिणदेशस्थः । अतस्तथाविधेन होमेन तयोरनुख्यातिरभिज्ञानं भवति ॥

---

१-१. तै१.मै– आज्यं भागम् ; ल.हो– आज्यभागो । २. मै–प्रमाणतश्च ते ।

१४ आ.क– उक्तत्वात् । १५. क.ख.द१.ग.हो१– पूर्वभागम् । १६. आ.हा– पङ्क्तिवक्रत्वम् ।

**राजानौ वा एतौ देवतानां (१) यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति**

राजानौ। वै। एतौ। देवतानाम् (१)। यत्। अग्नीषोमावित्यग्नी - सोमौ। अन्तरा। देवता। इज्येते इति। देवतानाम्। विधृत्या इति वि धृत्यै। तस्मात्। राज्ञा। मनुष्याः। विधृता इति वि धृताः। ब्रह्मवादिन इति ब्रह्म वादिनः। वदन्ति। किम्। तत्। यज्ञे। यजमानः। कुरुते। येन। अन्यतोदत इत्यन्यतः - दतः। च। पशून्। दाधार। उभयतोदत इत्युभयतः दतः। च। इति। ऋचम्। अनूच्येत्यनु उच्य। आज्यभागस्येत्याज्य भागस्य। जुषाणेन। यजति।

राजानावित्यादि ॥ देवाना मध्ये राजनशीलौ। अन्तरेति। देवाना मध्ये [५]इज्येते। "अन्तरान्तरेण" (पा २ ३ ४) इति द्वितीया। [६]प्रयाजप्रधानदेवतापेक्षमन्तरात्वमेतयो ॥

ब्रह्मवादिन इत्यादि ॥ अन्यतरपार्श्वस्थदन्ता अश्वादय। "छन्दसि च" (पा ७ ४ १४२) इति दतृभाव। 'दाधार' इति छान्दसो लिट् तुजादित्वादभ्यासस्य दीर्घत्वम् (पा ६ १ ७)। ऋचमिति। "अग्निर्वृत्राणि" (तैब्रा ३ ५ ६) इत्यादिका पुरोनुवाक्याम्। जुषाणेनेति। "जुषाणो अग्निराज्यस्य" (तैब्रा ३ ५ ६) इत्यादियजुषा याज्यया। ऋचमिति। "अग्निर्मूर्धा" (तैब्रा ३ ५ ७) इत्यादिका पुरोनुवाक्याम्। ऋचेति। "भुवो यज्ञस्य" (तैब्रा ३ ५ ७) इत्यादिकया याज्यया ॥

राजानाविति ॥ उभयोराज्यभागयोर्मध्यदेश [१७]प्रधानयागस्थानत्वेन विधत्ते– 'राजानौ वा एतौ देवताना यदग्नीषोमावन्तरा देवता इज्येते देवताना विधृत्यै तस्माद्राज्ञा मनुष्या विधृता' इति॥ इज्येते इत्यत्र [१८]बहुवचनस्य व्यत्ययो द्रष्टव्य। प्रधानदेवता हि तयोर्मध्य इज्यन्ते। अत एवाऽऽथर्वणिका आमनन्ति– "यदा लेलायते [१९]ह्यर्चि समिद्धे हव्यवाहने। तदाज्यभागावन्तरेणाऽऽहुती प्रतिपादयेत्" (मुउ १ २ २) इति। एव च सत्युभयतोऽवस्थिताभ्या राजभ्या मध्येऽवस्थिता प्रधानदेवता [२०]विशेषेण धृता भवन्ति[२०]। अथवाऽत्र देवताशब्देन [२१]अवान्तरदेवता विवक्षिता। ता अन्तरेण तासा मध्ये राजानावग्नीषोमाविज्येते। ताश्च देवता [२२]परितोऽवस्थिता [२३]भृत्यवदेतौ राजानौ विशेषेण धारयन्ति। अथवा राजभ्या ताभ्यामन्या देवता जीवितप्रदानेनैव पोषिता भवन्ति। यस्मादेव तस्माल्लोकेऽपि मनुष्या सर्वे राज्ञा विधृता [२४]वर्तन्ते ॥

ब्रह्मवादिन इति ॥ इत्थमाज्यभागौ निरूप्य तदीये याज्यानुवाक्ये उपरितनस्याऽऽग्नेयस्य प्रधानस्य हविषो याज्यानुवाक्ये च क्रमेण विधत्ते 'ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमान कुरुते

६ ल हो–प्रयाजदेवता°।

१७ अ इ उ जो ना पा हा – प्रधानस्थानत्वेन। १८ ड ड१ ?? – बहुवचनत्वेन व्यत्ययो। १९ अ इ उ जो पा हा– ह्यग्नि। २०–२० अ उ जो पा हा– विधृता भवन्ति विशेषेणेति ना– भवन्ति विशेषेणेति। २१ क ड १ ना हा१– अवान्तर°। २२ अ इ उ जो ना पा– परितो वर्तन्ते। २३ अ इ उ ड ड१ जो पा ?? हा हो१–सवकभृत्य°, क सव्यभृत्य°। २४ ड?– वधन्त।

तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार मूर्धन्वती पुरोऽनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति (२) नियुत्वत्या यजति भ्रातृव्यस्यैव पशून् नि युवते

तेन । अन्यतोदत इत्यन्यतः - दतः । दाधार । ऋचम् । अनूच्येत्यनु - उच्य । हविषः । ऋचा । यजति । तेन । उभयतोदत इत्युभयतः - दत । दाधार । मूर्धन्वतीति मूर्धन् - वती । पुरोनुवाक्येति पुरः– अनुवाक्या । भवति । मूर्धानम् । एव । एनम् । समानानाम् । करोति (२) । नियुत्वत्येति नि - युत्वत्या । यजति भ्रातृव्यस्य । एव । पशून् । नीति । युवते ।

मूर्धन्वतीति ॥ मूर्धशब्दयुक्ता पुरोऋक् । “ ह्रस्वनुड्भ्याम्° ” ( पा ६.१.१७६ ) इति मतुप उदात्तत्वम् ॥

नियुत्वत्येति ॥ नियुच्छब्दवत्या । “ तसौ मत्वर्थे ” ( पा १.४.१९ ) इति भत्वम् । नि युवत इति । भ्रातृव्य नितरा पृथक्करोति । यौते व्यत्ययेन श , आत्मनेपद च ॥

येनान्यतोदतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार’ इति ॥ अन्यतोऽधोभाग एव दन्ता येषा [25]-गवादीना तेऽन्यतोदतः, एतान् पशून् येन-[25] यज्ञाङ्गेन यजमानो दाधार प्राप्नोति तद्यज्ञाङ्ग किं नाम यजमानः कुरुते । उभयत [26]ऊर्ध्वाधोभागयोर्दन्ता येषामश्वादीनां त उभयतोदत(न्त)स्तान् येन प्राप्नोति तदपि किम् ? इत्येवं ब्रह्मवादिषु [27]-कैश्चिदनभिज्ञैः पृष्टाः इतरेऽभिज्ञा.-[27] उत्तरमवदन् । आज्यभागस्य होमकाले पुरोनुवाक्यारूपेण काचिदृचं पठित्वा याज्यारूपेण जुषाण इत्यादियजुषा यागं करोति । तेनाधोभागे सपूर्णाया ऋचः पाठेन अधोभागस्थदन्तयुक्तान् [28]पशूनाप्नोति । [29]प्रधानस्याऽऽग्नेयस्य हविषो होमे पुरोनुवाक्यामप्यृचमेव पठित्वा याज्ययाऽप्यृचैव [30]यजति । [31]तेनाधऊर्ध्वभाविन्योः [32]ऋचोः सपूर्णत्वेन भागद्वयेऽपि दन्तयुक्तानश्वादीन् प्राप्नोति तत्राऽऽज्यभागविषया पुरोनुवाक्या यजुश्चेत्युभयं [33]पूर्वमेवोदाहृतं व्याख्यातं च । आग्नेयविषये च याज्यानुवाक्ये वक्ष्येते । तस्मादीदृशमेवोभयत्र [34]कर्तव्यम् इति विधिः पर्यवस्यति ॥

मूर्धन्वतीति ॥ [35]आग्नेययागस्य याज्यानुवाक्ये सामान्येन [36]-विधाय विशेषाकारेण-[36] विधत्ते– ‘मूर्धन्वती पुरोनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति । नियुत्वत्या यजति भ्रातृव्यस्यैव पशूनि युवते’ इति ॥ मूर्धञ्छब्दो यस्यामृच्यस्ति सा मूर्धन्वती, तया समानानां मध्ये यजमानं मूर्धानं मूर्धवदुत्कृष्टं करोति । नियुच्छब्दो यस्यामृच्यस्ति सा नियुत्वती, तया [37]वैरिणां पशून् नितरां वि योजयति ।

२५–२५. आ.क– ते गवादयोऽन्यतोदतस्तान् पशून् येन, ग– गवादीना तेऽन्यतोदत तान् पशनेव, ड१– गवादीना तेऽन्यतोदन्ताः तान् पशून् । २६. आ.क–ऊर्ध्वाधरयोः । २७–२७. आ.क– एके विज्ञाः पृष्टाः । इतरे विज्ञाः । २८. ड१– पशून् प्राप्नोति । २९. ड१– प्रधानस्य त्वाग्ने°; ग– प्रधानस्य त्वाग्ने° । ३०. अ.इ.उ.जो.ना.पा.ग– यजते, हो१–यजेत । ३१. अ.आ.इ.उ.जो.पा हा– °ऽध्वंभागयोः, क ना– °ऊर्ध्वभागयो. । ३२. हा.– ऋचोः । ३३. आ.क–पूर्वमेवोक्त । ३४. आ.क –यष्टव्यमिति । ३५. ड ड१–आग्नेयस्य यागस्य । ३६–३६. अ.इ.जो.पा.हा–विधायविशेषाकारेण । ३७ ड– वैरिण° ।

केशिनं॑ ह दार्भ्यं केशी सात्यका॑मिरुवाच सप्तप॑दा ते शक्व॑री॑ श्वो य॒ज्ञे प्र॑यो॒क्तासे॑

केशिन॑म्। ह॒। दा॒र्भ्य॑म्। के॒शी। सात्यका॑मि॒रिति॒ सात्यं काम‍ि॒ । उ॒वा॒च॒।
स॒प्तप॑दा॒मिति॑ स॒प्त-प॒दा॒म्। ते॒। शाक्व॑रीम्। श्व । य॒ज्ञे। प्र॒यो॒क्तास॒ इति॑ प्र यो॒क्तासे॑।

केशिनमित्यादि ॥ दर्भस्यापत्य केशिनामान सत्यकामस्यापत्य केशिनामा 'उवाच। दर्भशब्दात गर्गादियञ (पा ४ १ १०५) उदात्तनिवृत्तिस्वरेण उदात्तत्वम्। 'सप्तपदामिति। त्रिपदा पुरोनुवाक्या चतुष्पदा 'याज्या त्रिष्टुप। अनयो समष्टि सप्तपदा। 'शक्वरी सर्वार्थसाधनभूता वक्ष्यमाणवीर्यवतीं तव 'यज्ञे 'श्व 'प्रयोक्तासे। तया महावीर्या सा ज्ञातव्येति विशेषमभिधित्सु सात्यकामिरवाचेति। "न लुट्" (पा ८ १ २९) इति

एते याज्यानुवाक्ये मन्त्रकाण्डे (तैब्रा ३ ५ ७) समाम्नाते। तयोर्विनियोग बौधायनो दर्शयति– "अथ हविषामग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयस्य पुरोडाशस्य" इति ॥

तत्र प्रथमाया पाठस्तु– "अग्निर्मूर्धा दिव ककुत्। पति पृथिव्या अयम्। अपा रेता सि जिन्वति" (तैब्रा ३ ५ ७) इति। अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा द्युलोकस्य शिर स्थानीय, पृथिव्या 'पतिर्दाहपाकादिकारित्वेन पालकोऽप्ययं, किं चापा रेतांसि उदककार्याणि स्थावरजङ्गमात्मकानि शरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति ॥

द्वितीयस्या पाठस्तु– "भुवो यज्ञस्य रजसश्च नेता। यत्रा नियुद्भि सचसे शिवाभि। दिवि मूर्धान दधिषे सुवर्षाम्। जिह्वामग्ने चकृषे हव्यवाहम्" (तैब्रा ३ ५ ७) इति। अयमग्निर्भूलोकस्य तत्रानुष्ठेयस्य यज्ञस्य तस्मिन् यज्ञे प्रवर्तकस्य रजोगुणस्य च नेता 'निर्वाहक। तादृश हेऽग्ने, यत्र यस्या दिवि सूर्यरूपो भूत्वा 'नियुद्भी रये नितरा' योज्यमानाभि 'शिवाभिरुत्तमाभिरश्वजातिभि सचसे समवैषि 'तस्या दिवि मूर्धान शिरोवदुन्नतस्थितिं दधिषे धारयसि। कीदृश मूर्धानम्? सुवर्षां सुव 'स्वर्गलोके 'स्यति सर्वदा तिष्ठतीति सुवर्षास्त सुवर्षां, 'सोमपाशब्दवत् 'पुलिङ्गोऽयम्। हेऽग्ने, त्वमस्मिन् यज्ञे हव्यवाह हविष प्रापिका जिह्वा ज्वाला चकृषे करोषि ॥

केशिनमिति ॥ तदिद याज्यानुवाक्यायुगलमनेकप्रकारेण प्रशसति– 'केशिनं ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदा ते शक्वरी श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान् भ्रातृव्यान् नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति' इति ॥ दर्भनामक पुत्र कश्चित् केशी, 'सत्यकामस्य पुत्रोऽपर केशी, तयो 'दार्भ्यं प्रति

४ तरे लहो– 'सप्तपदामिति' इत्यस्यानन्तरं 'त्रिष्टुप्'। ५ लहो– इति। ६ ल– प्रवर्गे योक्ता।

३८ अ आ उ ह ओ पा हा– °दाहकारित्वेन। ३९ आ हा– प्रवर्तको निर्वाहक। ४०–४० अ इ उ ओ ना पा हा– नियुद्भिरश्वैर्नितरा ड हो१– नियुद्भिर्नितराम्। ४१ अ इ उ ओ पा हा– शिवाभिरश्वजातिभिरुत्तमाभि। ४२ क– तस्मात्। ४३ ह ड१– स्वर्गे। ४४ ह– अवस्यति। ४५, ३० आ क सोमपावत्। ४६ आ क ड१– पुलिङ्गोऽयं शब्द। ४७ अ आ इ उ ओ पा– सत्यकाम°।

**यस्यै॑ वी॒र्ये॑ण॒ प्र जा॒तान् भ्रातृ॑व्यान् नु॒दते॒ प्रति॑ जनि॒ष्यमा॑णा॒न् यस्यै॑ वी॒र्ये॑णो॒भयो॑र्लो॒कयो॒र्ज्योति॑र्ध॒त्ते यस्यै॑ वी॒र्ये॑ण पू॒र्वा॒र्धेना॑न॒ड्वान् भु॒नक्ति॑ जघना॒र्धेन॑ धे॒नुरिति॑ पु॒रस्ता॑ल्लक्ष्मा पु॒रोऽनुवा॒क्या॑ भवति जा॒ताने॒व भ्रातृ॑व्या॒न् प्र णु॑दत**

यस्यै॑। वी॒र्य॑ण। प्रेति॑। जा॒तान्। भ्रातृ॑व्यान्। नु॒दते॑। प्रतीति॑। ज॒नि॒ष्यमा॑णान्। यस्यै॑। वी॒र्ये॑ण। उ॒भयो॑। लो॒कयो॑। ज्योति॑। ध॒त्ते। यस्यै॑। वी॒र्ये॑ण। पू॒र्वा॒र्धेनेति॑ पूर्व अ॒र्धेन॑। अ॒न॒ड्वान्। भु॒नक्ति॑। ज॒घ॒ना॒र्धेनेति॑ जघन अ॒र्धेन॑। धे॒नु। इति॑। पु॒रस्ता॑ल्लक्ष्मेति॑ पु॒रस्ता॑त् ल॒क्ष्मा। पु॒रो॒नु॒वा॒क्येति॑ पु॒र – अ॒नु॒वा॒क्या॑। भ॒वति॑। जा॒तान्। ए॒व। भ्रातृ॑व्यान्। प्रेति॑। नु॒द॒ते॑।

निघाताभाव। वीर्यफलानि स्वयमेव इदानीं दर्शयति– 'यस्यै' इत्यादि। पुरोनुवाक्या प्राधम्याज्जातानां शत्रूणां प्रतिनोद उत्पत्तिनिरोध। उभयोरिति। अस्मिंश्चामुष्मिंश्च पूर्वोत्तरभागादुभयो। पूर्वार्धेनेति। अनड्वान् वाहनादिना पूर्वार्धेन प्रजा भुनक्ति रक्षति। धेनु क्षीरस्रवणादिना जघनार्धेन प्रजा भुनक्ति। पूर्वोत्तरत्वात् अनयो॥

अथेदानीं स्वयमेव वीर्यविशेषमनयोर्दर्शयितुमाह– 'पुरस्ताल्लक्ष्मा' इति॥ लक्षण यष्टव्यदेवतानामधेयम्। पूर्वस्मिन्नर्धर्चे लक्ष्म यस्या सा तथोक्ता। यथा– "अग्निर्मूर्धा"

सायणभाष्ये–हे दार्भ्य, श्व [48]प्रयोक्ष्यमाणे ते त्वदीये यज्ञे सप्तभि [49]पादैरुपेता शक्वरीछन्दस्कामृच [50]प्रयोक्ष्यस। सा च [51]ऋगत्यन्तवीर्यवती। "अग्निर्मूर्धा" इत्यादयस्त्रय पादा। "भुवो यज्ञस्य" इत्यादय चत्वार पादा। तदुभय मिलित्वा सप्तपदा शक्वरी भवति। शक्तिरस्या अस्तीति शक्वरी। [52]सा च शक्तिरेव द्रष्टव्या[52] यस्या शक्वर्या सामर्थ्येन पूर्वमुत्पन्नान् भ्रातृव्यान् प्रणुदते निराकरोति। जनिष्यमाणान् च यथा [53]नोत्पत्स्यन्ते [54]तथा [55]प्रतिनुदते प्रतिबध्नातीत्यर्थ [53]। किं च, तदीयेन वीर्येण [56]भूर्लोकस्वर्गलोकयो [57]ज्योतिस्त्वयं पुरुष धत्ते। किं च तदीयेन वीर्येण बलीवर्दो लाङ्गलशकटवाहिना स्कन्धरूपेण पूर्वभागेन स्वामिन पालयति। धेनु च क्षीरप्रदेनोधसाऽपरभागेन(ण) स्वामिन पालयति, तथाविधेय शक्वरी॥

पुरस्ताल्लक्ष्मेति॥ याज्यानुवाक्ययोर्लक्षण दर्शयति– 'पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जातानेव भ्रातृव्यान् प्र णुदत उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रति नुदते' इति॥ मन्त्रप्रतिपाद्याया देवताया नामधेय लक्ष्म, [58]तद्यस्यामृचि पूर्वार्धे विद्यते सा पुरोनुवाक्या। तन्नाम [59]यस्याम् उत्तरार्धे [60]विद्यत सा याज्या। तद्यथा– 'अग्निर्मूर्धा' इति पूर्वार्धेऽग्निशब्द। "जिह्वामग्ने चकृषे हव्य

४८ आ क – प्रयोज्यमाने। ४९. आ क – पदैरु°। ५० अ इ उ ड जो पा हा हो१– प्रयोज्यसे (!)। ५१. ड ड१ ग८–अत्यन्त°, अ इ उ जो ना पा हा–ऋक् तवार्थवती। ५२–५२ जो हा–शक्तिरेव पैरिणो, ड ड१ ग८–शक्तिरेव द्रष्टव्या। ५३–५३ ड–नोत्पत्तिस्तथा प्रतिबध्नाति। ५४ आ हा–तथा करोति। ५५. ड१ हो१– 'प्रतिनुदते' नास्ति। ५६ ग – °स्वर्लोकयो, ड१ – भूलोकस्वयो। ५७ अ इ ट भो ना पा हा– ज्योतिरस्करोता। ५८ ड– 'तत्' नास्ति। ५९. ड ड१– यस्यामृचि। ६०. ड– 'विद्यो' नास्ति।

उपरिष्टाल्लक्ष्मा (३) याज्या जनिष्यमाणानेव प्रति नुदते पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ

उपरिष्टाल्लक्ष्मेत्युपरिष्टात्-लक्ष्मा (३)। याज्या। जनिष्यमाणान्। एव। प्रतीति। नुदते। पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा। पुरोनुवाक्येति पुरः–अनुवाक्या। भवति। अस्मिन्। एव। लोके। ज्योतिः। धत्ते। उपरिष्टाल्लक्ष्मेत्युपरिष्टात् लक्ष्मा। याज्या। अमुष्मिन्। एव। लोके। ज्योतिः। धत्ते। ज्योतिष्मन्तौ। अस्मै। इमौ। लोकौ। भवतः। यः। एवम्। वेद। पुरस्ताल्लक्ष्मेति पुरस्तात्-लक्ष्मा। पुरोनुवाक्येति पुरः– अनुवाक्या। भवति। तस्मात्। पूर्वार्धेनेति पूर्व-अर्धेन। अनड्वान्। भुनक्ति। उपरिष्टाल्लक्ष्मेत्युपरिष्टात् लक्ष्मा। याज्या। तस्मात्। जघनार्धेनेति जघन–अर्धेन। धेनुः। यः। एवम्। वेद। भुङ्क्ते। एनम्। एतौ।

(तैब्रा ३·५·७) इत्यादि। उत्तरस्मिन् अर्धर्चे लक्ष्मवती [v]उपरिष्टाल्लक्ष्मा, यथा– "जिह्वामग्ने चकृषे" (तैब्रा ३·५·७) इति। [7]उभयत्रापि "मन" (पा ४·१·११) इति[7] ङीप्प्रतिषेधः। गतमन्यत्॥

अस्मा इति॥ यजमानार्थं, [v]य [v]एवं [v]वेद तस्मै च [v]इमौ [v]लोकौ [v]ज्योतिष्मन्तौ [v]भवतः। [8]भुङ्क्त इति। [9]एवंवेदितारम् [9]एतौ अनड्वान् धेनुश्च [v]भुङ्क्त, यथायथ सरक्षत। एष च एषा च एतौ। "पुमान् स्त्रिया" (पा १·२·६७) इति पुंसः शेषः॥

वाहम्" इत्युत्तरार्धेऽग्निशब्दः। पूर्वार्धगतेन लक्ष्मणेन [61]"पूर्वोत्पन्नभ्रातृव्यान् निराकरोति[61]"। उत्तरार्धगतेन लक्ष्मणा जनिष्यमाणवैरिप्रतिबन्धः॥

पुरस्ताल्लक्ष्मेति॥ तदेव पूर्वोत्तरार्धगतं लक्ष्मद्वयमनूद्य पुनरपि द्वेधा प्रशंसति– 'पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ' इति॥ अस्य लोकस्य पूर्वभावित्वात् पूर्वभाविना [62]लक्ष्मणा [v]ज्योतिः भवति। स्वर्गस्य उपरिवर्तित्वात् उपरिवर्तिना लक्ष्मणा [v]ज्योतिः।

७–७. ल– 'उभयत्रापि मन इति' नास्ति। ८ लं हो– उक्त। ९–९ हो– एवंवेदितारौ।

६१–६१. क ड ड१.हो१– [v]भ्रातृव्यनिराकरणम्। ६२ आ हा– लक्षणेन।

वज्र आज्यं वज्र आज्यभागौ (४) वज्रो वषट्कारस्त्रिवृतमेव वज्रं॰ संभृत्य भ्रातृव्याय प्र हरत्यछंम्बट्कारमपगूर्य वषट् करोति स्तृत्यै गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद

वज्रं । आज्यम् । वज्रं । आज्यभागावित्याज्य भागौ (४) । वज्रं । वषट्कार इति वषट् कार । त्रिवृतमिति त्रि वृतम् । एव । वज्रम् । सभृत्येति स भृत्य । भ्रातृ याय । प्रेति । हरति । अछंम्बट्कारमित्यछंम्बट् कारम् । अपगूर्येत्यप गूर्य । वषट् । करोति । स्तृत्यै । गायत्री । पुरोनुवाक्येति पुर अनुवाक्या । भवति । त्रिष्टुक् । याज्या । ब्रह्मन् । एव । क्षत्रम् । अन्वारम्भयतीत्यनु-आरम्भयति । तस्मात् । ब्राह्मण । मुख्य । मुख्य । भवति । य । एवम् । वेद ।

वज्र आज्यमित्यादि ॥ [10]त्रिगुणेनैव वज्रेण[10] भ्रातृव्यस्य रक्ष प्रभृते प्रहरण यज्ञस्य अछम्बट्कारायानार्तत्वाय भवति । "ये यजामहे" (तैस १ ६ ११) इत्यपगूरणयुक्तो वषट् कारश्च भ्रातृव्याणा V स्तृत्यै छादनाय [11]विनाशाय भवति । हस्यात धात्वन्तर द्रष्टव्यम् ॥

ब्रह्मन्नेवेति ॥ गायत्र्या प्राथम्यात् त्रिष्टुभश्च चरमभागात् गायत्रत्रैष्टुभयोर्ब्रह्मक्षत्रयो प्राधान्य [12]गुणभावश्च भवति[12] । V एव वेदिता च V मुख्य V भवति ॥

वेदितुरपि सदैव फलम् । एवमनडुहो [13]धेन्वाश्च पूर्वोत्तरार्धसाम्य योज्यम्[13] । एतस्योभयस्य वेदितारम् [14]एतौ धेन्वनड्वाहौ स्वस्वोपकारेण पालयत ॥

वज्रेति ॥ अथ याज्यान्ते [15]प्रयोज्यस्य [16]वषट्कारस्य विधिमर्थवादेनोन्नयति- 'वज्र आज्य वज्र आज्यभागौ वज्रो वषट्कारस्त्रिवृतमेव वज्र॰ सभृत्य भ्रातृव्याय प्र हरत्यछम्बट्कारम्' इति ॥ तानूनप्त्र ब्राह्मणे - "घृत (खलु) वै देवा वज्र कृत्वा सोममघ्नन्' (तैस ६ २ २) इत्युक्तत्वादाज्यस्य वज्रत्वम् ॥ "वृत्राणि जङ्घनत्" (तैमा ३ ५ ६) इति मन्त्राम्नानादाज्यभागयोर्वज्रत्वम् । "वषट् कारो वै गायत्रियै शिरोऽच्छिनत्" (तैस २ १ ७) इत्युक्तत्वात् वषट्कारस्य वज्रत्वम् । तदेतत्त्रयम् आज्यभागाख्यकर्मणि मिलित्वा त्रिगुणो वज्र सपद्यते । तादृशेन भ्रातृव्यस्य प्रहरणे सति [17]छम्बट्कार वैयर्थ्यं तस्य प्रहारस्य न भवति ॥

अपगूर्येति ॥ [18]तस्य वषट्कारस्योच्चध्वनिं विधत्ते- 'अपगूर्य वषट् करोति स्तृत्यै' इति ॥ 'अपगूर्य उच्चैर्ध्वनिं कृत्वेत्यर्थ ॥ स च ध्वनिर्भ्रातृव्यस्य हिंसार्थं सपद्यते । अय च वषट्कारविधिराग्नेयादि याज्यास्वपि समानो द्रष्टव्य । "वषट्कारोऽन्त्य सर्वत्र" (आश्वश्रौ १ ५ ५) इत्याश्वलायनवचनात् ॥

१०-१० ल- त्रिगुणेने(?)वज्र°, हो- त्रिगुणे वज्र° । ११ ळ- 'विनाशाय' नास्ति । १२-१२. तं मे ले हो- गुणभाव च करोति ।

१३-१३ जो हा- धेन्वोश्च साम्य य , ना- धेन्वोश्च साम्य योज्य, अ उ-धेन्वोश्च य , इ पा- धेन्वोश्च स्याम्ययो य , ट- पर्व न गु ि धेन्वा च पूर्वोत्तरार्धसाम्य योज्यम् । १४ आ क- धेन्वानुहो । १५. ट योक्तव्यम्य, ट१ - प्रयोक्तव्यस्य । १६ ना ना पा हा-अर्धवषट्कारस्य, इ- अर्धं वषट्कारस्य । १७ आ क जो हा हो१- वषट्कारेण, अ न पा- वषट्कारे । १८ क- 'तस्य' नास्ति ।

प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेणैवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति (५) वषट्कारेण स्थापयति

प्रेति। एव। एनम्। पुरोनुवाक्ययेति पुरः– अनुवाक्यया। आह। प्रेति। नयति। याज्यया। गमयति। वषट्कारेणेति वषट् कारेण। एति। एव। एनम्। पुरोनुवाक्ययेति पुरः– अनुवाक्यया। दत्ते। प्रेति। यच्छति। याज्यया। प्रतीति (५)। वषट्कारेणेति वषट्-कारेण। स्थापयति।

प्रैवैनमित्यादि॥ [69]एनं यजमानं पुरोनुवाक्यया प्राह हविर्याजिनं यजमानमेव प्रकृष्टं करोति ब्रवीति, याज्यया एनं प्रणयति प्रकृष्टफलं प्रापयितुं नयति, वषट्कारेण तत्फलं गमयति प्रापयतीति॥

अथान्यथा रूपयति – एवैनमिति॥ पुरोनुवाक्यया एनम् आदत्ते देवेषु स्थापयितुं गृह्णाति। याज्यया देवेभ्यः प्र यच्छति। वषट्कारेण देवेषु स्थापयतीति॥

गायत्रीति॥ [69]पुनरप्याग्नेयस्य याज्यानुवाक्ये [70]छन्दोद्वारा प्रशंसति– 'गायत्री पुरोनुवाक्या भवति। त्रिष्टुग्याज्या ब्रह्मणैव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यः" इति॥ "अग्निर्मूर्धा" इति गायत्री। सा च ब्राह्मणेन सहोत्पन्नत्वात् ब्रह्मस्वरूपा। "भुवो यज्ञस्य" इति त्रिष्टुप्। सा च क्षत्रेण सहोत्पन्नत्वात् [71]क्षत्रस्वरूपा। तथा सति गायत्रीत्रिष्टुभोः पौर्वापर्येण [72]ब्राह्मणम् अनु [72] पश्चात् [73]क्षत्रियः प्रवर्तितवान् भवति। यस्माद्ब्राह्मणः पूर्वं प्रवृत्तः तस्मात् [74-74]मुख्यः भवति। मुखे भवतीति व्युत्पत्तेः [74]॥

मुख्य इति॥ तद्वेदनं प्रशंसति– 'मुख्यो भवति य एवं वेद' इति॥

प्रेति॥ पुनरपि पुरोनुवाक्यादित्रयं प्रदेयदेवतासमीपप्रापणद्वारेण प्रशंसति– 'प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेण' इति॥ पुरोनुवाक्यापाठेन हविषो दातारम् [75]एनं यजमानं[75] देवानामग्रे प्रकर्षेण कथितवान् भवति। याज्यया तं मार्गेण नयति। वषट्कारेण देवान् प्रापयति॥

एति॥ पुनरपि तस्य प्रापितस्य यजमानस्य प्रतिष्ठापनद्वारेण प्रशंसति– 'एवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति वषट्कारेण स्थापयति' इति॥ एनं यजमानं त्रिभिर्मन्त्रैः क्रमात् हस्तेन गृहीत्वा देवेभ्यः प्रदाय तत्रोपवेशयति॥

१३ मै४ ल हो–एवम्।

६९. ड१–पुनराग्नेयस्य। ७०. ह ड१– छन्दोद्वारेण। ७१ ड ड१– क्षत्रस्वरूपा। ७२–७२ ड– मुखे। ७३. आ क– क्षत्रिय। ७४–७४ ड१– मुखे भव इति व्युत्पत्त्या मुख्य। ७५–७५. आ क एव।

त्रिपदा पुरोनुवाक्या भवति त्रयं इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रति तिष्ठति गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एवं वेद शक्नोत्येव ( ६ ) यच्छिक्षति ॥ २ ॥

[ देवतानां करोत्युपरिष्टाल्लक्ष्माऽऽज्यभागौ प्रति शक्नोत्येव द्वे च । ]

त्रिपदेति त्रि पदा । पुरोनुवाक्येति पुरः –अनुवाक्या । भवति । त्रयं । इमे । लोका । एषु । एव । लोकेषु । प्रतीति । तिष्ठति । चतुष्पदेति चतुः पदा । याज्या । चतुष्पद इति चतुः पद । एव । पशून् । अवेति । रुन्द्धे । द्व्यक्षर इति द्वि अक्षर । वषट्कार इति वषट् कार । द्विपादिति द्वि - पात् । यजमान । पशुषु । एव । उपरिष्टात् । प्रतीति । तिष्ठति । गायत्री । पुरोनुवाक्येति पुर – अनुवाक्या । भवति । त्रिष्टुक् । याज्या । एषा । वै । सप्तपदेति सप्त पदा । शक्वरी । यत् । वै । एतया । देवा । अशिक्षन् । तत् । अशक्नुवन् । य । एवम् । वेद । शक्नोति । एव । यत् । शिक्षति ॥ २ ॥

[ मैस ४ १० १,३, काम २० १५, शब्रा १ ६ ३, ७ २ ]

यथे[ त्रिपदे ]त्यादि ॥ गतम् ॥

[u]एतयेति ॥ गायत्रीत्रिष्टुप्समष्टिरूपया यत् [u]कर्तुमच्छन् [v]तत् [v]अशक्नुवन् एव [v]देवा । [v]एव वेदिताऽपि [v]यत् च कार्यमिच्छति तत् [v]शक्नोति एव साधयितुम् । शके "सनि मीमा" (पा ७ ४ ५४) इत्यादिना इस् अभ्यासलोपश्च ॥

इति द्वितीये षष्ठे द्वितीयोऽनुवाक ॥

त्रिपदेति ॥ पादसंख्यामक्षरसंख्या च प्रशंसति– 'त्रिपदा पुरोनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमान पशुष्वेवोपरिष्टात् प्रति तिष्ठति' इति ॥ पशुषु प्राप्तेषु सत्सु पश्चादेव ब्राह्मणभोजनादौ क्षीरादिकं दातु यत्पदद्वयो द्वाभ्यां पादाभ्यां स्थिरस्तिष्ठति ॥

गायत्रीति ॥ पूर्वमुक्त 'सप्तपदा ते शक्वरीम्' इति, तत्र पादोदाहरणेन प्रशंसति– 'गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एवं वेद शक्नोत्येव यच्छिक्षति' इति ॥ देवा यत्कार्यमुद्दिश्य अशिक्षन् शक्ता भवामेत्यैच्छन् । यद्वा– परस्परमयं कार्यं कर्तुमिति निश्चित्य एतया शक्वर्या ते तत्कार्यं कर्तुं शक्ता अभवन् । एतद्वेदिताऽपि यत्कार्यं कर्तुमिच्छति तस्मिन् कार्ये शक्तो भवत्येव ॥

१४ ख– एवेति । १५ ग– साधुम्

७६ ट – शिक्षति । ७७ – आ क ट१ – परस्परमिद । ७८ ट ट१ – 'ते' नास्ति । ७९-७९ ट१ – यत्कार्यमभिमिच्छन्, ट१ २ – यत्कार्यमुद्दिश्य भवितुमिच्छन्ति, ट– यत्कार्यं भवितुमिच्छन्ति । ८०-८० आ क– तत्कार्ये । ८१-८१ ट – शक्नोत्येव ।

तदेवमाग्नेयस्य याज्यापुरोनुवाक्ययोर्विधानेन लक्षणेन प्रशंसया च प्राजापत्योपांशुयाजादीनां याज्यानुवाक्या सर्वा मन्त्रकाण्डाम्नाता [82]व्याख्याता द्रष्टव्या । [83]ता वयम् आम्नातक्रमेण [83] उदाहृत्याक्षरार्थं वर्णयाम ॥

कल्प – "प्रजापते स वेदेति यस्य प्राजापत्य उपांशुयाजो भवति" इति। पाठस्तु– "प्रजापते न त्वदेतान्यन्य । विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु। वय॰ स्याम पतयो रयीणाम्। स वेद पुत्र पितर॰ स मातरम्। स सूनुर्भुवत् स भुवत् पुनर्मघ । स द्यामौर्णोदन्तरिक्ष॰ स सुव । स विश्वा भुवो अभवत् स आऽभवत्" (तैब्रा ३ ५ ७ ) इति। हे प्रजापते, त्वदन्य कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परि बभूव [84]परिभवितु [85]न समर्थोऽभूत् [85]। परिभव सृष्टेरप्युपलक्षणम्। सृष्टिसंहारयोरशक्त इत्यर्थं । अतस्ते तव वय यत्कामा जुहुमस्तत्फलम् [86]अस्माकमस्तु। वय [87]धनपतय स्याम। "द्यौ पिता। पृथिवी माता। प्रजापतिर्बन्धु" (तैब्रा ३ ७ ५ ) इति मन्त्रवर्णाद्ब्रह्माण्डमध्ये [88]सत्यलोके वर्तमानस्य प्रजापतेरण्डस्योपरितन [89]कपाल द्यौ पिता। अधस्तनकपालरूपा पृथिवी माता। स पुत्र प्रजापतिस्त पितर ता च मातर वेत्ति। अभिज्ञ स प्रजापति [90]सूनुर्भवति, [91]तयोर्मातापित्रो पुत्रो भवति। अत एव [92]तयोर्वेदन [93]एतस्योपपन्नमेव। मघशब्दो धनवाची। पुन पुनर्यजमानाय दातव्य धन यस्य [94]असौ पुनर्मघ । [95]तादृशोऽय प्रजापति भुवन्नजति। किं च स प्रजापति [96]सर्वव्यापि विराड्रूप धृत्वा द्याम् उपरितनकपालमौर्णोदाच्छादितवान्। [97]तथाऽन्तरिक्ष स्वर्गं च स और्णोत्। किं च स एव विश्वा भुव इम लोकमारभ्याधस्तना पूर्वा भूमीरभवत् [98]प्राप्तवान् आच्छादितवानित्यर्थ । किं च सत्यलोके समागत्य चतुर्मुखत्वेन रूपान्तरेण [99]परिमितोऽभवत् ॥

कल्प – "[100]तथाऽग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयस्य पुरोडाशस्य" इति। पाठस्तु– 'अग्नीषोमा सवेदसा। सहूती वनत गिर । स देवत्रा बभूवथु । युवमेतानि दिवि रोचनानि। अग्निश्च सोम सक्रतू अधत्तम्। युव॰ सिन्धूरभिशस्तेरवद्यात्। अग्नीषोमावमुञ्चत गृभीतान्" (तैब्रा २ ३ ५ ७) इति। हेऽग्नीषोमौ, गिरोऽस्मदीया स्तुतीर्वनत भजतम्। कीदृशौ? सवेदसा समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ, देवत्रा देवेषु मध्ये सबभूवथु । युवा सभूयैव[101] स्थितौ न कदाचिदप्यन्योन्यवियुक्तावित्यर्थं । हे सोम, त्वमग्निश्चेत्येतौ युवा सक्रतू समानसङ्कल्पौ सन्तौ दिव्येतानि रोचनानि नक्षत्राण्यधत्तमस्थापयतम्। हेऽग्नीषोमौ, युवा गृहीतान् सिन्धून् [102]रथ्योदकादिनिमित्तेन अपूतत्वापवादेन पङ्कादिरूपेणावद्येन दोषेण च गृहीता सर्वा नदीरभिशस्तेस्तस्मादपवादादवद्यात् [103]पङ्कादिदुष्टदोषाच्च अमुञ्चत मोचितवन्तौ। यद्यप्येतत् सर्वमीश्वरकृत तथाऽपि [104]तद्रूपत्वेनैतौ स्तूयेते ॥

---

८२ ड – समाख्याता । ८३-८३ अ इ उ जो पा हा – अस्मदीयक्रमेण आ क हो१ – ता स्वयमाम्नातक्रमेण, ग्र– तान् स्वय नमेण। ८४ अ इ उ जो ना पा हा– परिभावितु। ८५ ड ड१– समर्थो नाऽभूत्। ८६ अ इ उ जो ना पा हा– अविस्तमस्तु। ८७ ड ड१ ग्र– धनाना पतय । ८८ आ क– सत्यलोके। ८९ ड ड१– कपालरूपा। ९०. ड१– सूनुर्भुवत्। ९१ अ इ उ पा–ययो°। ९२ ड– तयोर्धन। ९३ आ क– तस्यो°, ड ड१– °पपन्नम्। ९४ आ क– स । ९५ अ इ उ जो ना पा हा– तादृशो य । ९६ अ इ उ जो पा हा– सवस्यापि। ९७ ड१– तदा। ९८ ड१– प्राप्नोत्। ९९ क– आ परितो°, हा– आ परिमितो°। १०० ग्र– अया°। १०१ ड– 'एव' नास्ति। १०२ हो१ – नद्यादकादि°। १०३ हो१ – °दिदोषदुष्टाच्च°, ड ड१ ग्र– °दिदुष्टदोषाच्च। १०४ ग्र– °त्वेन तौ।

कल्पः– "इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य" इति ॥ पाठस्तु– "इन्द्राग्नी रोचना दिवः। परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम्। श्नथद्वृत्रमुत सनोति वाजम्। इन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरेः। सहस्तमा सहसा वाजयन्ता" (तैब्रा ३·५·७) इति। हे इन्द्राग्नी, दिवस्परि [105]स्वर्गस्योपरि रोचना दीप्यमानौ युवां वाजेषु यजमानसंबन्धिष्वन्नेषु निमित्तभूतेषु भूषथो दातारौ भवितुमिच्छथः। तत् [106]भवदीयं [107]प्रभूतत्वं वां युवयोर्वीर्यं सामर्थ्यं प्रचेति प्रचेतयति प्रकर्षेण ज्ञापयतीत्यर्थः। 'इन्द्रा यो अग्नी' (तैब्रा ३·५·७) इत्यत्र समस्तं पदं विच्छिद्य मध्ये 'यः' इति [108]पदमाम्नातम्। तथा [109]सति हे इन्द्राग्नीति संबोधनं [110]द्रष्टव्यम्। यो यजमानो वृत्रं विरोधिनं [111]पाप्मानं श्नथन्निराकरोति, उत [112-]अपि च[-112] वाजं हविर्लक्षणमन्नं सनोति ददाति, [113-]हुरिः कौटिल्यं, तेन सह वर्तमानौ सहुरी[-113], यजमानस्य श्रद्धाराहित्यादिच्छिद्रान्वेषणेन कुटिलावपि युवां [114-]सपर्यात् अप्रमत्तो[-114] यो यजमानः परिचरति, तादृशं यजमानं [115]युवाम् अनुगृह्णीतमिति शेषः। कीदृशौ युवाम्? इरज्यन्ता अनुग्रहेण [116]भक्तचित्तं [117]रञ्जयन्तौ, भूरेर्बहुलस्य वसव्यस्य धनसमूहस्य, दाताराविति शेषः। सहस्तमा अतिशयेन सहिष्णू। सहसा बलवन्तौ। वाजयन्ता वाजं हविर्लक्षणमन्नं यन्तौ प्राप्नुवन्तौ।

कल्पः– "एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूत शत्रूनित्यैन्द्रस्य यद्यैन्द्रं सांनाय्यम्" इति॥ पाठस्तु– "एन्द्र सानसिं रयिम्। सजित्वानं सदासहम्। वर्षिष्ठमूतये भर। प्र ससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राऽऽभर दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनाम्" (तैब्रा ३·५·७) इति। हे इन्द्र, रयिं धनमूतये [118]अस्मद्रक्षणार्थम् [119-]आभर आनय[-119]। कीदृशं धनम्? सानसिं मनसो दानस्य संबन्धिनं बहुभ्यो दातुं पर्याप्तमित्यर्थः। सजित्वानं जित्वभिः [120]जयशीलैः पुत्रादिभिरुपेतम्। सदासहं सर्वदा विरोधिनां सोढार [121]तत्तिरस्कारक्षममित्यर्थः। वर्षिष्ठमतिशयेन प्रवृद्धम्। हे पुरुहूत, पुरुषु बहुषु यज्ञेष्वाहूयमान, शत्रून् प्रकर्षेण ससाहिषे सर्वदा सहसे [122]तिरस्कुरुषे इत्यर्थः। ते शुष्मो ज्येष्ठस्तत्र बलं [123]प्रशस्तमित्यर्थः। इहास्मिन् कर्मणि रातिरस्तु फलदानमस्तु। हे इन्द्र, दक्षिणेन हस्तेन वसूनि धनानि [124]आभर समानय। [125]सिन्धूनां समुद्रसमानानां रेवतीनां [126]धनवतीनां प्रजानां पतिरसि॥

कल्पः–"यद्यु वै माहेन्द्रं महाꣳ इन्द्रो य ओजसा महाꣳ इन्द्रो नृवदा चर्षणिप्रा इति माहेन्द्रस्य" इति। पाठस्तु– "महाꣳ इन्द्रो य ओजसा। पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वत्सस्य

---

१०५. अ.इ.उ.पा– विश्वस्योपरि। १०६. आ.क.ड– तदीयं। १०७. अ.इ.उ.जो.ना.पा.हा– विभूरत्वं। १०८. ड–एतत्पद°; ड१– एवमा°। १०९. आ– च। ११०. आ.क– 'द्रष्टव्यम्' नास्ति। १११. ड१–पाश्वम्। ११२–११२. आ.क– 'अपि च' नास्ति। ११३. आ.हा– सहुरी कौटिल्येन सह विद्यमानौ हुरिः कौटिल्यं, क– हुरि...सह विद्यमानौ सहुरी। ११४–११४. हो१– सपर्यात् समन्तात्; अ.इ.उ.जो.ना.पा.हा– सपर्यादपि च अप्रमत्तो। ११५. आ.क– युवामेव। ११६. ड.ड१– भक्तिचित्त। ११७. अ.इ.उ.जो.पा.हा.हो१– रक्षयन्तौ। ११८ ड.ड१– अस्मद्रक्षार्थम्। ११९–११९. आ.क– आभराऽऽहराऽऽनय। १२०. ना– जयनशीलैः। १२१. आ– तिरस्कार°। १२२. ड.ड१.पं हो१– तिरस्करोषि। १२३. ड.ड१.हो१ – 'इत्यर्थः' नास्ति। १२४. ड – आहर। १२५. आ– क – सिन्धूनां धनवाहिनीनाम्। १२६. आ.क. धनवतीना।

वावृधे। महाꣳ इन्द्रो नृवदा चर्षणिप्रा । उत द्विबर्हा अमिन सहोभि । अस्मद्रियग्वावृधे वीर्याय। उरु पृथु सुकृत कर्तृभिर्भूत्" (तैसं ३ ५ ७ ) इति। वृष्टिमान् पर्जन्य इव य इन्द्र ओजसा बलेन महान् स इन्द्रो वत्सस्थानीयस्य यजमानस्य स्तोमै [127]स्तोत्रैर्वावृधे वर्धताम्। अथ महानिन्द्रो नृवत् मनुष्यवत् आ चर्षणिप्रा, चर्षणीन् मनुष्यान् प्रति [128]तदभीष्टभोगै पूरयतीति [129]चर्षणिप्रा । यथा राजामात्यादिमनुष्य सेवकानभीष्टभोगैरापूरयति तद्वत्। अपि च अय द्वयो प्रकृतिविकृतिरूपयोर्यागयो " बर्हो [130]वृद्धि यस्येति द्विबर्हा । अमिन उपमारहित [131]सहोभिर्युक्तो [132]बलवान्। अस्मद्रियगस्मत्सदृशो वावृधे वृद्धिं प्राप्त । यथा वयमस्यानुग्रहाद्वृद्धिं प्राप्तास्तथाऽयमप्यस्मदीयैर्हविर्भि [133]विवृद्ध । एतदेव प्रपञ्च्यते वीर्याय सामर्थ्यसिद्धये। कर्तृभिर्यजमानैरस्य सुकृतोऽभूत् सुष्ठु वर्धितोऽभूत्। कीदृशी तस्याभिवृद्धि ? उरुर्विशाला विपुल । पृथुर्वलेन [135]विस्तीर्ण ॥

कल्प – " अथ स्विष्टकृत पिप्रीहि देवानिति पुरोनुवाक्यामनूच्य ये यजामहेऽग्निꣳ [136]स्विष्टकृतमयाडग्निरग्नेरित्युक्त्वा [137]यथादेवत निगदमुक्त्वा जातवेदा जुषताꣳ हविरिग्ने [138]यदद्य विशो अध्वर स्येत्यृचमनूच्य [139] यजति " (ह्व आश्वश्रौ १ ६ २ ५) इति। तत्र पुरोनुवाक्याया पाठस्तु–" पिप्रीहि देवाꣳ उशतो यविष्ठ। विद्वाꣳ ऋतूꣳरृतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने। त्वꣳ होतृणामस्याऽऽयजिष्ठ " (तैब्रा ३ ५ ७ ) इति। [139] हे यविष्ठ युवतम [140]अग्ने, उशत कामयमानान् देवान् पिप्रीहि अतिशयेन प्रीणय। हे ऋतुपते सूर्यात्मना कालपरिपालकाग्ने, त्वमृतून् [141]यागकालविशेषान् विद्वान् जानन् वर्तसे। तस्मादिहोचिते काले यज। देवेषु भवा ये दैव्या ऋत्विज सन्ति, " अग्निर्होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत् " (तैआ ३ ३ ) इत्यादिनाऽऽम्नातास्तेभि दैव्यै सह त्वमस्य यजमानस्य सबन्धिना होतृणामृत्विजा मध्य आयजिष्ठ सर्वतो यष्टृतमोऽसि ॥

निगदपाठस्तु– " अग्निꣳ स्विष्टकृतम्। अयाडग्निरग्ने प्रिया धामानि। अयाट् सोमस्य प्रिया धामानि। अयाडग्ने प्रिया धामानि। अयाट प्रजापते प्रिया धामानि। अयाडग्नीषोमयो प्रिया धामानि। अयाडिन्द्राग्नियो प्रिया धामानि। अयाडिन्द्रस्य प्रिया धामानि। अयाण्महेन्द्रस्य प्रिया धामानि। अयाड्देवानामाज्यपाना प्रिया धामानि। यक्षदग्नेर्होतु प्रिया धामानि। यक्षत् स्व महिमानम्। आयजता मेज्या इष । कृणोतु सो अध्वरा जातवेदा । जुषताꣳ हवि " (तैब्रा ३ ५ ७ ) इति॥ स्विष्टकृतमग्निम्। 'ये यजामहे' इति शेष पूरणीय । ये वय होतार सस्ते वय स्विष्टकृतमग्निं यजामहे। प्रथमाज्यभागदेव स्याग्नेर्यानि प्रियस्थानानि तेषु सर्वेषु [142]मेध्यहोतृरूपोऽग्निरयाट इष्टवान्। एवम् 'अयाट सोमस्य' इत्यादिषु।

---

१२७ ह१– 'स्तोत्रै' नास्ति। १२८ आ– तदभीष्टदानैर्भोगै। १२९ ह– 'चर्षणिप्रा' नास्ति। १३० ह– 'बर्हो' नास्ति। १३१ ह– विवृद्धि। १३२– ह ह१ श्र.हो१– सहोभिर्नैले युक्त। १३३ ह ह१– 'बलवान्' नास्ति। १३४ ह– वृद्ध। १३५ ह ह१ हो१– येन्तृत। १३६ क ह श्र.हो१– °ग्नेरिति, ह१– °मयाडग्निरिति। १३७ आ हा– यथादेवत। १३८–१३८ ह१ श्र–यदद्य त्यृच सधाय। १३९ आ– हेऽग्ने। १४० आ– 'अग्ने' नास्ति। १४१ ह ह१ श्र हो१– कालविशेषान्।

योज्यम्। देवानामानुपूर्वी चाऽऽवाहननिगदवद्व्याख्येया। होतुरग्नेर्होमस्य स्विष्टकृत्त्वसपादकस्याग्ने [142]प्रिया धामानि यानि सन्ति तपु दैव्यो होता यक्षद्यजतु। उक्ताना सर्वेषा देवाना स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता [143]यक्षद्यजतु। आयजतामाभिमुख्येन याग कुर्वता यजमानानामेज्या आभिमुख्येन यष्टव्या इष अभीष्टा या देवता सन्ति ता सर्वा अध्वरा अस्मिन् यज्ञे स जातवेदा स्विष्टकृत् सोऽग्नि कृणोतु स्विष्टा करोतु। तदर्थमय स्विष्टकृदग्निरिद हवि जुषताम्॥

याज्याया पाठस्तु–'अग्ने यदद्य विशो अध्वरस्य होत । पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भू । हव्या वह यविष्ठ या ते अद्य' (तैब्रा ३ ५ ७) इति। स्विष्टकृदग्ने विश प्रविष्टस्यानुष्ठितस्याध्वरस्य सबन्धि यद्धविरस्ति तदद्य वे, [144]वेरित्यशनार्थे, अशान भक्षय। होतर्होमकर्त पावक शोधक शोच दाप्यमान। तान्येतान्यग्निविशेषणानि। हि [145]यस्मात् त्व यज्वा यागस्य कर्ता तस्मात् ऋता ऋते असदीये यज्ञे महिना महिम्ना देवान् यजासि प्रीणयसि। यद्यस्मात् कारणाद्विभूर्विशिष्टो भवसि तस्मात् कारणात् हे यविष्ठ युवतम, अद्य ते तव या हव्या यानि हव्यान्यस्माभिर्दीयन्त तानि सर्वाणि वह स्वीकुरु॥

[146] ता एता [146] उदाहृता सर्वा याज्यानुवाक्या [147]आग्नेययाज्यालक्षणादिकथनादेव [148] अवगन्तु शक्या [148] इति मत्वा ब्राह्मणेन न पृथग्व्याख्याता॥

अत्र मीमासा॥ दशमाध्यायस्य प्रथमपादे चिन्तितम्

"[149] आज्यभागो य आग्नेय किं मुख्याग्ने स [149] सस्कृति ।
आरादुतोपकारी स्यात् पूर्वन्यायेन सस्कृति ॥
निगदेऽग्नेर्द्विरुक्तत्वात् [150] विधावेकपदोक्तित ।
उपकारी [151]तत सोऽग्नि सौर्यादौ न निवर्तते' ॥ (जैन्या १० १ १५ १६)॥

दर्शपूर्णमासयो [152]आम्नायते–'आज्यभागावग्नीषोमाभ्या यजति' इति। तयो प्रथम आग्नेयो द्वितीय सौम्य । तत्र सौम्यस्य नास्ति सदेह । प्रधानदेवतासु [153]केवलस्य सोमस्य अभावात्। अग्निस्तु केवल [154]आग्नेयपुरोडाशे विद्यते। तस्मादाग्नेय आज्यभाग पुरोडाशदेवताया अग्ने [155]किं सस्कार, उत दृष्टेरारादुपकारक इति सदिह्यते। तत्र [156]यथोत्तमप्रयाजो मन्त्रोक्ताना वक्ष्यमाणदेवताना

---

१४२ आ – प्रिय°। १४३ हा–यक्षद्यजन्तु। १४४ अ आ उ ड ड१ पा ग होर– 'वेरित्यशनार्थे' नास्ति। १४५ क ना जो हा– यस्मात् कारणात्। १४६–१४६ आ क– तावता। १४७ आ क ड–°याज्यानुवाक्यादि°। १४८–१४८ आ क–अवगन्तव्या। १४९–१४९ इ पा–आज्यभागे य आग्नेय किमु लक्षणस्याग्ने स उ–आज्यभागे य आग्नेय लक्षणस्याग्ने, अ– आज्यभागे य आग्नेय लक्षणस्याग्ने स। १५०. अ इ उ पा– उभावेक°। १५१ अ इ उ पा हो१– तेन। १५२ आ क श्रूयते। १५३ हा– केवल°। १५४ अ इ पा– आग्नेयेन पुरोडाशेन। १५५ अ इ उ ओ ना पा हा– 'किं' नास्ति। १५६ अ उ पा– उत्तमप्रयाज° इ– प्रथमोत्तमप्रयाज°।

संस्कारस्तथा प्रथमाज्यभागोऽपि 'अग्निमग्न आवह' इति [157] निगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः [157] संस्कार इति पूर्वः पक्षः। अत्रोच्यते – निगदस्तावदेव पठ्यते – "अग्निमग्न आवह। सोममावह। अग्निमावह" (तैब्रा ३ ५ ३) इति। [158]अस्यायमर्थः – [159] हेऽग्ने आहुत्यधिकरणभूत [159] [160]हविर्ग्राहिण [161]आज्यभागद्वयात्मकपार्श्वपुरोडाशदेवतारूपान् [162] अग्निं सोमोऽग्निं [162] इत्येतान्निर्देशावावहेति। तत्र [163]पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेवतारूपोऽग्निर्भिन्न [164] [165]इत्यवगम्यते। अन्यथाऽऽवाह्यस्याग्नेः [166]एकत्वे द्विरुक्तिर्व्यर्था स्यात्। अतः प्रथमाज्यभाग इज्यमानस्याग्नेः पुरोडाशदेवतात्वाभावात् तत्संस्कारत्वमयुक्तम्। किं चाऽऽज्यभागविधौ '[167]अग्नीषोमाभ्यां यजति' इति देवताद्वयं [168]समस्तेनैकेन पदेनोच्यते। तत्र यथा [169]सोमस्य यागं प्रति गुणत्वं भवताऽभ्युपगतं तथाऽग्नेरप्यभ्युपगन्तव्यम्। [170] तत्तु संस्कारपक्षे विरुद्धं, [171]संस्कार्यत्वेन प्राधान्यादङ्गभावात्। तस्मात् [172]संस्कारपक्षासंभवात् प्रथमाज्यभागो द्वितीयाज्यभागवददृष्टारादुपकारकः। एवं च सति सौर्ययागेऽपि[173] [174]प्रथमाज्यभागोऽग्निर्न निवर्तत इति बाधापवादो [175]विचारफलं भविष्यति॥

तत्रैव [176] चतुर्थपादे चिन्तितम्—

"अन्वाहेत्यर्थकर्म स्यात् संस्कारो [177]वाऽर्थकर्मता।
शस्त्रवत् [178]कार्यताज्ञानात् दृष्टार्थत्वेन संस्कृतिः"॥ (जैन्या १० ४ ३३)॥

"तिष्ठन् याज्यामन्वाहाऽऽसीनः पुरोनुवाक्याम्" (द्र आपश्रौ २४ १३ १०) इति दर्शपूर्णमासयोः [179]आम्नातम्। तदेतच्छस्त्रादिवदर्थकर्म स्यात्। यथा स्तौति शंसतीत्यत्र कर्तव्यताप्रतीतेः स्तोत्रशस्त्रयोरर्थकर्मत्वं तथाऽनुवचनस्यापि। मैवम्। [180]चोदितदेवतास्मरणसंस्कारस्य दृष्टप्रयोजनत्वात्॥ तस्मिन् सत्यदृष्टस्य कल्पयितुमशक्यत्वात्। ननु मन्त्रसामर्थ्यादेव [181]देवतास्मरणसिद्धेः 'अन्वाह' इति तद्विधानं व्यर्थम्। एवं तर्हि [182]प्राप्तमनुवचनमनूद्य 'तिष्ठन्नासीनः' इति स्थानासनगुणौ [183]विधीयेयाताम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

१५७-१५७ अ इ उ पा– निगदस्य प्रधानयागस्याग्ने। १५८ ङ१ तस्या°। १५९-१५९ ङ ङ१–आहुत्याधिकरणभूताग्ने। १६० अ इ उ पा– हविर्ग्रहणाय, जो ना हा– हविर्ग्राहिण। १६१ जो, हा–°देवतारूपिण, ग्र–°देवरूपान्। १६२-१६२. हा– अग्निं सोममग्निं। १६३ अ इ उ पा–°देवताग्ने, जो ना हा–°देवतारूपाग्ने। १६४ ङ१– अन्य। १६५ ङ१–इति गम्यते। १६६ ङ१– एकस्य। १६७. आ ग्र हा– अग्नीषोमाभ्यामाज्यभागौ। १६८ ङ१– °नैकै°। १६९ अ इ उ जो पा हा– सौम्यस्य। १७० ङ२– तच्च। १७१ आ क– संस्कारत्वे ङ– संस्कार्यत्वे। १७२ अ इ उ पा– संस्कारत्वासंभवात्। १७३ अ जो ना पा हा– 'अपि' नास्ति। १७४ अ इ पा– °भागोऽग्निर्न, हो१– °भागे न। १७५ अ इ जो पा हा– विचारभाव। १७६ ग्र– अन्यत्। १७७ ङ हा हो१– नार्थ°। १७८ अ इ उ पा ग्र,हो१– कार्यताभावात्, ङ१– कार्यतामानात्। १७९ ङ ग्र– श्रुतम्। १८० अ इ उ पा– °देवतासरणस्य। १८१ ङ– 'एव' नास्ति। १८२ आ क जो हा प्रागनु°। १८३ अ– विधीयता इ उ जो ना पा हा– विधीयेता।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति

प्रजापतिरिति प्रजा पतिः। देवेभ्यः। यज्ञान्। व्यादिशदिति वि-आदिशत्। सः। आत्मन्। आज्यम्। अधत्त। तम्। देवाः। अब्रुवन्। एषः। वाव। यज्ञः। यत्। आज्यम्। अपीति। एव। नः। अत्र। अस्तु। इति। सः। अब्रवीत्। यजान्। वः। आज्यभागावित्याज्य भागौ। उपेति। स्तृणान्। अभीति। घारयान्। इति। तस्मात्। यजन्ति। आज्यभागावित्याज्य भागौ। उपेति। स्तृणन्ति। अभीति। घारयन्ति।

प्रजापतिर्देवेभ्य इत्यादि ॥ [1]यजनसाधनानि हवींषि यज्ञाः, तान् [v]देवेभ्य विविधमादिश्य [v]आज्यम् आत्मन्येव [v]अधत्त, आज्यव्यतिरिक्तमेव देवेभ्यो ददौ। [3]त [v]देवा प्रजापतिम् [v]अब्रुवन् [v]आज्यम् एव यज्ञसाधनं, तस्मात् [v]अत्र आज्ये अस्माकमपि भागित्वमस्तु [v]एव। यद्वा-अत्रापि भागित्वमस्माकम् [v]अस्तु [v]इति। तत प्रजापति आज्यभागौ उपस्तरणाभिघारणे च देवेभ्यो दत्वा अन्यत् सर्वमात्मार्थं वृतवानिति। सर्वेत्र ल्ट्याडागम। तस्मादित्यादि। देवाना तृप्त्यर्थम् ॥

आज्यभागौ च याज्यानुवाक्या उक्ता द्वितीयके ॥

तृतीयानुवाके प्रधानभूत आग्नेयपुरोडाशो [1]विधातव्य।

प्रजापतिरिति ॥ तत्राऽऽदौ तावदुपस्तरणाभिघारणे विधत्ते- 'प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन्नाज्यमधत्त त देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति' इति। तवेदं [2]तवेदमित्येव यज्ञसाधनद्रव्याणि [v]देवेभ्य विभज्य दत्वा आत्मनि आज्यद्रव्य [v]प्रजापति स्थापितवान्। [v]त प्रजापतिं [v]देवा [3]एवम् [v]अब्रुवन्-[v]आज्यम् इति य [4]एष [5]एव [v]यज्ञ नाम, [6]सर्वेषु [v]यज्ञियेषु द्रव्येषु घृतस्यैव[7] सारत्वात्। तस्मादस्माकम् [v]अपि अस्मिन्नाज्ये कियानपि भाग [v]अस्तु [v]इति। तत [8]स प्रजापतिस्तान् देवानेवम् [v]अब्रवीत्-हे देवा, युष्मानुद्दिश्य यष्टार [v]आज्यभागौ यजन्तु। प्रधाने च हविषि [9]अधस्तादुपस्तरणमुपर्यभिघारण कुर्वन्त्विति[9]। [v]उप [v]स्तृणान् उपस्तृणन्तु। [v]अभि [v]घारयान् अभिघारयन्त्वित्यर्थः। यस्मादेवं [v]तस्मात् [v]आज्यभागौ आज्येन यजेयु। प्रधानहविषोऽधस्तादुपस्तृणीयुरुपरिष्टाच्चाभिघारयेयु ॥

१ ए हो- यजमान°। २ थि हो-ते।

१. आ क- अभिधातव्य। २ आ क- तवेदमिति। ३ ट१-'एवम्' नास्ति। ४ ट-'एष' नास्ति। ५. अ उ बो ना पा हा- 'एव' नास्ति। ६ ट-स्वेषु। ७-७ ट१ हो१- सर्वप्रद्रव्यैरात्मनैव। ८. ट- 'स' नास्ति। ९-९ ट१ हो१- अधस्तादुपस्तृणन्तु उपरि अभिघारयन्त्विति।

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो (१) हि

अग्ने । त्रयः । ज्यायाꣳस । भ्रातर । आसन् । ते । देवेभ्य । हव्यम् । वहन्त । प्रेति । अमीयन्त । सः । अग्नि । अबिभेत् । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । स । अपः । प्रेति । अविशत । तम् । देवता. । प्रैषमिति प्र एषम् । ऐच्छन् । तम् । मत्स्य । प्रेति । अब्रवीत् । तम् । अशपत् । धियाधियेति धिया - धिया । त्वा । वध्यासु । य । मा । प्रेति । अवोच । इति । तस्मात् । मत्स्यम् । धियाधियेति धिया - धिया । घ्नन्ति । शप्त (१) । हि ।

अग्नेस्त्रय इत्यादि ॥ गतम् । इत्थ वाव स्य इति । आत्मानमेव म एष इति निर्दिशति । [v]सः [v]निलायत निरगच्छत् । " उपसर्गस्यायतौ " ( पा ८·२·१९ ) इति लत्वम् । सोऽप प्राविशदित्यादि । [1]गतम । अप्सु प्रविष्टमदृश्यतां गतम् । [v]प्रैषम् इष्टविषये प्रेषितुम् [v]ऐच्छन् [v]देवता, तदर्थं तम् अन्विच्छन्ति स्मेति यावत् । छान्दसो णमुल् । अथाप्सु स्थितः कश्चित् [v]मत्स्यः [v]तम् अग्निं [v]प्राब्रवीत - इह [2]वसतीति । अथाग्निर्मत्स्यम् [v]अशपत् [v]य. त्वम् मामदृश्य देवताभ्य [v]प्रावोच. [v]त त्वा सर्वेऽपि [v]धियाधिया कर्मणा जालग्रहणादिना व्यापारेण [3v]वध्यासु पुरुष व्यापारेणैव तव प्राणवियोगोऽस्त्विति । बुद्धियोगो वा धीरित्युच्यते । [v]तस्मात् शप्तत्वादद्यापि तथैव [4]म्रियते मत्स्यः ॥

प्रयोगो बर्हिषः स्पष्टं पञ्चमे प्रतिपादितः ॥

अथ षष्ठेऽनुवाक उपांशुयाजस्विष्टकृतौ वक्तव्यौ ।

अग्नेरिति ॥ तत्राऽऽदौ तावत् परिधीनां परिधानं विधातु प्रस्तौति – ' अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् त मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो हि तमन्वविन्दन् तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातॄणां भागधेयमसदिति तस्माद्यद् गृहीतस्याहुतस्य बहि.परिधि स्कन्दति तेषां तद्भागधेय तानेव तेन प्रीणाति ' इति ॥ यथा [1]भ्रातरः [1]त्रय [1]हविः [1]वहन्तः [1]मृता [2]इत्थम् एव [2]स्यः [2]आर्तिम् [2]आऽरिष्यति [2]इति यो [2]हविर्वहति स मरणं [4]प्राप्नोतीति

१. मे–' गतम् ' नास्ति । २. लं–वसन्तीति । ३. ल हो–' वध्यासुः ' नास्ति । ४ तं१. त्रि.मे.ल,हो–म्रियने ।

१–१. क,ब,द१,ग२,हो१–हविर्वहनेन । २. द,हा,हो१–सः । ३ द,ग२,हो१–' हवि· ' नास्ति । ४. द,द१,ग२–प्राप्स्यतीति ।

तमन्वविन्दन् तमब्रुवन्नुप न आ वर्तस्व हृव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति परिधीन् परि दधाति रक्षसामपहत्यै

तम् । अन्विति । अविन्दन् । तम् । अब्रुवन् । उपेति । न । एति । वर्तस्व । हव्यम् । न । वह । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः-परिधि । स्कन्दात् । तत् । मे । भ्रातृणाम् । भागधेयमिति भाग-धेयम् । असत् । इति । तस्मात् । यत् । गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः-परिधि । स्कन्दति । तेषाम् । तत् । भागधेयमिति भाग-धेयम् । तान् । एव । तेन । प्रीणाति । परिधीनिति परि-धीन् । परीति । दधाति । रक्षसाम् । अपहत्या इत्यप-हत्यै ।

तमन्वविन्दन्नित्यादि ॥ गतम् । स्कन्दादिति । लेट्याडागमः । असदित्यडागमः । तस्मात् परिधानं कर्तव्य, रक्षसां च अपहत्यै भवति ॥

भीतः अग्निः निलायत यथा देवैर्न ज्ञायते तथा निलीनोऽभूत् । निलीय चोदकमध्ये प्राविशत् । तम् उद्दिश्य [5]देवताः प्रकर्षेणान्वेषणं कर्तुम् ऐच्छन् । तदा जलस्थितः मत्स्यः तत्र स्थितमग्निं देवानामग्रे अब्रवीत् । ततोऽग्निः तं मत्स्यमेवम् अशपत् – हे मत्स्य, यः त्वं देवानामग्रे मामेवं ज्ञापितवानसि पिशुनो भूत्वा [9]यद्वा–प्राब्रवीः, तादृशं त्वा [6]जालधारिणः कैवर्ताः [7]धियाधिया वध्यासुः, तेन तेन [8]जालादिना साधनेन, यदा यदा हन्तुं धीर्भवति तदा तदा रात्रावहनि वा वधं [10]कुर्वन्त्विति । यस्मादेवं शप्तः तस्मात् मत्स्यं तदा तदा घ्नन्ति । [11]मत्स्यमुखात् [12]विज्ञातवन्तो देवाः तम् अग्निं [13]प्रति [14]अस्मत्समीपं समागच्छ, हव्यं चास्मदीयं वह इति [15]अब्रुवन् । [16]तदा सः अग्निः [17]वरम् अवृणीत । स्रुचि गृहीतस्य [18]हविषः सम्बन्धि यत् एव द्रव्यं होमात् पुरा परिधिभ्यो बहिः प्रच्यवेत तत् अस्मदीयानां भ्रातृणां भागधेयम् अस्तु इति । ततस्तथैव देवैर्वरो दत्तः । [19]तेन स्कन्नेन [20]तान् अग्निभ्रातॄन् यजमानः [21]प्रीणाति ॥

परिधीनिति ॥ [21]इदानीं विधत्ते– 'परिधीन् परिदधाति रक्षसामपहत्यै' इति ॥ यस्मात् परिधिभ्यो बहिर्देशोऽग्नेर्भ्रातॄणामुपयुक्तस्तस्मात् परिधीन् [22]अग्नेः परितः स्थापयेत् । तत् [23]तु रक्षसाम् अपघाताय भवति ॥

५ श्र.देवा, आ ङ–'देवता' नास्ति । ६ हो१–जलचारिणः, अ इ उ जो पा हा–जले धारणार्थाः, ना–जाले धारिणः । ७ ङ१–धिया बुद्ध्या । ८ अ इ उ जो ना पा हा कालादिना ९ हो१–'यद्वा' नास्ति । १० अ इ उ जो ना पा हा–'इति' नास्ति । ११ आ क ना–मत्स्यमुखेन, अ इ उ जो पा हा–अन्यमुखेन । १२ आ क–विज्ञाते वह्नौ । १३ हा–'प्रति' नास्ति । १४ आ क–असत्समीपे । १५ आ–उक्ते । १६ आ–'तदा' नास्ति, क–तथा । १७ क–वरमवृणोत् । १८–१८ क–विगृहीतस्य । १९ अ इ उ पा–स्कन्नेन, जो हा–स्कन्दनेन, ना–अतः स्कन्नेन । २० आ क–प्रीणयति । २१ ङ श्र हो–'इदानीं' नास्ति । २२ ङ ङ१ हो१–वह्ने । २३ ङ१–च ।

सं॰ स्पर्शयति (२) रक्षसामनन्ववचाराय न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाᳬस्यपहन्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाᳬस्यप हन्ति यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै

---

समिति। स्पर्शयति (२)। रक्षसाम्। अनन्ववचारायेत्यनन्नु - अवचाराय। न। पुरस्तात्। परीति। दधाति। आदित्य। हि। एव। उद्यन्नित्युत् - यन्। पुरस्तात्। रक्षाᳬसि। अपहन्तीत्यप - हन्ति। ऊर्ध्वे इति। समिधाविति सम् - इधौ। एति। दधाति। उपरिष्टात्। एव। रक्षाᳬसि। अपेति। हन्ति। यजुषा। अन्याम्। तूष्णीम्। अन्याम्। मिथुनत्वायेति मिथुन - त्वाय। द्वे इति। एति। दधाति। द्विपादिति द्वि - पात्। यजमानः। प्रतिष्ठित्या इति प्रति - स्थित्यै।

---

संस्पर्शयतीत्यादि ॥ गतम् ॥

ऊर्ध्वे इत्यादि ॥ आघारविधिः। यजुषेति। "वीतिहोत्रं त्वा कवे" (तैस १·१·११) इति [५]दक्षिणाम्। यजुर्वेदाम्नानात् गायत्र्येव यजुरित्युच्यते। तेन विभिन्नलिङ्गद्वयसंयोगान्मिथुनत्वम्[६] ॥

---

समिति ॥ पश्चिमदिशि स्थापितस्य मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां संस्पर्शनं विधत्ते – 'सं॰ स्पर्शयति रक्षसामनन्ववचाराय' इति ॥ [२४]परिधीनां [२५]समीचीने स्पर्शे सति रक्षसां प्रवेष्टुं छिद्राभावादग्निसमीपे संचारो न भवति ॥

नेति ॥ दिक्त्रयदृष्टान्तेन पूर्वस्यामपि दिशि प्रसक्तं परिधिं वारयति – 'न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाᳬस्यपहन्ति' इति ॥ रक्षसामपघातः परिधेः प्रयोजनं, तच्चाऽऽदित्योदयेनैव सिद्ध्यति ॥

ऊर्ध्वे इति ॥ आग्नेय्यामैशान्यां चाऽऽघारसमिधोः स्थापनं विधत्ते – 'ऊर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाᳬस्यप हन्ति' इति ॥ दक्षिणोत्तरपरिध्योरग्रदेशे [२६]स्थापनीये ते[२६] 'ऊर्ध्वे'। तेन स्थापनेन दिक्चतुष्टय इवोर्ध्वदेशेऽपि रक्षसामपघातो भवति ॥

यजुषेति ॥ तयोर्दक्षिणसमिधः स्थापने मन्त्रकाण्डाम्नातं 'वीतिहोत्रं त्वा कवे' (तैसं १·१·११) इति मन्त्रं विधत्ते – 'यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय' इति ॥ स्त्रीपुरुषयोरिव समन्त्रकामन्त्रकयोः परस्परं वैलक्षण्यात् मिथुनत्वम् ॥

द्वे इति ॥ समिधो द्वित्वं प्रशंसति – 'द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै' इति ॥

---

५. लं.हो–दक्षिणा। ६. मै४–'मिथुनत्वम्' इत्यस्यानन्तरं 'द्वे इत्यादि गतम्'।

---

२४ इ इ१.ए.हो१–'परिधीना' नास्ति। २५. अ.इ.उ.जो.ना.पा.हा–'समीचीने' नास्ति। २६. इ१.ए–स्थापनीयत्वात्; क–स्थापनीये इति।

उपांशुयाजविधिः ]

ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां (३) पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वायाथो

---

ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सः । तु । वै । यजेत । यः । यज्ञस्य । आर्त्या । वसीयान् । स्यात् । इति । भूपतय इति भू पतये । स्वाहा । भुवनपतय इति भुवन पतये । स्वाहा । भूतानाम् (३) । पतये । स्वाहा । इति । स्कन्नम् । अन्विति । मन्त्रयेत । यज्ञस्य । एव । तत् । आर्त्या । यजमानः । वसीयान् । भवति । भूयसीः । हि । देवताः । प्रीणाति । जामि । वै । एतत् । यज्ञस्य । क्रियते । यत् । अन्वञ्चौ । पुरोडाशौ । उपांशुयाजमित्युपांशु याजम् । अन्तरा ।

---

ब्रह्मवादिन इत्यादि ॥ अनार्तावस्थाया वसुमत्तरोऽस्त्विति य कामयेत । गतमन्यत् । भूयसीरिति । अनार्तावस्थाया बहुतरा इति तेनार्तत्वमेव वरमिति ॥

जामि आलस्यजनकम् । अन्वञ्चौ अनुपूर्वौ अन्येनाव्यवहितौ यद्भवत पुरोडाशौ तस्मादाज्यहविरुपांशुयाज पौर्णमास्या मध्ये भवति पुरोडाशयो प्रधानमेव । पुरोडाशाज्यहविषो द्वयस्य विभिन्नरूपत्वात् मिथुनत्वम् ॥

---

ब्रह्मवादिन इति ॥ प्रायश्चित्तरूपेण स्कन्नानुमन्त्रण विधत्ते – 'ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्यां वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूताना पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्यां यजमानो वसीयान् भवति भूयसीर्हि देवता प्रीणाति' इति ॥ हविष स्कन्दने सति यज्ञस्य विनाशेन य यजमानो विनाशाभिमुखो भवति स कथ तत्परिहारेण वसुमत्तरो भवेत् इति ब्रह्मवादिभि पृष्टो बुद्धिमानुत्तर ब्रूते – त्रिभिरेतैर्मन्त्रै स्कन्नम् अनुमन्त्रयेत इति । भूपत्यादयो देवताविशेषा अग्निभ्रातरो वा, तेभ्य '[१९]स्वाहा' इति यदनुमन्त्रण तेन यज्ञस्य अपि आर्त्यो विनाश प्राप्य यजमान वसुमत्तर भवति । यस्मादग्र भूपत्यादिका भूयसी देवता प्रीणयति तस्माद्युक्त तस्य वसुमत्तरत्वम् ॥

जामीति । अथोपांशुयाज विधत्ते – 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वाय' इति ॥ यत् अन्वञ्चौ अनुक्रमगतावाग्नेयाग्नीषोमीयपुरोडाशौ स्यातामेतेन यज्ञस्य जामि आलस्य क्रियते । अत आलस्यपरिहाराय तयो पुरोडाशयोर्मध्ये उपांशुयाज यजेत् । किं च पुरोडाशद्रव्यक याग एक आज्यद्रव्यक याग अपर इति मिथुनत्वम् ॥

---

२७ अ इ उ पा ह्रो१ – 'भवति' नास्ति । २८ आ – प्रभवा° । २९–२९ ह ड१ ग्रं – स्वाहुतमिति । ३०–३० ड ड१ ग्रं – अनार्त्यो । ३१ क ड१ ग्रं ह्रो१ – अप्राप्य । ३२ ह१ – अनुक्रमगगन° । ३३ आ – आलस्याय । ३४–३४ आ – एको याग आज्यद्रव्यक ।

मिथुनत्वायाग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमु(४)पामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितृणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति

यजति । अजामित्वायेत्यजामि त्वाय । अथो इति । मिथुनत्वायेति मिथुन-त्वाय । अग्नि । अमुष्मिन् । लोके । आसीत् । यम । अस्मिन् । ते । देवा । अब्रुवन् । एति । इत । इमौ । वि । परीति । उह्याम । इति । अन्नाद्येनेत्यन्न अद्येन । देवा. । अग्निम् (४) । उपामन्त्रयन्तेत्युप-अमन्त्रयन्त । राज्येन । पितर । यमम् । तस्मात् । अग्नि । देवानाम् । अन्नाद इत्यन्न अद । यम । पितृणाम् । राजा । य । एवम् । वेद । प्रेति । राज्यम् । अन्नाद्यमित्यन्न-अद्यम् । आप्नोति । तस्मै । एतत् । भागधेयमिति भाग धेयम् । प्रेति । अयच्छन् । यत् । अग्नये । स्विष्टकृत इति स्विष्ट कृते । अवद्यन्तीत्यव द्यन्ति । यत् । अग्नये । स्विष्टकृत इति स्विष्ट-कृते । अवद्यतीत्यव-द्यति । भागधेयेनेति भाग धेयेन । एव । तत् । रुद्रम् । समिति । अर्धयति ।

अग्निरमुष्मिन् लोके इत्यादि ॥ [v]अमुष्मिन् पितृलोके । व्याख्यातमन्यत् । अन्नाद्येनेति । [s]गतम् । एवंवेदिता [v]राज्यम् [s]अन्नाद्य च [v]प्राप्नोति ॥

तस्मा एतदित्यादि ॥ शोभनमिष्ट करोतीति स्विष्टकृन्नामा [s]प्रकृतादग्ने प्रशस्तो योऽन्योऽग्नि तस्मात् तदीयेनैवावदानेन [v]रुद्रम् [v]एव भागसमृद्ध करोति, तस्य रुद्रात्मकत्वात् ॥

अग्निरिति ॥ अथ स्विष्टकृत विधत्ते– अग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त राज्येन पितरो यम तस्मादग्निर्देवानामन्नादो यम पितृणाꣳ राजा य एव वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेय प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति ' इति । पुरा कदाचित् 'अग्नि स्वर्गे स्थित, 'यम तु भूलोके तदा मनुष्याणां पाकादिनिष्पादनाभावात् पितृणा राजाभावाच्चाग्नियमयोर्विपरिवर्तन '[s]कर्तुमिच्छन्त 'देवा आगच्छतेति परस्परमाहूय 'अन्नाद्येन उत्कोचेन ''तम् 'अग्नि'' भूलोके ''समागन्तुमुपच्छन्दितवन्त । 'पितर तु 'राज्येन उत्कोचेन 'यम स्वर्गलोके '[s]गन्तु प्रलोभितवन्त । यस्मादेवं 'तस्मात् 'देवाना मध्ये '''अग्नि 'अन्नाद '' मद्धक्षभक्षकोऽभूत् । 'यम च 'पितृणां 'राजा अभूत् । 'य एतदुभय 'वेद स ''प्रकृष्टराज्यम् 'अन्नाद्य च 'प्राप्नोति । ता' देवा 'तस्मै अग्नये भागं दत्तवन्त । कोऽसौ भाग ! यजमाना 'अग्नये 'स्विष्टकृते 'यत् हवि 'अवद्यन्ति सोऽस्य भाग । तस्मादग्नये स्विष्टकृतेऽवद्येत् । तथा सति ''तत् 'अग्नये दत्तेन'' भागेन 'रुद्र क्रूरमग्नि समृद्ध करोति ॥

७ हो–गदितम् । ८ हो–'प्रकृतादग्ने ' नास्ति ।

३५ आ–कर्तुमिच्छायन्त । ३६–३६ यद्दिम् । ३७ अ इ उ जो ना पा हा–समानेतुमिच्छन्यन्त । ३८ ना हा–नेतु । ३९–३९ दा हो१–यद्दि । ४० दा ग्र.हो१–प्रभूतराज्यम् । ४१–४१. क–तदग्नय दैर्देत्तेन, दा ग्र.हो१–देवैर्दत्तेन ।

सकृत्सकृदवं द्यति सकृदिव हि रुद्र उत्तरार्धादवं द्यत्येषा वै रुद्रस्य (५) दिक् स्वायामेव दिशि रुद्रं निरवदयते द्विरभि घारयति चतुरवत्तस्याऽऽप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥(६)॥

[ शान्तः स्पर्शयति भूतानामग्निः* रुद्रस्य सप्तत्रिंशच्च । ]

सकृत्सकृदिति सकृत्-सकृत् । अवेति । द्यति । सकृत् । इव । हि । रुद्र । उत्तरार्धादित्युत्तर अर्धात् । अवेति । द्यति । एषा । वै । रुद्रस्य (५) । दिक् । स्वायाम् । एव । दिशि । रुद्रम् । निरवदयत इति निः -अवदयते । द्विः । अभीति । घारयति । चतुरवत्तस्येति चतुः -अवत्तस्य । आप्त्यै । पशवः । वै । पूर्वाः । आहुतय इत्या-हुतय । एष । रुद्र । यत् । अग्नि । यत् । पूर्वाः । आहुतीरित्या-हुतीः । अभीति । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशु । यजमान । स्यात् । अतिहायेत्यति हाय । पूर्वाः । आहुतीरित्या हुतीः । जुहोति । पशूनाम् । गोपीथाय ॥ (६) ॥

[ मैस ३ ८ ६; कास २५ ७, कपिस ३९ ५, शब्रा १ २ ३ १, ३ ३ १३-१७, ६ ३ २७, २८ ७ ३ २० ]

सकृत्सकृदिति ॥ एकवारमेकवारं सर्वेषु । "एकस्य सकृच्च" (५ ४ १९) इति निपात्यते । सकृदिवेति । [1]अनावृत्त्यादिसामान्यत्वात् तुल्योत्कर्षरहिते पदे स्थितत्वात् । एषेति । उद्गततरा उत्तरा, [10]अण्डाकरणैरप्यनावृतत्वात् । [4]निरवदयते इति निष्कृष्य देवतान्तरेभ्यो व्यावृत्त भागेन तर्पयति । द्विरित्यादि । गतम् ॥

पशवो वा इत्यादि ॥ अभिहोम उपरि होम । अतिहाय होम अतिलङ्घ्य होम ॥

इति द्वितीये षष्ठे षष्ठोऽनुवाकः ॥

सकृत्सकृदिति ॥ यदुक्तं सूत्रकारेण - "सर्वेषां [42]हविषा उत्तरार्धात् [43]सकृत्सकृत् [44]स्विष्टकृतेऽवद्यति" (आपश्रौ २ २० ३) इति, तदेतद्विधत्ते- 'सकृत्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्र निरवदयते' इति । 'एक एव रुद्र' (तैस १ ८ ६) इति श्रुत्यन्तरात् सकृदवदानसदृश [45]रुद्र । येयमैशानी [45]सैव [45]एषा [45]रुद्रस्य [45]दिक् । सा चोत्तरभागवर्तिनी । [46]तस्मात् [46]उत्तरार्धात् अवदानेन स्वकीयायामेव [46]दिशि [46]रुद्र नि शेषेण तोषयति ॥

द्विरिति ॥ इतरहविषामिव सकृदभिघारण प्राप्तमपवदति- 'द्विरभिघारयति चतुरवत्तस्याऽऽप्त्यै' इति ॥ उपस्तरणमेक हविरवदान द्वितीय [47]'द्वि' अभिघारण चान्तत इति चतुरवत्त सपद्यते [47]॥

१ भि-अनावृत्ति°, ल-अनावृत्तादि° मैं४-अनावृत्तात्मादि°, प२-°सामान्यात् । १० मैं४-साङ्गाचरणै ।

४२ इ ना-'हविषा' नास्ति । ४३ हा-सकृत् । ४४ आ-अवद्यति स्विष्टकृते । ४५ इ१ हो१-सा । ४६ इ क ओ ना हा-°दुत्तरार्धावदानेन । ४७-४७ क ङ इ१ ग्र हो१-ततो द्विरभिघारणेन चतुरवत्तसपत्ति ।

'यत्किंचित् प्राजापत्यं यज्ञे [87]क्रियते, उपांश्वेव[87] तत् क्रियते' इति [88]वचनादुपांशुत्वधर्मसाम्येन प्रजापतिर्देवतेति चेन्न। "प्रजापतिं मनसा ध्यायेत्" ( द्र तैसं २ ५ ११) इति विधेस्तूष्णींभावस्यैव प्रजापतिधर्मत्वात्। प्रथमयागदेवत्वेन मुख्यत्वादग्निर्देवतेति चेत्। न। [89]तदुपांशुयाजक्रमेऽग्निविषययाज्याद्य पाठात्। 'तावनूताम्' इत्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति चेन्न। तस्य वाक्यस्य [90]पौर्णमासी कालविधायकत्वात्। कस्यांचिच्छाखायामुपांशुयाजक्रमे वैष्णवयाज्यापुरोनुवाक्ययोः पाठाद्विष्णुर्देवतेति चेन्न। तथा सति [91]शाखान्तरप्रोक्तयोः [92]प्राजापत्ययाज्यापुरोनुवाक्ययोर्बाधः [93]प्रसज्येत। [94]तस्मान्नानाशाखासु [95]पठिताभ्यां [96]विष्णुप्रजापत्यग्नीषोमविषयाभ्यां याज्यापुरोनुवाक्याभ्यां प्राप्तास्तिस्रो देवता [97]विकल्प्यन्ते। अत [98]एवोपांशुयाजविधिशेषेऽर्थवादेऽप्येवदेव प्राप्तं देवतात्रयमनूद्यते – 'विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। तस्मात् [99]देवताविकल्प सिद्धान्तः॥

तत्रैवान्यच्चिन्तितम् –

"[100]दर्शादर्शावस्य कालो दर्श एवाग्य एव वा।
द्विपुरोडाशसांनिध्यादाद्यो [101]दर्शं प्रकृत्य तु[101]॥
[102]विष्णुयाज्योक्तितः [103]पक्षो मध्यमः पूर्णिमाविधेः।
स एव कालो याज्याया उत्कर्षे पूर्णिमादिने' ॥ (जन्या १० ८ ३६ ३७)॥

"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय (तैसं २ ६ ६) इति पुरोडाशयोर्मध्ये [104]असौ यागो विहितः। पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ। अमावास्यायामाग्नेयैन्द्राग्नौ। ततो द्विपुरोडाशसंनिधेः समानत्वाद्दर्शः पूर्णिमा चेत्युभयमपि तस्योपांशुयाजस्य काल इत्याद्यः पक्षः। अमावास्यां प्रकृत्य याज्याकाण्डे आग्नेययाज्याया ऊर्ध्वमैन्द्राग्नयाज्याया अधस्तात् वैष्णवयाज्याया पाठात् प्रकरणस्य संनिधितः प्रबलत्वाद्दर्श एव काल इति मध्यमः पक्षः। "तावब्रूतामग्नीषोमावाज्यस्यैव[105] तावुपांशु पौर्णमास्यां यजन्' इति पौर्णमास्यास्तत्कालत्वेन विधानाद्वाचनिकस्य[106] च विधेः प्रबलत्वात् पौर्णमास्येव कालः। तथा सति वैष्णवयाज्या प्रकरणादुत्कृष्यताम्॥

तत्रैवान्यच्चिन्तितम् –

'पुरोडाशैक्ययुक्ताया पौर्णमास्यामयं न हि।
स्याद्वा नास्त्यन्तरेत्युक्ते [107]लक्ष्ये कालेऽस्ति[107] शष्कुलवत्" ॥ (जैन्या १० ८ ३८)॥

सोमात् प्रागग्नीषोमीयपुरोडाशरहिता, केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति। 'स

---

८७-८७ अ इ उ पा श्रूयते उपांशु च, हो१– क्रियत उपांश्वेव। ८८ इ–°पांशुत्व साम्येन अ उ ड ह१ पा ग्र हो१–°पांशुत्वसाम्येन। ८९. ना–उपांशु°। ९० अ इ पा–पौर्णमासकाल°। ९१ हा–°शाखान्तरे प्रोक्त। ९२ ड१–प्राजापत्ययो याज्या°, अ इ ना पा हा–°याज्यानु°, श्रो– °याज्यावाक्य°। ९३ ड–प्रसज्यते। ९४ ड१–तस्मिन्नानाशाखानु°। ९५ अ इ पा–पाठात् ९६ अ इ ड जो ना पा हा–विष्णुप्रजा°, ड हो१ भृ–विष्णुप्राजापत्यग्नीषोमविषय°। ९७ ड१–विकल्प्यन्ते। ९८ हा–°शेषेऽप्यर्थ°। ९९ अ इ जो ना पा हा–देवताविषय। ९७ ड दर्शादिर्वा तस्य। १०१–१०१ आ क खा ना–दर्शेऽग्नितोऽग्रत, अ इ पा–दर्शे प्रकृत्य तु हा–दर्शाऽग्नितो ऽग्रत। १०२ अ इ जो पा हा–°याज्योक्तितः। १०३ अ क जो ना हा–युक्तो। १०४ ड१–स। १०५ अ खा ना पा–°याज्यस्य हो१–°ध्याय्यमाग्नेयैव। १०६ ड१–'च' नास्ति। १०७–१०७ हा१– लक्ष्यकालोऽस्ति, भृ–लक्ष्ये कालोऽस्ति।

युक्तमिति प्राप्ते ब्रूमः– कर्मण एकत्वेऽप्यंशभेदात् प्रयोजनभेदो न विरुध्यते। मन्त्रपाठो द्रव्यप्रक्षेपो देवतोद्देशेन त्यागश्चेति त्रयोंऽशाः। तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते। तस्मात् स्विष्टकृत उभयार्थः। [१३५]एवमन्त्यप्रयाजपशुपुरोडाशावप्युदाहार्यौ।

[१३६]तत्रैवान्यच्चिन्तितम्–

" प्रयोजकः स्विष्टकृत् किं पुरोडाशोत्तरार्धयोः।
यद्वा [१३७–]प्रयुक्तोपजीवी स्यादाद्यः [–१३७] स्वस्य सिद्धये॥
उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति।
[१३८]अग्न्याद्यर्थं पुरोडाशमुपजीव्यैष [१३९]वर्तताम् " ॥ (जैन्या ४·१·२६-२७)॥

दर्शपूर्णमासयोः श्रूयते– " उत्तरार्धात् स्विष्टकृते समवद्यति " (द्र.आपश्रौ २·२०·३)इति। सोऽयं स्विष्टकृद्यागः कस्यचित् [१४०]नूतनस्य पुरोडाशस्य तदुत्तरार्धस्य [१४१]च प्रयोजकः। तदुभयाभावे [१४२]स्वसिद्ध्यभावादिति चेत्। मैवम्। उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वाद्भागवाचित्वाच्च प्रकृतं कंचिद्भागिनमाकाङ्क्षतः। [१४३]अग्न्यादिदेवतार्थः पुरोडाशः प्रकृतो भागवांश्च। तस्मात् तमेवोपजीव्य स्विष्टकृद्यागः प्रवर्तते न त्वन्यस्य प्रयोजकः॥

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्–

" [१४४–]शेषात् स्विष्टकृदेकस्मात् सर्वेभ्यो वैकतः [१४५]कृतौ।
[१४६]शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः [१४७]संस्कारसाम्यतः " ॥ (जैन्या ३·४·३५ )॥

दर्शपूर्णमासयोः श्रूयते[–१४४]– " शेषात् स्विष्टकृते समवद्यति " इति। तत्राऽऽग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यं, तावतैव [१४८]शास्त्रानुष्ठानसिद्धेरिति चेत्। मैवम्। उपयुक्तं हविः संस्कर्तुम् [१४९]इदम् अवदीयते। संस्कारश्च सर्वेष्वपि हविःषु समानः। तस्मात् सर्वेभ्यो हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः॥

---

१३५. अ.इ.उ.पा–एवमस्य प्रयोजने। पशुपुरोडाशावप्युदाहरणं। १३६. क–अत्रै°। १३७–१३७. अ.पा–प्रयुक्तो यजतिः स्यादाद्यस्तस्य; इ–प्रयुक्तो यजतिः स्यादाद्यतनस्य (?), ड–प्रयुक्तोपजीवि स्यादा°; क–प्रकृतोपजीवी°। १३८. अ–अर्धाद्यर्थं°। १३९. अ–वर्तनम्; इ–वर्तते। १४०. अ.इ.उ.पा–'नूतनस्य' नास्ति। १४१. ड–'च' नास्ति। १४२. ग्रं.हो१–सिध्यभा°। १४३. अ.इ.उ.पा–°देवताकः। १४४–१४४. 'शेषात्......श्रूयते' नास्ति। १४५. अ क जो.ड.ना–कृते। १४६. ड१–°सिद्धेः। १४७. ड१–संस्कार्यसाम्यतः। १४८. आ क ड१.ग्रं.हो१–शास्त्रार्थानु°। १४९. अ.इ उ. जो.ना.पा.हा–'इदम्' नास्ति।

## मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूता

मनुः । पृथिव्या । यज्ञियम् । ऐच्छत । सः । घृतम् । निषिक्तमिति नि सिक्तम् । अविन्दत् । सः । अब्रवीत् । कः । अस्य । ईश्वरः । यज्ञे । अपि । कर्तोः । इति । तौ । अब्रूताम् ।

अतः परं चत्वारोऽनुवाका इष्टिहोत्रब्राह्मणम् । मनुः पृथिव्या इत्यादि ॥ इडोपाह्वानविधिः । यज्ञार्हमन्विच्छत् । पृथिव्याः निषिक्तं घृतं लब्धवान् उपलब्धवान् । वृष्टिरूपाया इडाया कार्यं

उपांशुयाजः षष्ठेऽस्मिन् स्विष्टकृच्च समीरितः ।
आध्वर्यवं समाप्याथ हौत्रदोषो निरूप्यते ॥

तत्रास्मिन् [1]सप्तमानुवाके इडोपाह्वानविधिस्तन्मन्त्रव्याख्यानं च प्रस्तूयते । मन्त्रास्तु मन्त्रकाण्डे [2]एव समाम्नाताः – "उपहूतꣳ रथन्तरꣳ सह पृथिव्या । उप मा रथन्तरꣳ सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यꣳ सहान्तरिक्षेण । उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहत्सह दिवा । उप मा बृहत्सह दिवा ह्वयताम् । उपहूताः सप्त होत्राः । उप मा सप्त होत्रा ह्वयन्ताम् । उपहूता धेनुः सहर्षभा । उप मा धेनुः सहर्षभा ह्वयताम् । उपहूतो भक्षः सखा । उप मा भक्षः सखा ह्वयताम् । उपहूताꣳ३ हो । इडोपहूता । उपहूतेडा । उपो अस्माꣳ इडा ह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्म देवकृतमुपहूतम् । दैव्या अध्वर्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपतिं वर्धान् । उपहूते द्यावापृथिवी । पूर्वजे ऋतावरी । देवी देवपुत्रे । उपहूतोऽयं यजमानः । उत्तरस्यां देवयज्यायामुपहूतः । भूयसि हविष्करण उपहूतः । दिव्ये धामन्नुपहूतः । इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः । विश्वमस्य प्रियमुपहूतम् । विश्वस्य प्रियस्योपहूतस्योपहूतः" (तैब्रा ३ ५ ८) इति ॥

[3]एतद्विनियोगं बौधायनो दर्शयति– 'उक्ता इडाया जपास्तानुपांश्वुक्त्वोच्चैरुपह्वयत उपहूतेडेति प्रतीचीमिडोपहूतेति पराचीम्" इति । अस्यायमर्थः – गोशरीररूपाया इडाया देव्या आपा वेदे स्पष्टं प्रोक्ता – 'उपहूतꣳ रथन्तरम्' (तैब्रा ३ ५ ८) इत्येवमारभ्य 'उपहूताꣳ३ हो' (तैब्रा ३ ५ ८) इत्येवमन्ताः । तान् मन्त्रानुपांशु जपेत् । ततः ऊर्ध्वम् 'इडोपहूता' (तैब्रा ३ ५ ८) इत्यादिकमुच्चैः पठेत् । उपहूतशब्दस्य [4]प्रथमप्रयोगेणेडा प्रतीची सम्मुखा भवति । पश्चात्प्रयोगेण पराची विमुखा [5] इत्युच्यत इति ॥

**मनुरिति** ॥ [6]तानेतान् मन्त्रान् व्याचिख्यासुरादाविडाजन्मप्रकारं दर्शयति 'मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्म' इति ॥ पुरा कदाचित् [7]मनुः [8]पृथिव्या उपरि [9]यज्ञार्हं किं द्रव्यमस्तीति

१ तꣳ ल हो–इष्टिरूपाया ।

१ अ इ उ क ड जो ना पा हा हो१–सप्तमेऽनु° । २ ड–एवम् । ३ ड१–एव विनि° । ४, ३० क–°मादय , ड ड१ ञ्,हो१–इत्यादय । ५–५ आ क–प्रथमप्रयोगेऽपीडा प्रतीचीनमुखा भवति, चरमप्रयोगे पराचीनमुखा । ६ ड–'एतान्' नास्ति । ७ आ क जो ना हा–यज्ञार्यं ।

मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गां समैरयताꣳ सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते

मित्रावरुणाविति मित्रा वरुणौ । गोः । एव । आवम् । ईश्वरौ । कर्तोः । स्वः । इति । तौ । ततः । गाम् । समिति । ऐरयताम् । सा । यत्रयत्रेति यत्र यत्र । न्यक्रामदिति नि अक्रामत् । ततः । घृतम् । अपीडयत । तस्मात् । घृतपदीति घृत पदी । उच्यते ।

दृष्टवान् । उक्तं च 'वृष्टिर्वा इडा' (तैसं १ ७ २) इति । अथ अब्रवीत् प्रजापतिः कः अस्य घृतस्य यज्ञे अपि साधनभावं कर्तुम् ईश्वरः स्यात् । "ईश्वरे तोसुन्कसुनौ" (पा ३ ४ १३) । अथ मित्रावरुणौ अब्रूताम् गोः एव यज्ञे साधनभावं कर्तुम् आवम् ईश्वरौ स्वः न कार्यभूतस्य घृतस्य इति । अत्रापीडाया गोः शरीरत्वादिडैव गौरुच्यते । यथोक्तं— "शरीरं वा अस्यैतदुपाह्वया" (तैसं १ ७ २) इति । अथैवमुक्तवन्तौ मित्रावरुणौ गां गोशरीरां वृष्ट्यात्मिकामिडाम् समैरयतां यज्ञसाधनत्वेनागमयताम् । सा च यत्रयत्र न्यक्रामत् निर्गत्यापतत्, गोपक्षे निमित्त (?) क्रामति स्म, ततः घृतम् अपीड्यत उत्पद्यते । यस्मादुदकं तस्मात् घृतपदी इति उच्यते वृष्टिद्वारेण घृतहेतुत्वात्, गोरूपेण वा घृतस्यैव हेतुत्वात् । तत् अस्या इडाया जन्म यदिहोपह्वयते । घृतं पादेषु यस्याः सा घृतपदी । "कुम्भपदीषु च" (पा ५ ४ १३९) इति पादस्य लोपः, "पादोऽन्यतरस्याम्" (पा ४ १ ८) इति ङीप्, "पादः पत्" (पा ६ ४ १३०) इति पद्भावः । एवं मनुना प्रथममुपलब्धत्वात् इडा मानवी । पदात् घृतपीडनात् घृतपदी । मित्रावरुणाभ्यां समीरितत्वान्मैत्रावरुणी ॥

सर्वत्रान्वेषणमकरोत् । अन्विष्य च तत्र गोः पादाङ्कितेषु भूप्रदेशेषु निषिक्तं घृतं लब्धवान् । लब्ध्वा च दयानामग्रे स एवम् अब्रवीत्— "अस्य गोपदेषु स्थितस्य घृतस्य स्वरूपं यथा लौकिकभोजनादौ उपयुक्तं तथा यज्ञे अपि उपयुक्तं कर्तुं कः समर्थः" इति । तच्छ्रुत्वा तत्र स्थितौ मित्रावरुणौ मनुं प्रति अब्रूताम्— "किमनेन कार्यभूतेन घृतेन? तत्कारणभूताया गोः एव यज्ञाङ्गभावं कर्तुमावां समर्थौ स्व" इति । एवमुक्त्वा तौ ततः ऊर्ध्वं स्वर्गस्थामिडारूपां गां भूमौ समैरयतां समानयताम् । सा च गौर्भूमौ यत्रयत्र नितरां पादं प्रक्षिप्तवती तत्रतत्र गोपदाङ्किते भूप्रदेशे घृतं निष्पीडितमासीत् । यस्मादस्या

२ तै२ ह्रो–अलम् । ३ तै३ ह्रो–'स्व' नास्ति । ४-४ तै३ –इडायागे । ५ तै३–गौरित्युच्यते । ६-६ तै३–अस्यैव तामुपाह्वयथा । ७-७ मै४–गोशरीरात्मिकाम् । ८ त्रि–न्यगगमयत्, मै४–न्यगमत्, तै–न्यगमपतत् (!) तै३–न्यगमपतत् (!) । ९-९. तै३–घृतवत्युच्यते । १०. ह्रो–वृष्टिचारिणेण । ११ मै–'एव' नास्ति ।

८-८ आ–भग्या गो पदेषु । ९ आ–°भोजनादिषु । १०. ड द१ ख२ ह्रो–यज्ञेऽपि° । ११ आ द्रा–कि गो । १२ ड द१ ख२ ह्रो१–यज्ञाङ्गभागं । १३ आ–तामिडारूपां । १४ ड द१–भूदेशे । १५ द्रा–भर्त्रा गो यस्मादस्याः, भ१ ३ जो पा द्रा–भर्त्रियतायस्मादस्या ।

तदस्यै जन्मोपहूतꣳ रथंतरꣳ सह पृथिव्येत्याहेयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयत उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयत उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयत

तत् । अस्यै । जन्म । उपहूतमित्युप-हूतम् । रथंतरमिति रथ-तरम् । सह । पृथिव्या । इति । आह (१) । इयम् । वै । रथंतरमिति रथ-तरम् । इमाम् । एव । सह । अन्नाद्येनेत्यन्न-अद्येन । उपेति । ह्वयते । उपहूतमित्युप-हूतम् । वामदेव्यमिति वाम-देव्यम् । सह । अन्तरिक्षेण । इति । आह । पशवः । वै । वामदेव्यमिति वाम-देव्यम् । पशून् । एव । सह । अन्तरिक्षेण । उपेति । ह्वयते । उपहूतमित्युप-हूतम् । बृहत् । सह । दिवा । इति । आह । ऐरम् । वै । बृहत् । इराम् । एव । सह । दिवा । उपेति । ह्वयते ।

'उपहूत रथन्तरम्' इत्यादिना इडोपाह्वानमन्त्र व्याचष्टे । इय वा इति ॥ रथ-तर साम । दु स्तरणहेतुत्वात् [v]इय पृथिवी [v]रथन्तरम् । अन्नाद्येनेति । पृथिवीशब्देन पृथिवीविकारोऽन्नमुच्यते । तस्मात् [v]अन्नाद्येन पृथिवीम् [v]उपह्वयते । आत्मसमीपे करोति *विधेया करोति । "निसमुपविभ्यो ह्वः" (पा १·३·३०) इत्यात्मनेपदम् ॥

पशवो वा इति ॥ वननीयस्वभावत्वात् ॥

ऐरमिति ॥ इरा वृष्टि तत्र भव सारम् 'ऐरं तेन वृष्टिर्लक्ष्यते । दिवो वृष्टिं प्रवर्तयति ॥

पादेभ्यो घृतं निर्गतमासीत् 'तस्मात् इयं 'घृतपदी 'इति प्रसिद्धाऽभूत् । [१६]तत् एवमस्या इडाया यज्ञभूमौ 'जन्म सपन्नम् ॥

उपहूतमिति ॥ अथ मन्त्रं व्याचष्टे– 'उपहूतꣳ रथन्तरꣳ सह पृथिव्येत्याहेयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयते' इति ॥ यत् 'रथंतर साम, तत् 'पृथिव्या. 'सह मया 'उपहूतं समीपे यथा तिष्ठति तथाऽऽह्वानं कृतमित्यर्थः । [१७]"एतस्मिन् मन्त्रवाक्ये[१७]" रथंतरशब्देन भूमिरुपलक्ष्यते । यथा षट्सु [१८]"पृष्ठस्तोत्रसामसु रथन्तरम् [१९]आद्यं तथा त्रिषु लोकेषु भूमिराद्या । मन्त्रगतेन पृथिवीशब्देन तत्कार्यमन्नाद्यमुपलक्ष्यते । तथा सति 'अन्नाद्येन 'सह [२०]"भूमिरुपहूतेत्येष· मन्त्रवाक्यस्यार्थः । एवमुत्तरेऽपि मन्त्रा अनूद्य व्याख्यायन्ते ॥

उपहूतमिति ॥ तत्र सामविशेषवाचिना वामदेव्यशब्देन तत्साममाध्या. पशव उपलक्ष्यन्ते, [२१]तदेतद्दर्शयति – 'उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयते' इति ॥

उपहूतमिति ॥ इराशब्दवाच्या [२२]"वृष्टिस्तत्सबन्धि बृहत्सामैरं [२३]"वृष्टेः [२४]"बृहत्साममाध्यत्वादित्येयमर्थं दर्शयति – 'उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयते' इति ॥

१६. आ–'तत्' नास्ति । १७-१७ आ–एतन्मन्त्रगत° । १८ आ हा–पृष्ठस्तोत्रेषु । १९. आ–सामाऽऽद्य । २०. आ हा–°तेत्येवं । २१. ड, ड१–इत्येतत् । २२. क–पुष्टिस्त° । २३. क–पुष्टे । २४. ड१–°माध्यता इत्येत° ।

उप॑हूताः स॒प्त होत्रा॒ इत्या॑ह॒ होत्रा॑ ए॒वोप॑ ह्वयत॒ उप॑हूता धे॒नुः (२) स॒हर्ष॒भेत्या॑ह मिथु॒नमे॒वोप॑ ह्वयत॒ उप॑हूतो भ॒क्षः सखेत्या॑ह सोमपी॒थमे॒वोप॑ ह्वयत॒ उप॑हूता३ँ हो इत्या॑हा॒ऽऽत्मान॑मे॒वोप॑ ह्वयत

---

उप॑हूता॒ इत्युप॑-हू॒ता॒ । स॒प्त । होत्राः॑ । इति॑ । आ॒ह॒ । होत्राः॑ । ए॒व । उपेति॑ । ह्वय॒ते॒ । उप॑हू॒तेत्युप॑-हू॒ता॒ । धे॒नुः (२) । स॒हर्ष॒भेति॑ स॒ह-ऋ॒ष॒भा॒ । इति॑ । आ॒ह॒ । मि॒थु॒नम् । ए॒व । उपेति॑ । ह्वय॒ते॒ । उप॑हू॒त॒ इत्युप॑ हू॒त॒ । भ॒क्ष । सखा॑ । इति॑ । आ॒ह॒ । सो॒म॒पी॒थमिति॑ सोम पी॒थम् । ए॒व । उपेति॑ । ह्वय॒ते॒ । उप॑हूता३म् इत्युप॑-हू॒ता३म् । हो इति॑ । इति॑ । आ॒ह॒ । आ॒त्मान॑म् । ए॒व । उपेति॑ । ह्वय॒ते॒ ।

---

[२३]-होतृकान् पुनर्यागेषु प्रवर्तयन्ति[२३] ॥

मिथुनमिति ॥ उपलक्षणत्वात् सर्वमिथुनाना प्रजनयितारमात्मान करोति* ॥

सोमपीथमिति ॥ भक्ष्यत इति [v]भक्ष सोम [v]सखा समानख्यान तस्य पान पुन पुन प्रवर्तयति ॥

आत्मानमिति ॥ [v]हो इत्यात्मोच्यते, हे आत्मन्, उपहूत त्वमत्रोपहूत इति भाव । मम आत्मेतिवत् भेद उपचर्यते । आह्वाने प्लुत । "अणोऽप्रगृह्यस्य" (पा ८ ४·५७) इत्यनुनासिक । न ह्यात्मनोऽभिरक्षिताऽग्न्यादिरुपहूयते ॥

---

आश्वलायनेन ये होत्रका दर्शिताः –"होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्च[२५]" (द्र. आश्वश्रौ ४·१·६ ) इति, तदुपाह्वानपरत्वं दर्शयति – 'उपहूता. सप्त होत्रा इत्याह होत्रा एवोप ह्वयते ' इति ॥

उपहूतेति ॥ 'सहर्षभा' इति पदेन सूचितमर्थं दर्शयति - 'उपहूता धेनुः सहर्षभेत्याह मिथुनमेवोप ह्वयते ' इति ॥

उपहूत इति ॥ 'भक्षः सखा' इत्यनेन [२६]स्वोपकारकसोमपानमुपलक्ष्यत इति दर्शयति – 'उपहूतो भक्षः सखेत्याह सोमपीथमेवोप ह्वयते ' इति ॥

उपहूतामिति ॥ 'हो' शब्दः [२७]प्रयोक्तृस्वरूपवाचीत्येतद्दर्शयति– 'उपहूतां३ हो इत्याहाऽऽत्मानमेवोप ह्वयते ' इति ॥ [२८]-उपहूतशब्दे रङ्गप्लुतिर्दूरादाह्वानस्य घटनेनाऽऽदरार्था[२८] ॥

---

*-* लं-'विधेया करोति ........ आत्मानं करोति' नास्ति । [२३]-[२३]. मै४-होतृकाः पुन.पुनर्यागेषु प्रवर्तयति ।

---

[२५]. आ-'च' नास्ति । [२६]. क.ड ह१.गै.हो१-सोपकारकं सोम° । [२७] आ-प्रयुक्तः स्वरूप° । [२८]-[२८] प-उपहूतशब्दाद्रङ्गप्लुति. दूरा°, अ ड.उ.लो प-°शब्दे रङ्गप्लुति दूरादाह्वानस्याऽऽदरार्था, ना-°शब्दे रङ्गप्लुतिः दूरादाह्वानस्यास्याऽऽदरार्था, हा-°शब्दे रङ्गप्लुति दूरादाह्वानस्याऽऽदरार्था ।

आत्मा ह्युपहूतानां वसिष्ठ इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येताम (३) ग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाᳲसमैरयतां

आत्मा । हि । उपहूतानामित्युप-हूतानाम् । वसिष्ठ । इडाम् । उपेति । ह्वयते । पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते । चतुः । उपेति । ह्वयते । चतुष्पाद इति चतुः -पाद । हि । पशवः । मानवी । इति । आह । मनुः । हि । एताम् (३) । अग्रे । अपश्यत् । घृतपदीति घृत -पदी । इति । आह । यत् । एव । अस्यै । पदात् । घृतम् । अपीड्यत । तस्मात् । एवम् । आह । मैत्रावरुणीति मैत्रा वरुणी । इति । आह । मित्रावरुणाविति मित्रा वरुणौ । हि । एनाम् । समैरयतामिति सम् -ऐरयताम् ।

तत्र आत्मन आह्वानेन कोऽर्थ आत्मनस्तत्राह– 'आत्मा हि ' इति ॥ अन्नादिषु मध्ये आत्मा वासयितृतम तस्मादात्माऽप्युपहूयते इति ॥ यद्वा– तस्मादिति । उच्चै उपहूत इति । "दूराद्धूते च" (पा ८ २ ८४) इति प्लुतस्यैव व्याख्या 'इडामुप ह्वयते ' इति । वृष्टिरन्न पशव देवता वा इडाद्रव्याभिमानिनी, ताम् उपाह्वयते । 'इडोपहूता ' इत्यस्यार्थोऽनेन व्याख्यात, 'उपहूतेडा ' इति च, स एवार्थ । बहुकृत्वो वचनमादरार्थम् । यथोक्तम्– 'अभ्यासेन

आत्मेति ॥ आत्मन उपह्वाने प्रयोजन दर्शयति– 'आत्मा ह्युपहूताना वसिष्ठ ' इति ॥ यस्मादिह [29]उपहूताना रथन्तरपृथिव्यादीना 'भक्ष. सखा' [30]इत्येवमन्तानामुपवासयितृतम आत्मा, [31]तदधीनत्वादितरोपह्वानस्य, [32]तस्मादात्मनोऽप्युपह्वानं कर्तव्यम् ॥

इडामिति ॥ 'इडोपहूता ' इत्यारभ्य 'मानवी ' इत्येतस्मात् प्राचीनस्य वाक्यसमूहस्य तात्पर्यं दर्शयति – 'इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशव ' इति ॥ इडाशब्देन गोशरीरधारिणी देवतोच्यते । तस्या उपह्वानम् 'इडोपहूता ' [33]इत्यादिवाक्ये कुर्यात् । इडाया पशुरूपत्वात् तदुपह्वानेन पशुप्राप्तिर्भवति । आरोहावरोहरूपयोर्वाक्ययोर्द्विरावृत्तत्वाच्चतुर्वारमुपह्वान संपद्यते । पशूना [34]चतुष्पदत्वादेतदुपपन्नम् । [35]तयोरावृत्त्यो मध्ये सेयमिडाऽस्मानुपह्वयताम् इत्येतदिडादेवताया प्रार्थना स्वस्मिन् देवतानुग्रहार्थम् ॥

मानवीति ॥ 'मनु पृथिव्या ' (तैस २ ६ ७) इत्यस्मिन्नुपाख्याने [36]मानव्यादिशब्दार्थं प्रसिद्ध इत्येतद्दर्शयति– 'मानवीत्याह मनुर्ह्येतामग्रेऽपश्यत् घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाᳲ समैरयताम् ' इति ॥

२९. आ हा–°आहूताना । ३० आ–इत्यन्ताना° । ३१ क द १ भ हा हो १–°रोपाह्वानस्य । ३२ क हा–°प्युपाह्वान । ३३ आ ड–°वाक्येन । ३४ ड द १.भ–चतुष्पात्त्वा° । ३५ आ–°रावृत्या । ३६ आ क–मानवीत्यादि°, अ इ उ ओ ना पा हा १–मानवीति° ।

ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते य इमं यज्ञमवान् ये यज्ञपतिं वर्धानित्याह (४) यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्ते

ब्रह्म । देवकृतमिति देव कृतम् । उपहूतमित्युप हूतम् । इति । आह । ब्रह्म । एव । उपेति । ह्वयते । दैव्याः । अध्वर्यवः । उपहूता इत्युप-हूताः । उपहूता इत्युप हूताः । मनुष्याः । इति । आह । देवमनुष्यानिति देव-मनुष्यान् । एव । उपेति । ह्वयते । ये । इमम् । यज्ञम् । अवान् । ये । यज्ञपतिमिति यज्ञ पतिम् । वर्धान् । इति । आह (४) । यज्ञाय । च । एव । यजमानाय । च । आशिषमित्या शिषम् । एति । शास्ते ।

भूयासमर्थमधिगच्छति ' इति । तत्रातिप्रसङ्गनिवृत्त्यर्थं 'चतुरुप ह्वयते' इत्युक्तम् । चतुष्पदा लाभश्चतुष्ट्वेन '[३७]इडोपहूता ' इत्यस्याभ्यासाच्च । इथ मानवीत्यादि[३७] । गतम् । घृतपदीत्यादि । गतम् ॥

[४]ब्रह्म परिवृढ यज्ञाख्य कर्म, [१४]देवेन ब्रह्मणा[१४] ऋत्विग्भिर्वा कृतम् । देवमनुष्यानिति । [१५][४]देवमनुष्यान् चाध्वरस्य नेतृत्वेन [४]उपह्वयते[१५] ॥

यज्ञाय चैवेत्यादि ॥ गतम् ॥

ब्रह्मेति ॥ पुरा देवैर्निष्पादितम् [३७]इडोपह्वानरूप यत् [३८]परिवृढ कर्म [३९]तस्योपह्वान दर्शयति-' ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते ' इति ॥

दैव्या इति ॥ "अश्विनौ हि देवानामध्वर्यू आस्ताम्" (तैस २ ६ ४) इत्यादिश्रुतिषु श्रुता ये दैव्या अध्वर्यवो ये च दृश्यमाना मानुषास्तेषाम् [४०]उभयेषाम् [४१]उपह्वान दर्शयति – 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते ' इति ॥

य इति ॥ पूर्वोक्ता [४]दैव्या मानुषाश्च येऽध्वर्यवस्ते सर्वेऽपीम यज्ञमवन्तु यज्ञपतिं च वर्धयन्त्वित्येवमाशी परता दर्शयति – ' य इम यज्ञमवान् ये यज्ञपतिं वर्धानित्याह यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्ते ' इति ॥

१३-१३ पर ल-°पहूतोपहूतेडेत्यस्याह्वानाच्च, मै४-°पहूतोपहूतेडेत्याख्यानाच्च, नि-°पहूते त्यस्याह्वानाच्च, त३ हो-°पहूतोपहूतेत्यस्याभ्यासाच्च । १४-१४ त३ नि पर मै४ हो-वृद्धो देवेद्र म णो (१) । १५-१५. श्रि-देवाश्च मनुष्याश्चाध्वरस्य नेतृनुपह्वयते, पर-देवा मनुष्याश्चाध्वरस्य नेतृत्वेनोपह्वयते, मै-देवमनुष्याश्चाध्वरस्य नेतृनुपह्वयते, मै८-देवा मनुष्याश्चाध्वरस्य नेतृत्वमुपह्वयते ।

३७ अ इ उ ओ ना पा हा हो१-इडोपाह्वानरूपं । ३८ अ आ इ उ ओ पा हा हो१-परिवृत्तं, क ना-'परिवृढ' नास्ति । ३९ अ उ ओ ना पा हा हो१-तस्योपाह्वानं । ४० आ-'उभयेषाम्' नास्ति । ४१ अ आ इ उ क ओ ना पा हा-उपधान ।

उप॑हूते॒ द्यावा॑पृथि॒वी इ॒त्या॑ह॒ द्यावा॑पृथि॒वी ए॒वोप॑ ह्वयते॒ पू॑र्व॒जे ऋ॑ता॒व॑री॒ इ॒त्या॑ह पू॒र्व॒जे ह्ये॑ते ऋ॑ता॒व॑री दे॒वी दे॒वपु॑त्रे इ॒त्या॑ह दे॒वी ह्ये॑ते दे॒वपु॑त्रे उप॑हूतो॒ऽयं यज॑मान इ॒त्या॑ह॒ यज॑मानमे॒वोप॑ ह्वयत॒ उत्त॑रस्यां देवय॒ज्याया॒मुप॑हूतो

उप॑हूते॒ इत्युप॑ - हू॒ते॒ । द्यावा॑पृथि॒वी इति॒ द्यावा॑ - पृ॒थि॒वी । इति॑ । आ॒ह॒ । द्यावा॑पृथि॒वी इति॒ द्यावा॑ - पृ॒थि॒वी । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । पू॒र्व॒जे इति॑ पू॒र्व - जे । ऋ॒ताव॑री॒ इत्यृ॒त - व॒री॒ । इति॑ । आ॒ह॒ । पू॒र्व॒जे इति॑ पू॒र्व - जे । हि । ए॒ते इति॑ । ऋ॒ताव॑री॒ इत्यृ॒त व॒री॒ । दे॒वी इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒व - पु॒त्रे॒ । इति॑ । आ॒ह॒ । दे॒वी इति॑ । हि । ए॒ते इति॑ । दे॒वपु॑त्रे इति॑ दे॒व - पु॒त्रे॒ । उप॑हूत॒ इत्युप॑ - हू॒तः॒ । अ॒यम् । यज॑मानः । इति॑ । आ॒ह॒ । यज॑मानम् । ए॒व । उपेति॑ । ह्व॒य॒ते॒ । उत्त॑रस्या॒मित्युत् - त॒र॒स्या॒म् । दे॒व॒य॒ज्याया॒मिति॑ दे॒व - य॒ज्याया॑म् । उप॑हूत॒ इत्युप॑ - हू॒तः॒ ।

पूर्वजे इति ॥ सर्वविकारेभ्यः पूर्वमुत्पन्ने । [15]ऋतावरी सत्यवत्यौ [16]यज्ञवत्यौ वा तत्साधनत्वेन । मत्वर्थीये मतुपि "वनो र च" (पा ४·१·७) इति, "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम् । देवनशीले देव्यौ, देवाः पुत्राः ययोस्तौ तादृश्यौ ॥

उपहूते इति ॥ 'उपहूतꣲ रथन्तरꣲ सह पृथिव्या:' इत्यत्र यथा पृथिवीशब्दोऽग्निलक्षको नात्र तथा [42]द्यावापृथिवीशब्दौ लक्षकौ[42] किन्तु स्वार्थपरावित्येतद्दर्शयति– 'उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोपह्वयते' इति ॥

पूर्वजे इति ॥ ते च द्यावापृथिव्यौ देवतिर्यङ्मनुष्याद्युत्पत्तेः पूर्वमेवोत्पन्ने, ऋतशब्दवाच्यो यज्ञोऽनयोर्वर्तत इति ऋतावर्यौ, नैते [43]केवलमृत्तिकादिरूपे किं तु देव्यौ, [44]देवाः पुत्राः[44] ययोस्ते [45]देवपुत्रे इत्येतां [46]विशेषणार्थसिद्धिं दर्शयति– 'पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे' इति ॥

उपहूत इति ॥ 'यजमानः प्रस्तरः' इत्यादिवत् [47]अत्र यजमानशब्दो नार्थान्तरलक्षक इत्येतत् दर्शयति – 'उपहूतोऽयं यजमान इत्याह यजमानमेवोप ह्वयते' इति ॥

उत्तरस्यामिति ॥ येषां [48]देवयज्यादीनामर्थे यजमानोपह्वानं तानेतान् [49]विस्पष्टं दर्शयति[49] –'उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत इत्याह प्रजा वा उत्तरा

१६. मै.ल.हो– 'यज्ञवत्यौ' नास्ति ।

४२. आ.क–°शब्दार्थौ; ड–°शब्दार्थकौ; अ.इ.जो.पा.हा–°पृथिवीवाचकौ; ना–°शब्दावन्यवाचकौ; हो१–°शब्दावनर्थकौ । ४३. क.ड..हो१–°मृगादि° । ४४–४४. अ.इ.उ जो पा.हा–देवोत्पन्नौ । ४५ हा–एव पुत्रे । ४६. हो१–विशेषणा° । ४७. अ.इ.जो पा.हा–तत्र । ४८. आ.क.ना–°नामर्थं । ४९–४९. ड.हो१–विस्पष्टयति ।

भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत (५) इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामेदमसीदमसीत्येव यज्ञस्य प्रियं धामोप ह्वयते

भूयसि । हविष्करण इति हविः-करणे । उपहूत इत्युप-हूतः । दिव्ये । धामन् । उपहूत इत्युप-हूत (५)। इति । आह । प्रजेति प्र-जा । वै । उत्तरेत्युत्-तरा । देवयज्येति देव-यज्या । पशवः । भूयः । हविष्करणमिति हविः-करणम् । सुवर्ग इति सुव.-गः । लोकः । दिव्यम् । धाम । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । उपेति । ह्वयते ।

प्रजा वा इत्यादि ॥ दर्शपूर्णमासाद्यविच्छेदः प्रजाहेतुः । इदमसीदमसीत्यादि । [V]प्रजा वा [V]पशवः स्वर्गो वा यद्यज्ञस्य प्रियं [V]धाम, तादात्म्येन यज्ञे यजमान उपहूतो भवति ॥

देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धाम' इति ॥ सोमयागादिरूपाया उत्तरदेवयज्यायाः प्रजाहेतुत्वेन प्रजात्वम् । अस्यामेवेष्टौ [50]"बहुहविःसंपादकस्य पशुहेतुत्वेन पशुत्वम्"[50] ॥

इदमिति ॥ 'इदं मे देवा हविर्जुषन्ताम्' इति तस्मिन्नुपहूत इत्यस्य स्पष्टार्थस्य मन्त्रवाक्यस्य विवक्षितं तात्पर्यं दर्शयति – 'इदमसीदमसीत्येव यज्ञस्य प्रियं धामोपह्वयते' इति । इदं प्रवर्तमानं मदीयं हविर्देवा [51]जुषन्तामिति वक्तुं तस्मिन् दर्शपूर्णमासकर्मणि यजमान उपहूत इत्येतावदेव न भवति किं तु [V]इदं निरूढपशुबन्धरूपं कर्म चिकीर्षुः [V]असि, सोमयागरूपम् [V]इदं कर्म चिकीर्षुः [V]असि [V]इति एवं सर्वधर्मानुष्ठानविवक्षया [V]यज्ञस्य [V]प्रियम् इदं [V]धाम स्थानं प्रति यजमानः [V]उपह्वयते । सर्वकर्मविवक्षाद्योतनार्था वीप्सा ॥

विश्वमिति ॥ [52]अस्य यजमानस्य यत् प्रियं तत् सर्वमुपहूतं, तस्य चोपहूतस्य [53]सर्वस्य [54]स्वामी यजमान उपहूत इत्यनेनोपाह्वानस्य [55]न्यूनतां [56]विचार्य संपूर्णता संपद्यत इत्येतद्दर्शयति– 'विश्वमस्य

५०–५०–अ.पा–व्रतहविःसंपादकस्य पशुहेतुत्वं, इ.उ.जो.हा–बहुहविःसंपादकस्य पशुहेतुत्वं, ना– बहुहविःसंपादनस्य पशुहेतुत्वम्; ड.ड१.ग्रं.हो१–प्रभूतहविःसंपादनस्य पशुहेतुत्वेन पशुत्वम् । ५१. ड१.ग्रं.हो१–रोनन्तामिति । ५२. आ.क–अन्यत्; ड१–यस्य । ५३. ड–पूर्वस्य; ड१–'सर्वस्य' नास्ति । ५४. आ.क.–प्रियस्य स्वामी । ५५. ड–हारूकता (?) । ५६. ड१–निवार्य ।

विर्श्वमस्य प्रियमुपंहूतमित्याहाछम्बट्कारमेवोपं ह्वयते ॥ ७ ॥
[ आह धेनुरेता वर्धानित्याह धामन्नुपंहूतश्चर्तुस्त्रिंशच्च ।]

निर्श्वम् । अस्य । प्रियम् । उपंहूतमित्युपं हूतम् । इति । आह ।
अछम्बट्कारमित्यछम्बट् कारम् । एव । उपेति । ह्वयते ॥७॥
[ मैस ४ १३ ८, शब्रा १ ८ १ ७, १९-२३ ]

अछम्बट्कारमेवेति । वडिति सत्यनाम । तस्य छादन [17]छम्बट्कार किंचिदप्यपरिच्छाद्य सर्वमपि [V]अस्य यजमानस्य [V]प्रियम् उपह्वयते ॥

इति द्वितीये षष्ठे सप्तमोऽनुवाक ॥

प्रियमुपहूतमित्याहाछम्बट्कारमेवोप ह्वयते' इति ॥ अपेक्षितस्यार्थस्य प्रच्छादनेनानुष्ठानवैयर्थ्य[57] छम्बट्कारस्तद्यथा न भवति तथैवैन यजमानमुपहूतवान् भवति ॥

अत्र मीमासा ॥ नवमाध्यायस्य प्रथमपादे चिन्तितम्–

"ऊह्यो यज्ञपतिर्नो वा [58]वृद्ध्यर्थोत्साहतोऽग्रिम ।
[59]प्रत्यक्षोक्तया कृत्स्नमन्त्र [60]इडार्थोऽनूहन तत " ॥ (जैन्या ९ १ २० ) ॥

दर्शपूर्णमासयो [61]इडोपाह्वानमन्त्रे वाक्यमेतत्[61] आम्नायते– "दैव्या अध्वर्यव उपहूता । उपहूता मनुष्या । य इम यज्ञमवान् । ये यज्ञपतिं वर्धान्" (तैब्रा ३ ५ ८ ) इति । ये दैव्या अध्वर्यवो यज्ञमवन्ति ये च मनुष्या यज्ञपतिं वर्धयन्ति ते सर्वेऽप्यत्रोपहूता इत्यर्थ । अस्मिन् वाक्ये यज्ञपतेरभिवृद्धिकथनेनोत्साहजननेन[62] समवेतोऽर्थ प्रतीयते । तत इडोपह्वानमन्त्रात् [63]पृथक्कृत्याभिवृद्ध्यर्थे जपे मन्त्रवाक्यमिद लिङ्गेन विनियुज्यताम् । तथा सति [64]सत्रे [65]यज्ञपतीना बहुत्वात् [66]बहुवचनान्ततया यज्ञपतिशब्द[66] [67]ऊहनीय इति प्राप्ते ब्रूम – प्रत्यक्षश्रुत्या [68]कृत्स्नो मन्त्र इडोपह्वाने विनियुक्त । एकवाक्यत्व [69]च कृत्स्नमन्त्र [70]उपलभ्यते । प्रकरण चेदमिडाया । अत श्रुतिवाक्यप्रकरणैर्विरोधान्न लिङ्गविनियोग सभवति । तदभावे [71]च यज्ञपतिवृद्धिप्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन [72]सहैकवाक्यतामापन्नमिडा प्रशसति । प्रशसा चैकवचनान्तेनापि[73] यज्ञपतिशब्देन सिध्यतीति नास्ति सत्रे तदूह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाक ॥

१७ त्रि ल हो–छम्बट्कारम् ।

५७ ड हो१–°वैपरीत्यम् । ५८ अ उ पा–वृत्यर्थोत्साहतो हि स । ५९ अ इ उ पा–प्रत्यभोक्ता । ६० आ क ओ ना हा–इडार्थो नूहन, इडा नास्त्यूहन । ६१–६१ ड–इडोपाह्वानमन्त्रवाक्ये एतत् । ६२ अ इ उ क जो ड१ ना पा हा हो१–°जनने, ड–°जनन° । ६३ अ इ उ पा–°वृत्यर्थे । ६४ ड१–तन । ६५ अ इ उ पा–यज्ञपतीना विवृद्धया । ६६–६६ ग्र.हो१–बहुवचनतया शब्द । ६७ ड हो१–ऊह्य । ६८ क ड१ ग्र.हा हो१–कृत्न° । ६९ ड 'च' नास्ति । ७० ड१–उपलक्ष्यते । ७१ ड१–चापि । ७२ आ–°वाक्यतापन्न° । ७३ ड ड१–'अपि' नास्ति ।

पशवो वा इडा स्वयमा दत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं

पशवः । वै । इडा । स्वयम् । एति । दत्ते । कामम् । एव । आत्मना । पशूनाम् । एति । दत्ते । न । हि । अन्यः । कामम् । पशूनाम् । प्रयच्छतीति प्र यच्छति । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । वाचम् । एव । भागधेयेनेति भाग - धेयेन । प्रीणाति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा कृत्यै । चतुरवत्तमिति चतुः अवत्तम् । भवति । हविः । वै । चतुरवत्तमिति चतुः अवत्तम् ।

पशवो वा इत्यादि ॥ इडायाः स्वयम् आदानव्याजेन पशूनाम् एव कामं स्वयमादत्ते पशुभ्यः प्रदातुः हस्ते गृह्णाति । न हि अन्यः पशूनां कामं प्रदातुमर्हतीति ॥

स्वगाकृतिः यथा स्वभागकरणम् । "ऊर्यादिच्विडाचश्च" ( पा १ ४ ६१ ) इति गतित्वात् "तादौ च°" ( पा ६ २ ५० ) इति गते प्रकृतिस्वरत्वम् । चतुरवत्तमित्यादि ॥ गतम् ( तैस २ ६ ३ ) ॥

इडोपाह्वानमुदितमनुवाके हि सप्तमे ।
इडाप्राशित्रभक्षौ द्वावुच्येते अष्टमे पुनः ॥

पशव इति ॥ यदुक्तं सूत्रकारेण– पुरस्तात् प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति । अध्वर्युः प्रथममवदानमवद्यति[1] स्वयं[2] होतोत्तरम्" ( आपश्रौ ३ २ ५ ६ ) इति, तदिदं होतुरवदानं विधत्ते– 'पशवो वा इडा स्वयमादत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति ' इति ॥ गोरूपाया इडायाः पशुत्वेन तामिडामाददानो होता[3] पशूनाम् अभिलषितार्थं[4] स्वीकृतवान् भवति । होतुः अन्यः न कश्चिदपि पशूनाम् इडारूपाणां कामं दातुं समर्थः ॥

वाचस्पतय इति ॥ इडाभागप्राशनमन्त्रावुपादाय व्याचष्टे– 'वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै ' इति ॥ इडोपह्वानरूपा वा वाक् तस्याः पतिर्होतुर्जीवात्मा तस्मै हुतं हे पुरोडाश, त्वां भक्षयामि ॥ अनेन मन्त्रोच्चारणेन भागं दत्वा[5] वाचं देवतां प्रीणयतीत्यर्थः[6] । सदसो यज्ञसभायाः पतिर्होतुर्जीवात्मा तस्मै हुतं त्वा भक्षयामि । अनेन तस्य पुरोडाशस्य स्वोदरकृतत्वं[8] भवति ॥

चतुरवत्तमिति ॥ होतुर्हस्ते अध्वर्युणा क्रियमाणस्यावदानस्य[9] मन्त्रा विधत्ते– 'चतुरवत्तं भवति हविर्वै चतुरवत्तम्' इति ॥ प्रधानस्य हविषश्चतुरवत्तस्य पूर्वमेव दर्शितं ( द्र तैसं २ ६ ३ ), तस्मात्[10] इदमपि हविः एव भवति । चतुष्पात्त्वसामान्यात् तस्य पशुरूपत्वम् ॥

1 ग–°कारान् ।

१, आ क–°दानमवद्यति, ख ग–°दानमादधाति । २. ख ग–तदेदं । ३–३. अ ख ग घो पा हा–पश्वन्तमभिलषितं, ना–'पशूनां' नास्ति । ४ आ–ख्योपाख्याना° । ५ ख ख ग घो १–भाग° । ६ क–'दत्वा' नास्ति । ७ ख ग घो पा हा–स गायाः । ८ क ना–स्वोदरगतत्वं, घो १–स्वोदर° कृतं, ख ख ग–स्वोदरकृतत्वं कृतम् । ९. आ क–'अध्वर्युणा' नास्ति । १० ख घो–तस्मात् ।

पुशर्वश्चतुरवत्तं यद्धोता प्राश्नीयाद्धोता(१) ऽऽर्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पुशूनपि दध्यादपुशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुत प्राश्नामीत्याह स्वगाकृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणा ददाति तीर्थ एव दक्षिणा ददाति

पुशवः । चतुरवत्तमिति चतुः अवत्तम् । यत् । होता । प्राश्नीयादिति प्र-अश्नीयात् । होता (१) । आर्तिम् । एति । ऋच्छेत् । यत् । अग्नौ । जुहुयात् । रुद्राय । पुशून् । अपीति । दध्यात् । अपुशुः । यजमानः । स्यात् । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । परोक्षमिति परः - अक्षम् । एव । एनत् । जुहोति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा कृत्यै । प्रेति । अश्नन्ति । तीर्थे । एव । प्रेति । अश्नन्ति । दक्षिणाम् । ददाति । तीर्थे । एव । दक्षिणाम् । ददाति ।

परोक्षमिति ॥ कोऽत्र प्राश्नाति प्रहूयत एवेदं वाचस्पतये इति प्रच्छादनं परोक्षत्वम् । तेन होतुः प्राशननिमित्ताया आर्तेरप्रसङ्गः ॥

प्राश्नन्तीति । सर्वेऽपि यजमानपञ्चमाः सह प्राश्नन्तीति । तीर्थे तु खोत्तरणावसरे प्राशनं दक्षिणादानं च कृतं भवतीति । ऋत्विग्भ्यः पुरोडाशप्रदानं दक्षिणा ।

यदिति ॥ प्रकारान्तरेण [11]भक्षणमन्त्रप्रशंसां दर्शयति-[11] 'यद्धोता प्राश्नीयाद्धोताऽऽर्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै' इति ॥ देवतारूपाया इडाया भक्षणेन होता मरणं [12]प्राप्नुयात् । प्राशनं परित्यज्य [13]अग्नौ तद्यागहोमे [14]सतीडारूपगवादिपशूनग्निरूपाय क्रूराय रुद्राय समर्पितवान् भवति । ततः यजमानः पशुरहितः स्यात् । तस्मात् ' वाचस्पतये [15]त्वा हुतम् ' इति प्रथममुक्त्वा पश्चाद्भक्षणे सति साक्षादग्नौ हुतं न भवतीति रुद्राय पशुसमर्पणं न [16]भवति, वाचस्पतिव्यवधानेन परोक्षम् एव हुतत्वात् । [17]स्वयमपि साक्षादिडां न प्राश्नाति किं त्वन्यस्मै हुतम् एव प्राश्नातीतीडाप्राशनप्रयुक्तो मरणदोषो न [18]भवतीति । ईदृशस्य भक्षितस्य स्वात्मगतत्वेन स्थापनाय ' सदसस्पतये ' इत्यादिकं पठनीयम् ॥

प्राश्नन्तीति ॥ यदुक्तं सूत्रकारेण-“ यजमानपञ्चमा इडां [19]प्राश्य ” ( आपश्रौ ३ ३ ११ ) इति, तदिदं विधत्ते- ' प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थे एव दक्षिणां ददाति ' इति ॥ तीर्थे तु खोत्तरणावसरे प्राशनेन हि [20]क्षुद्रूपं खमुत्तीर्यते । ऋत्विग्भिः [21]प्राशिते सति दक्षिणाऽपि दत्ता भवति । [22]तद्दानमेनस्मिन् [23]प्रधानयागोत्तरणावसरे ॥

० पर-प्राश्नन्ति, मै-प्राश्नातीति ल-प्राश्नतेति ।

११-११ आ क-भक्षण प्रशंसति । १२ अ इ उ °जा पा हा-प्रासवान् । १३ अ इ उ जो पा हा-अन्यत्र । १४ ड हो१-°रूपाङ्गवादि°, ड१ - °रूपान् गवादि° । १५ अ उ जो ड ना पा शृ हा-'त्वा' नास्ति । १६ ड१- भविष्यति । १७ आ हा तथाऽयमपि । १८ ड ड१ शृ हो१-भविष्यति । १९ आ क ड शृ-प्राश्नन्ति । २० आ - 'क्षुद्' नास्ति । २१ आ क- प्राशने । २२ ड१-तत्र दान° । २३ ड ड१- °यागकरणावसरे ।

वि वा एतद्यज्ञं (२) छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं तस्याऽऽविद्धं

वीति । वै । एतत् । यज्ञम् (२) । छिन्दन्ति । यत् । मध्यत । प्राश्नन्तीति प्र-अश्नन्ति । अद्भिरित्यत्-भि । मार्जयन्ते । आप । वै । सर्वा । देवता । देवताभि । एव । यज्ञम् । समिति । तन्वन्ति । देवा । वै । यज्ञात् । रुद्रम् । अन्त । आयन् । स । यज्ञम् । अविध्यत् । तम् । देवा । अभि । समिति । अगच्छन्त । कल्पताम् । न । इदम् । इति । ते । अब्रुवन् । स्विष्टमिति सु इष्टम् । वै । न । इदम् । भविष्यति । यत् । इमम् । राधयिष्याम । इति । तत् । स्विष्टकृत इति स्विष्ट कृत । स्विष्टकृत्त्वमिति स्विष्टकृत् त्वम् । तस्य । आविद्धमित्या-विद्धम् ।

वि वा एतदित्यादि । गतम् ॥

मार्जयन्त इति ॥ "मनो ज्योति" (तेस १ ५ ३) इत्यन्तर्वेदिमार्जनम् ॥

देवा वै यज्ञादिति ॥ अन्तरण निरमरणाथञे [३]अननुप्रवेशनम् । कल्पन [४]कर्मणोऽविकल सपत्ति । अथ देवा [५]अब्रुवन्—[६]इम [७]राधयिष्याम, तेन चैव [८]यज्ञ स्विष्टकृत भवति [९]इति । तत स्विष्टकृतमाराधयित्वा (?) यज्ञस्य तत् [१०]आविद्ध यन्मात्र निष्कृष्य तेन प्राशित्रमकुर्वन्, [११]तस्मात्

चीति ॥ यदुक्त सूत्रकारेण— "मनो [२४]ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वा" (आपश्रौ ३ ३ २) इति, तदिद विधत्ते— 'वि वा एतद्यज्ञ छिन्दन्ति यन्मध्यत प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ स तन्वन्ति' इति ॥ "सत्यमाप सर्वा देवता [२५]आप" (तैआ १० २२) [२६]इति श्रुत्यन्तरादपा सर्वदेवतारूपत्वम् ॥

देवा इति ॥ अथ प्राशित्रावदानपरिमाण विधत्ते— 'देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् त देवा अभि समगच्छन्त कल्पता न इदमिति तेऽब्रुवन्त्स्विष्ट वै न इद भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृत स्विष्टकृत्त्व तस्याऽऽविद्ध निरकृन्तन् यवेन समित तस्माद्यवमात्रमव द्येत्' इति ॥ [२७]देवा पुरा [२७] यदा यज्ञमकुर्वन् [२७] तदा स्विष्टकृदभिरूपं [२८]रुद्रम् अन्तरितवन्त, तेनान्तरायेण कुपित [२९]स रुद्रस्तदीय [२९]यज्ञम् [२९]अविध्यत् विरूपमकरोत् । [२९]त रुद्र [२९]देवा आभिमुख्येन गत्वा तत् [२९]इद यज्ञानुष्ठानम् [३०]अस्मदर्थं [३०]कल्पता सपूर्णं भवतु [३०]इति प्रार्थितवन्त । तदानीं केचिद्बुद्धिमन्तो देवा इतरान् प्रत्येवम् [३०]अब्रुवन्— [३०]यदि वय स [३०] रुद्र हविष्प्रदानेनाऽऽराधयिष्यामस्तर्ह्यस्माकम् [३०]इद कर्म [३०]स्विष्ट [३०]भविष्यति [३०]इति । ततो हविराराधनेन स्विष्टकरणाद्रुद्ररूपस्याग्ने [३०]स्विष्टकृत्त्व सपन्नम् ॥ ततो [३१]देवास्तमाराध्य [३१]तस्य

३ पर—दाप्रवेशनाम् । ४ पर—कर्मणो वऽ°, भि—कर्मणो विकल्प° । ७–५ हो—पञ्च वे यथश ।

२४ आ क—ज्योतिरित्यद्भि° हा—ज्योतिरित्यन्त° । २५ द१—'आप' नास्ति । २६ द१—इत्यादि । २७–२७ आ क—यदा प्रथममकुर्वन्, द१—यज्ञमकुर्वन् । २८ आ क—रुद्रम् । २९ आ—अस्माकम् । ३०–३० द२.श्रो१—यज्ञेताम्, द१—यथेतम् । ३१ अ इ उ को पा हा—देवास्तमाराध्य ।

नि (३)रकृन्तन् यवेन संमितं तस्माद्यवमात्रमव द्येद्यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य यदुप च स्तृणीयादभि च धारयेदुभयतःसंश्वायि कुर्यादवदायाभि घारयति द्विः सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत् तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण

निरिति (३)। अकृन्तन् । यवेन। संमितमिति सं मितम् । तस्मात्। यवमात्रमिति यव मात्रम् । अवेति। द्येत्। यत्। ज्यायः। अवद्येदित्यव - द्येत्। रोपयेत्। तत्। यज्ञस्य। यत्। उपेति। च। स्तृणीयात्। अभीति। च। घारयेत्। उभयतःसंश्वायीत्युभयतः - संश्वायि। कुर्यात्। अवदायेत्यव - दाय। अभीति। घारयति। द्विः। समिति। पद्यते। द्विपादिति द्वि पात्। यजमानः। प्रतिष्ठित्या इति प्रति स्थित्यै। यत्। तिरश्चीनम्। अतिहरेदित्यति हरेत्। अनभिविद्धमित्यनभि - विद्धम्। यज्ञस्य। अभीति। विध्येत्। अग्रेण।

यदि यवमात्रात् Vज्यायः प्रवृद्धम् Vअवद्येत् Vयज्ञस्य Vरोपयेत् विमोहयेत्। रुप विमोहने। लिङ्गं च— "मा रूरुपाम यज्ञस्य" (तैब्रा ३ ७.५) इति ॥

यदित्यादि ॥ उभयपार्श्वरुग्णम् Vउभयतः संश्वायि ॥ यत् तिरश्चीनमित्यादि। गतम् ॥

संबन्धि यद्यवमात्रं पुरोडाशशकलरूपम् 'आविद्धम् आसीत् तदा विद्धमुपहत्य 'निरकृन्तन् निष्कृत्य छिन्नवन्तः। यस्मादेव 'तस्मात् प्राशित्रभागं 'यवमात्रम् 'अवद्येत् ॥

यदिति ॥ [32]अधिकावदानं प्रतिषेधति– 'यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य' इति ॥ [33]अधिक भागावदाने 'यज्ञस्य 'तत् अङ्गं 'रोपयेत् मोहयेद्यज्ञप्रयोगे भ्रान्तिं जनयेदित्यर्थः। रुद्रेण कृतो योऽस्य पुरोडाशस्य [33]वेधः तस्मादेव वेधदेशादिदं [34]प्राशित्रभागावदानमित्यर्थः [35]शाखान्तराम्नाते तन्मन्त्रे विस्पष्टं प्रतीयते [35]– "अज्यायो यवमात्रात्। आव्याधात् कृत्यतामिदम्। मा रूरुपाम यज्ञस्य। शुद्धं स्विष्टमिदं हविः" (तैब्रा ३ ७ ५) इति ॥

यदिति ॥ [36]उपस्तरणादिचतुरवदाननिन्दापुरःसरं [37]सकृदवदानाभिघारणे विधत्ते– 'यदुप च स्तृणीयादभि च घारयेदुभयतः संश्वायि कुर्यादवदायाभि घारयति द्विः सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै" इति ॥ [38]यद्यवदानात् पूर्वमुपस्तरणं पश्चाच्चाभिघारणं कुर्यात् तदानीम् [39]अवत्तस्य पुरोडाशस्योभयोः [40]पार्श्वयोः संश्वायि 'कुर्यात्। सम्यक्श्वाय उच्छूनत्वरूपो रोगविशेषो यस्याङ्गस्य तदङ्गं संश्वायि। सकृदवदानाभिघारणाभ्यां [41]द्विपदो यजमानस्य प्रतिष्ठा भवति ॥

यदिति ॥ यदुक्तं सूत्रकारेण– "अग्रेणाऽऽहवनीयं [42]ब्रह्मणे प्राशित्रं परिहरति" (आपश्रौ ३ २ ९) इति, तदेतद्विधत्ते– 'यत् तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव परि

३२ आ क–अधिकावदाने। ३३ हो१–भेद। ३४ आ क–अत प्राशित्रभागावदानं प्रतीयते च, ड१– प्राशित्रभागावभा(?)नमित्ययमर्थः। ३५–३५ आ क–विस्पष्टमयमर्थः शाखान्तरे आम्नायते। ३६ ड–°चतुरवदानादिनिन्दा°। ३७ इ जो ना हा–°भिघारणे। ३८ ड१–यद्यवदान°। ३९ आ क– उपात्तस्य। ४० ड१–'पार्श्वयोः' नास्ति। ४१ हा द्विपधे, ड१– द्विपदा। ४२ क–ब्राह्मणे, अ इ उ जो ना पा हा– 'ब्रह्मणे' नास्ति।

परिं हरति तीर्थेनैव परिं हरति तत् पूष्णे पर्यंहरन् तत् (४) पूषा प्राश्यं दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यंहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमा-

परीतिं । हरति । तीर्थेनं । एव । परीतिं । हरति । तत् । पूष्णे । परीतिं । अहरन् । तत् (४) । पूषा । प्राश्येतिं प्र-अश्यं । दतः । अरुणत् । तस्मात् । पूषा । प्रपिष्टभाग इति प्रपिष्ट-भागः । अदन्तकः । हि । तम् । देवाः । अब्रुवन् । वीतिं । वै । अयम् । आर्धि । अप्राशित्रिय इत्यंप्र-अशित्रियः । वै । अयम् । अभूत् । इतिं । तत् । बृहस्पतये । परीतिं । अहरन् । सः । अबिभेत् । बृहस्पतिः । इत्थम् । वाव । स्यः । आर्तिम् । एतिं ।

तदित्यादि ॥ तत् देवतानिष्ठं प्राशित्रं देवाः पूष्णे प्रथमं पर्यहरन्, तत् प्राश्य पूषा आत्मीयान् दन्तान् अरुणत् [6]अभञ्जयत् । तस्मात् अद्यत्वेऽपि पूषा प्रपिष्टभागः भवति, दन्तहीनत्वात् । एवमयं वृद्धाङ्गोऽप्राशित्रार्ह इति देवाः तं हित्वा तत् बृहस्पतये पर्यहरन् । अथ बृहस्पतिः एषोऽहमपि एतत्प्राशनेनास्तं गमिष्यामि इति बिभ्यत् 'सूर्यस्य त्वा' इतीमं मन्त्रं दृष्ट्वा तेन प्राशित्रम् अपश्यत् । न हीति । सूर्यस्य संबन्धि सर्वलोकस्य

हरति' इति ॥ वेदेरुत्तरतः स्थितोऽध्वर्युर्वेदिमध्यस्थिते पुरोडाशे प्राशित्रभागमवदायाऽऽहवनीयस्य [43]दक्षिणभागे स्थिताय ब्रह्मणे वेदेरुपरि हस्तं प्रसार्य तिरश्चीनं यथा भवति तथा यदि दद्यात् तदानीं यज्ञस्य यदङ्गं रुद्रेण अनभिविद्धं [44]तदप्यभिविद्धं भवेत् । तस्मादुत्तरस्यां दिश्यवस्थितोऽध्वर्युः प्राङ्मुखो गत्वाऽऽहवनीयस्य अग्रेण देशेन [45]ब्रह्मसमीपं [46]प्राप्य तस्मै भागं परिहरति परितो नयति सम्यक् दद्यादित्यर्थः । तथा सति तीर्थेन एव [47]नद्याद्यवतरणसदृशेनैव मार्गेणैवाऽऽनीतवान् भवति ॥

तदिति ॥ अत्र सूत्रकारेण–"प्राशित्रमवदीयमानं प्रेक्षते" (आपश्रौ ३·१९·५) इत्युपक्रम्यैतदुक्तं– "सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् । सावित्रेण [48]"प्रतिगृह्य ...... अङ्गुष्ठेनोपमध्यमया [49]चाङ्गुल्याऽऽदायाग्नेस्त्वा [50]आस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे [51]सादयामी-त्यसंश्लेत्यापिगिरति" (आपश्रौ ३·१९·६-७) इति । असंश्लेत्य [52]दन्तैरचूर्णीकृत्य । तत्र दर्शनमन्त्रमुत्पाद्य विनियोक्तुं प्रस्तौति– 'तत् पूष्णे पर्यहरन् तत् पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्-बृहस्पतिरित्थं वाव स्य आर्तिमाऽऽरिष्यतीति ' इति । पुरा कदाचिद्देवाः तत् प्राशित्रं पूष्णे समर्पयन् । स

६. मै४–अरुधत्; मै–रुद्धात् भग्नात् ।

४३. आ–दक्षिणे भागे; अ.इ.उ.ओ.ना.पा.हा– दक्षिणे मार्गे । ४४. ट१– तदभि° । ४५. अ.इ.उ.ओ.ना.पा.हा–ब्रह्मणे परिहरति समीपम् । ४६. ट–'प्राप्य' नास्ति । ४७. आ.क.ट– नद्यवतरण° । ४८. ट१,ए,हा– प्रतिगृह्णेति । ४९. ट– 'चाङ्गुल्या आदाय' नास्ति, ट१– चाऽङ्गुःपाग्नेस्त्वा । ५०. अ.इ.उ.पा– 'आस्येन' नास्ति । ५१. आ.क–°त्यभिगिरति । ५२. हा,हो१ – दन्तैनाचूर्णीकृत्य ।

ऽऽरिष्यतीतिं स एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतिं पश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः (५) किं चन हिनस्ति सोऽबिभेत् प्रतिगृह्णन्तं मा हिंसिष्यतीतिं देवस्यं त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिं गृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात् सोऽबिभेत् प्राश्नन्तं मा

अरिष्यति । इति । स । एतम् । मन्त्रम् । अपश्यत् । सूर्यस्य । त्वा । चक्षुषा । प्रतीति । पश्यामि । इति । अब्रवीत् । न । हि । सूर्यस्य । चक्षुः (५) । किम् । चन । हिनस्ति । सः । अबिभेत् । प्रतिगृह्णन्तमिति प्रति गृह्णन्तम् । मा । हिंसिष्यति । इति । देवस्य । त्वा । सवितुः । प्रसव इति प्र सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । प्रतीति । गृह्णामि । इति । अब्रवीत् । सवितृप्रसूत इति सवितृ-प्रसूतः । एव । एनत् । ब्रह्मणा । देवताभिः । प्रतीति । अगृह्णात् । सः । अबिभेत् । प्राश्नन्तमिति प्र-अश्नन्तम् । मा ।

चक्षुःस्थानीय मण्डल सर्वलोकोपजीवि न हि कस्यचित् हिंस्य भवति । तस्मात् सूर्य पश्यति नाहमिति । त दृष्ट्वा पश्यन्न पश्यतीति न हिंस्य । अथ 'देवस्य त्वा' (इति) मन्त्रेण सवित्राऽनुज्ञातो देवताभावेन [7]प्रतिगृह्णन् प्रतिगृह्णातीति न माष्य । 'अग्नेस्त्वाऽऽस्येन'

च पूषा मन्त्रमन्तरेण [53]तस्य प्राशित्रस्य [54]दन्तैर्बलात् [55]दशन कृत्वा प्राश्य [56]तदन्नदशनोपघातेन स्वकीयान् दन्तान् पातितवान्। यस्मादेव तस्मात् [57]पूष्णो सर्वत्र [58]चरौ पिष्टमेव भाग कुर्यात्। तत देवा त दन्तहीन पूषणमुद्दिश्य परस्परम् अब्रुवन्–अय पूषा व्यार्धि समृद्धिरहितोऽभूत् [59]यस्मात् तस्मादय प्राशित्रानर्हं अभूत् इति विचार्य तत् प्राशित्र बृहस्पतये समर्पयन् । स बृहस्पति मनस्येवम् अबिभेत्। यथा पूषा प्राशित्र प्राश्याऽऽर्तिमगमत् [60]इत्थम् अन्योऽपि य प्राभाति स आर्तिम् [61]आऽरिष्यति गमिष्यति इति [61] ॥

स इति ॥ अथ दर्शनमन्त्रमुत्पादयति–'स एत मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रति पश्यामीत्यब्रवीन्न हि सूयस्य चक्षु किं च न हिनस्ति' इति ॥ मनुष्यचक्षु केनापि रोगेण हिंसित भवति। आरोग्यप्रदस्य सूर्यस्य चक्षु न केनापि हिंस्यते । तस्मादनेन मन्त्रेण [63]पश्यामीत्यथ ॥

स इति ॥ [64]अथ [65]प्रतिग्रहमन्त्रमुत्पादयति–'सोऽबिभेत् प्रतिगृह्णन्त मा हिंसिष्यतीति देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्या प्रति गृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा

७ त३ ल–'प्रतिगृह्णन्' नास्ति ।

५३ अ इ उ पा हा–आत्तस्य श्र–'तस्य' नास्ति। ५४ हा–दन्तेन। ५५ आ दशनम्। ५६ आ क–तदन्न दशनेनोपपाद्य तेन ड१ हो१–तेन दशनोपघातेन। ५७ आ क पूष्ण। ५८ आ क–चरो । ५९ अ इ उ पा हो१–'यस्मात्' नास्ति। ६० ड१ श्र–इत्यमेव। ६१–६१ ड–गमिष्यतीति, अ इ उ जो ना पा श्र हा आरिष्यतीति। ६२ ड१–मनुष्यस्य चक्षु । ६३ ड१–पश्येदित्यर्थ । ६४ अ इ उ जो ना पा हा–'अथ' नास्ति। ६५ ड–प्रतिग्रहणमन्त्र°।

हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् (६) प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते ॥८॥

[ प्राश्नीयाद्धोता यज्ञं निरहरन् तच्चक्षुरास्यं किं चन हिनस्ति सोऽबिभेच्चतुश्चत्वारिꣳशच्च ॥]

हिꣳसिष्यति । इति । अग्ने । त्वा । आस्येन । प्रेति । अश्नामि । इति । अब्रवीत् । न । हि । अग्नेः । आस्यम् । किम् । चन । हिनस्ति । सः । अबिभेत् (६) । प्राशितमिति प्र-अशितम् । मा । हिꣳसिष्यति । इति । ब्राह्मणस्य । उदरेण । इति । अब्रवीत् । न । हि । ब्राह्मणस्य । उदरम् । किम् । चन । हिनस्ति । बृहस्पतेः । ब्रह्मणा । इति । सः । हि । ब्रह्मिष्ठः । अपेति । वै । एतस्मात् । प्राणा इति प्र-अनाः । क्रामन्ति । यः । प्राशित्रमिति प्र-अशित्रम् । प्राश्नातीति प्र-अश्नाति । अद्भिरित्यत्-भिः । मार्जयित्वा । प्राणानिति प्र-अनान् । समिति । मृशते । अमृतम् । वै । प्राणा इति प्र-अनाः । अमृतम् । आपः । प्राणानिति प्र-अनान् । एव । यथास्थानमिति यथा-स्थानम् । उपेति । ह्वयते ॥८॥

[ शत्रा १.८.१.१४,१५; ७.३.२ ]

[8]इत्यग्न्यास्यबुद्ध्या प्राश्नन् प्राश्नातीति, न बाध्यः । ब्राह्मणस्योदरेणेति । ब्राह्मणोदरधिया प्राशित्रं स्थापयन् प्राशितवानिति न हिंसितव्यः । स हीति । बृहस्पतिर्हि ब्राह्मणतरः तस्मादेवमुच्यते इति ॥

अप वा इत्यादि । गतम् ॥

इति द्वितीये षष्ठेऽष्टमोऽनुवाकः ॥

देवताभिः प्रत्यगृह्णात्' इति ॥ ब्रह्मणा मन्त्रेण, देवताभिः [66]अदन्यादिभिः । तादृशः प्रतिग्रहो न हिनस्ति, तस्मात् तेन मन्त्रेण प्रतिगृह्णीयात् ।

स इति ॥ अथ प्राशनमन्त्रस्य भागत्रयं क्रमेणोत्पादयति– 'सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्य उदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः' इति । प्रौढमरण्यं दहतोऽपि [67]दावाग्नेर्मुखम् आस्यं शुष्ककाष्ठकण्टकादिना केनापि न हिंस्यते । श्राद्धादौ परान्नं भुञ्जानस्यापि ब्राह्मणस्य उदरं केनापि प्रत्यवायेन हिंसितं न भवति । यस्माद्बृहस्पतिः ब्रह्मिष्ठः मन्त्रवित्तमः तस्मात् ' बृहस्पतेः ब्रह्मणा ' [68]इत्येवमपि मन्त्रभागं पठेत् ॥

८. त्रि-इति मुद्रया ।

६६. अ.इ.उ.पा.हा.हो१-अश्विन्यादिभिः । ६७. हा-दवाग्नेर्मुखम्, इ.ह१-'मुखम्' नास्ति । ६८. आ.क-इत्येतदपि ।

अपेति ॥ पञ्चक सूत्रकारेण– "इन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति । वाङ्म आसन्निति यथालिङ्गमङ्गानि" (आपश्रौ ३ २० १२) इति, तदेतदभिमर्शनं शिरोमार्जनपूर्वकं विधत्ते– 'अप वा एतस्मात् प्राणाः क्रामन्ति य प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्स मृताऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुपह्वयते' इति ॥

अत्र मीमांसा ॥ षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

"इडाद्यर्थस्य नाशेऽन्यः शेषाद्ग्राह्यो न वाऽग्रिमः ।
शेषसत्त्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात्" ॥ (जैन्या ६ ४ ३) ॥

इडाभक्षणार्थं प्राशित्रभक्षणार्थं वाऽवत्तं यदि नश्येत् तदा शेषस्य सद्भावात् तस्माच्छेषात् पुनरवदेयमिति चेत् । न । तस्य शेषस्य अन्यथाप्रतिपत्त्या शंयुवाककालीनभक्षरूपयाऽवरुद्धत्वात् । तस्मादवत्तनाशे द्रव्याभावादिडादिकं लुप्यते ।

तत्रैवान्यच्चिन्तितम्–

"शेषभक्षाः किमन्येषामृत्विजां वाऽन्यभक्षणम् ।
ऋत्विजां परिसंख्यानात् स्वाम्यप्राप्तौ ततोऽन्तिमः" ॥ (जैन्या ६ ४ ४) ॥

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षास्तेषां भक्षणमृत्विग्भ्योऽन्यैः कार्यम् । कुतः ? ऋत्विजां परिसंख्यातत्वात् । ऋत्विजां कर्मकरत्वादेव भक्षप्राप्तौ सत्यां पुनरप्येवमाम्नायते– "यजमानपञ्चमा इडां भक्षयन्ति" (आपश्रौ ३ २ ११) इति । तदेतत् पुनराम्नानं परिसंख्यार्थम् 'यजमानसहिता ऋत्विजः प्राशित्रादिकं न भक्षयेयुः' इत्यर्थः । तस्मादृत्विग्भ्योऽन्येषां प्राशित्रादिभक्षणमिति चेत् । मैवम् । यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते । तस्मादपरिसंख्यातत्वात् ऋत्विजामेवैतत् प्राशित्रादिभक्षणम् ॥

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्–

"प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत ।
दृष्टिप्रकरणादेव प्रकृताविति युज्यते ॥
सतर्दनादिवद्वाक्याद्विकृतौ पूषसंभवात् ।
सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया" ॥ (जैन्या ३ ३ ४३ ४४) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि" (तैस २ ६ ८) इति । तत्र दन्तरहितस्य पूष्णः पिष्टभागत्वं सतर्दनाद्यधिकरणन्यायेन प्रकरणादुत्कृष्यतया विकृतिगामीत्यवगम्यते । तथाऽप्युत्तराधिकरणेषु तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते ॥

---

६९–६२ अ इ उ पा–शेषा वाऽन्यो न चाग्रिमः । ७० अ इ उ पा–°प्रतिपत्त्यन्तरोधनात् । ७१–७१ अ इ उ पा–°भक्षण चाऽवत्त ड हो१–°भक्षणार्थं चाऽवत्तम् । ७२ ड–मैवम् । ७३ अ इ उ पा–°प्रतिपत्तौ । ७४ अ इ उ पा–°काले भक्ष° । ७५ अ आ इ उ क ख ड ड१ भृ हा हो१–इडायाः । ७६ अ इ उ पा–कृताऽन्तिमः । ७७ ड ड१–कर्तव्यम् । ७८ ड परिसंख्यानात् अ इ उ पा–परिसंख्या कर्तुं हो१–परिसंख्यानार्थम् । ७९ ड भक्षणप्राप्तौ । ८० अ इ उ जो पा हा तत्रैव एवमा° । ८१ अ इ उ पा–परिसंख्या कर्तुं ड१ भृ परिसंख्याकार्यम् । ८३ अ इ उ जो ना पा हा– प्राश्नन्ति । ८२ आ क– ऋत्विजामेव । ८४ ड–°दृष । ८५ भृ–पूर्वंभवात् । ८६ हो१ पुनरप्युक्तेर° । ८७ क ड ड१ हो१–°दुत्कृष्यतया । ८८ ड१ –तथाऽप्यन्तराधि° ।

तत्रैवान्यच्चिन्तितम् —

" चरौ पशौ पुरोडाशे चरावेवोत पेषणम्।
विशेषादर्शनादेतत् सर्वेष्वपि विधीयते ॥
[89]आसत्वान्न पुरोडाशे [90]हृदाद्याकारनाशनात्।
[91]-न पशौ पारिशेष्येण-[91] चरावेव हि पेषणम् " ॥ (जैन्या ३·३·४५-४६ ) ॥

" पौष्णं चरुं निर्वपेत् " (द्र.मैसं २·१·१; तैसं २·२·१ ) इति चरुर्विहितः। " पौष्णं श्याममालभेतान्नकामः " ( तैसं २·१·६ ) इति पशुविधिः। 'पशुमालभ्य पुरोडाशं निर्वपति' इत्येतच्चोदकेन पौष्णपशौ प्राप्तम्। [92]तत्र 'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इति न्यायेन पुरोडाशस्य पूषा देवता। तत्र [93]पूर्वोक्तपेषणं विषयीकृत्योच्यमानाः [94]संशयपूर्वोत्तरपक्षाः [95]स्पष्टाः ॥

तत्रैवान्यच्चिन्तितम् –

" [96]-द्विदेवकेऽपि किं पिंष्यादुत पूषैकदेवके-[96] ।
द्विदेवकेऽपि तत्पूष्णः सत्वात् पेषणभागिनः ॥
देवताविफलत्वेन पेषणं न प्रयोजयेत्।
यागस्य [97]तत्त्वे [98]भागोक्तेर्न यागान्तरगामि तत् " ॥ (जैन्या ३·३·४७-४८ ) ॥

[99]राजसूये श्रूयते– " सोमापौष्णं चरुं निर्वपेदैन्द्रापौष्णं चरुम् " (द्र.तैसं १·८·८) इति। तत्र द्विदेवके चरौ पिष्टभाजः पूष्णः सत्त्वात् पेषणं पूषार्थं कर्तव्यमिति [100]चेत्। तत्रेदं वक्तव्यम्– किं पेषणस्य देवता प्रयोजिका किं वा [101]यागः? नाऽऽद्यः। यागमन्तरेण [102]केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति। पौष्णस्य यागस्य पेषणप्रयोजकत्वे [103]तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नार्हति। '[104]-पूषा प्रपिष्टभागः' इत्यत्र-[104] यागो न श्रुत इति चेत्। मैवम्। [105]भागशब्दान्यथानुपपत्त्या यागस्य [106]कल्प्यत्वात्। न हि देवतात्वमन्तरेण [107]पिष्टद्रव्यभाक्त्वं सिध्यति। सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः [108]कल्प्यते। [109]तस्मादेकदेवकयागस्य पेषणप्रयोजकत्वान्न द्विदेवके यागे पेषणमस्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥

---

८९. अ.इ.उ.पा–पृथक्त्वान्न। ९०. अ.इ.उ.पा– विकृतिनाशनात्। ९१–९१. अ.इ.उ.पा– पशौ न परि°; जो.ना.हा–पशौ न पारि°। ९२. अ.इ.उ.पा–'तत्र' नास्ति। ९३. ड.ड१–पूर्वोक्तं पेषणम्। ९४. अ.इ.उ.पा–'संशय°' नास्ति। ९५. ड.ड१–विस्पष्टाः। ९६–९६. अ.इ.उ.ड.पा– द्विदेवत्येऽपि किं न स्यादुत पूषैकदेवते; जो.ना.हा.–द्विदेवत्येऽपि किं पिंष्यात् पूषैकदेवते। ९७. अ.इ.उ.जो.पा.हा–तत्त्वे। ९८. अ.इ.उ.ड१.पा.ग्रं.हो१–भेदोक्तेर्न। ९९. ड–राजसूयप्रकरणे। १००. अ.उ.पा–'चेत्' नास्ति। १०१. ड.हो१–यागस्य। १०२. उ.–°देवतायाः। १०३. अ.इ.उ.ड.जो.ना.पा.हा.हो१–'तु' नास्ति। १०४–१०४. अ.इ.उ.पा–'पूषा प्रपिष्ट भाग इति' नास्ति। १०५. अ.इ.उ.पा–द्रव्यस्यान्यथा°; जो.हा–भागशब्दस्य भागशब्दा°। १०६. ड–कल्प्यस्य देवता स्यात्। १०७. अ.इ.उ.पा– पिष्टभागत्वं, जो.ना.हा–पिष्टद्रव्यभागत्वम्। १०८. हो१–कर्तव्यः। १०९. हा–°देवदेवतायागस्य।

अग्नीध आ दधात्यग्निमुखानेवर्तून् प्रीणाति समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्सकृत्सकृत् सं मार्ष्टि पराङिव ह्येतर्हि यज्ञश्चतुः

अग्नीध इत्यग्नि-इधे । एति । दधाति । अग्निमुखानित्यग्नि-मुखान् । एव । ऋतून् । प्रीणाति । समिधमिति सम्-इधम् । एति । दधाति । उत्तरासामित्युत्-तरासाम् । आहुतीनामित्या-हुतीनाम् । प्रतिष्ठित्या इति प्रति-स्थित्यै । अथो इति । समिद्वतीति समित्-वति । एव । जुहोति । परिधीनिति परि-धीन् । समिति । मार्ष्टि । पुनाति । एव । एतान् । सकृत्सकृदिति सकृत्-सकृत् । समिति । मार्ष्टि । पराङ् । इव । हि । एतर्हि । यज्ञः । चतुः ।

अग्नीध इति ॥ आग्नीध्रभागविधिः । [१]ऋतून् कालस्य प्रवर्तकान् अग्निसहितान् प्रीणयति । [२]फिङन्तोदात्तत्वम् ( फि १ ) । [२]समिधमिति ॥ आनूयाजिकीन् [३]परिधीन् [३]संमार्ष्टि इत्यादि । गतम् । पराङिवेति । अपुनरावृत्तः [४]इव इदानीं [४]यज्ञः, तस्मात् समार्जनस्य

अष्टमे स्पष्टमुदितमिडाप्राशित्रभक्षणम्[१] ।
अनूयाजाः [२]सूक्तवाको नवमे द्वयमीर्यते ॥

[३]अग्नीध इति ॥ तत्राऽऽदौ तावदाग्नीध्रभागस्य प्रदानं विधत्ते– 'अग्नीध आ दधात्यग्निमुखानेवर्तून् प्रीणाति' इति ॥ पौरोडाशिके [३]तु काण्डे "अग्नीधे प्रथमायाऽऽदधाति" ( तैब्रा ३.३.८ ) इति [४]भागप्रदानस्य प्राथम्यमुक्तम्[४] । तस्मादाग्नीध्रेणेध्यमानस्याग्नेर्मुखत्वम् । तस्मिन्नेव काण्डे – "सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति" ( तैब्रा ३.३.८ ) [५]इत्युक्तपडवत्तविधानेन सख्यासामान्यादृतु-संबन्धः[५] । तस्मादग्निमुखानामृतूनां प्रीतिः ॥

समिधमिति ॥ यदुक्तं सूत्रकारेण– "अनुज्ञातो ब्रह्मणाऽऽग्नीध्रः समिधमादधात्येषा ते अग्ने समित्" ( आपश्रौ ३.४.६ ) इति, तदेतद्विधत्ते– 'समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति' इति ॥ अनूयाजा उत्तरा आहुतयस्ताश्चास्यां समिधि प्रतितिष्ठन्ति । किं च, समिद्युक्त एवाग्नावनूयाजान् [६]जुहोति ॥

परिधीनिति ॥ [६]पुनःशोधनं विधत्ते– 'परिधीन्त्सं मार्ष्टि पुनात्येवैनान्' इति ॥

सकृत्सकृदिति ॥ पूर्ववदावृत्तिं प्रसक्तां वारयति– 'सकृत्सकृत् सं मार्ष्टि पराङिव ह्येतर्हि यज्ञः' इति ॥ योऽयमाघारयोर्मध्ये पूर्वोक्तः [७]संमार्गस्तस्य काले[७] यज्ञः पराग्भूतो न भवति किंतु प्रत्यग्भूतः । तत

१. मै४–पडवत्तान् । २–२. तं३.मै.लं.हो–'समिधमिति......पदान्तोदात्त्वम्' नास्ति ।

१. ड–°प्राशित्रलक्षणम् । २. आ.क–सूक्तवाकः । ३. ड१–'तु' नास्ति । ४–४. अ.आ.इ.उ.बो.पा.हा–भागप्रदानं प्रथमस्य युक्तम् । ५–५. आ.हा–°पडवत्तसंख्या°; इ–इति पडवत्त° । ६. क.ड.ड१.शं.हो१–'पुनः' नास्ति । ७–७. अ.इ.बो.ना.पा.हा–'संमार्गः स्वकाले', उ–'संमार्गस्तस्य काले' नास्ति ।

मं पद्यते चतुष्पादः पशवः पशूनेवाव रुन्द्धे ब्रह्मन् प्र स्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितो (१) यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमा रभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत् तूष्णीमासीतासंप्रत्तो

समिति। पद्यते। चतुष्पाद इति चतुः-पादः। पशवः। पशून्। एव। अवेति। रुन्द्धे। ब्रह्मन्। प्रति। स्थास्यामः। इति। आह। अत्र। वै। एतर्हि। यज्ञः। श्रितः (१)। यत्र। ब्रह्मा। यत्र। एव। यज्ञः। श्रितः। ततः। एव। एनम्। एति। रभते। यत्। हस्तेन। प्रमीवेदिति प्र-मीवेत्। वेपनः। स्यात्। यत्। शीर्ष्णा। शीर्षक्तिमानिति शीर्षक्ति-मान्। स्यात्। यत्। तूष्णीम्। आसीत। असंप्रत्त इत्यसं-प्रत्तः।

आवृतिर्न युज्यते इति। बहुरिति सकृदग्निमित्यनेन सह। 'ब्रह्मन् प्रस्थास्याम' इति संप्रैषः। एतर्हीति। अस्मिन् काले। "इदमो हिल्" (पा ५ ३ १६), "एतेतौ रथो" (पा ५ ३ ४) इत्येतादेशः। प्राशित्रपरिहरणप्रभृतिब्रह्मसकाशे यज्ञस्य स्थितत्वात् ^Vब्रह्मन् ^Vप्रस्थास्याम ^Vइति। ^Vतत ^Vएव आरभ्य यज्ञशेषं परिसमाप्यत इति। यद्धस्तेनेत्यादि। अथ ब्रह्मा प्रस्थानं प्रसुवन् यदि हस्तलिङ्गेन ^Vप्रमीवेत् प्रस्थापयेत् वेपनशीलः ^Vस्यात् चलनशीलः स्यात्। चलनशब्दार्थादिति युच्। मीङ् गतौ। भौवादिकौऽन्तर्भावितण्यर्थः। यथा–' पश्चाद्वात प्रति मीवति' (तैस २ ४ ९) इति। यदि शिरःकम्पनादिना लिङ्गेन प्रमीवेत् ^Vशीर्षक्तिमान् शिरोरोगवान् ^Vस्यात्। अथ यदि ^Vतूष्णीं किंचिदप्यप्रतिपद्यमानः ^Vआसीत यज्ञस्य अप्रवृत्तिरेव ^Vस्यात्।

ऊर्ध्वं प्रधानयागानां [8]प्रवर्तिष्यमाणत्वात्। [9]अनूयाजसमिधः ऊर्ध्वं समार्गकाले तु [10]यज्ञः पराभूतस्ततः ऊर्ध्वं [10]प्रधानयागस्य कस्याप्यभावात्॥

चतुरिति॥ अग्नेरपि सकृत्समार्गमध्याहृत्यानेन सह परिधित्रयगता समार्गसंख्या प्रशंसति– 'चतु स पद्यते चतुष्पाद पशव पशूनवाव रुन्द्धे' इति॥

ब्रह्मन्निति॥ "अथानूयाजान् यद्" गमिष्यतोऽध्वर्योर्ब्रह्माणं प्रत्यनुज्ञापनमनुत्पाद्य तस्य तात्पर्यं दर्शयति– 'ब्रह्मन् प्र स्थास्याम इत्याहात्र वा एतर्हि यज्ञः श्रितो यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमा रभते' इति॥ यस्मिन्नाहवनीयस्य दक्षिणे देशे [11]ब्रह्मा वर्तते [12]अत्र एव एतस्मिन् काले [13]यज्ञ आश्रितस्तत्समीपे स्थित्वा होतव्यत्वात्। अतो ब्रह्मानुज्ञापनेन [13]यज्ञ यस्मिन् देश आश्रित [13]तत [13]एव देशात् यज्ञम् [14]उपक्रान्तवान् भवति॥

यदिति॥ ब्रह्मणो [14]याचैवानुज्ञापनदशायां विधत्ते– 'यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत् तूष्णीमासीतासंप्रत्ता यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत

८ ग२. हो१–प्रवर्त्स्यमानत्वात्। ९ ङ इ १ ग२ हो१–अनूयाजसमीपस्थ°। १० अ इ उ ओ ग पा हा–प्रधानस्य। ११ ट१–अनुज्ञावार्थम्। १२ ङ–तत्प्रदेशात्। १३ अ इ उ क ओ पा ना हा–उपाकृतवान्। १४ अ इ उ ओ ग पा हा–याचैवाश°।

यज्ञः स्यात् प्र तिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्ततं एवैनꣳ सं प्र यच्छति देवं सवितरेतत् ते प्रा(२)ऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्यै

---

यज्ञ. । स्यात् । प्रेति । तिष्ठ । इति । एव । ब्रूयात् । वाचि । वै । यज्ञः । श्रित । यत्र । एव । यज्ञ· । श्रित. । तत. । एव । एनम् । सम । प्रेति । यच्छति । देवं । सवित । एतत् । ते । प्रेति (२) । आह । इति । आह । प्रसूत्या इति प्र-सूत्यै । बृहस्पतिः । ब्रह्मा । इति । आह । स । हि । ब्रह्मिष्ठ । सः । यज्ञम् । पाहि । स । यज्ञपतिमिति यज्ञ-पतिम् । पाहि । स । माम् । पाहि । इति । आह । यज्ञाय । यजमानाय । आत्मने । तेभ्य । एव । आशिषमित्या-शिषम् । एति । शास्ते । अनार्त्यै ।

---

तस्मात् ‘प्रतिष्ठ’ इति ब्रूयात् एव । वाचि स्थितं यज्ञ तत आदाय सम्प्रयच्छति । “समवप्रविभ्य°” ( पा १·३·२२ ) इत्यात्मनेपदाभावश्छान्दस ॥

देव सवितः इत्यादि । गतम् ॥

स यज्ञमित्यादि । यज्ञादिभ्यः त्रिभ्य. रक्षणम् अनेन आशिषम् आशास्ते । तेभ्य एव अनेन सर्वामपि आशिषम् आशास्ते ॥ अनार्त्यायेति ॥

---

एवैनꣳ सं प्र यच्छति’ इति ॥ किमयं ब्रह्मा [15]हस्ताग्रसंचालनेन [16]अनुजानीते किं वा शिरश्चालनेनाथवा तूष्णीम् एवाऽऽस्त आहोस्वित् ‘प्रतिष्ठ’ [17]इत्यनया वाचा? नाऽऽद्यः । कम्पप्रसङ्गात् । यदि हस्तचालनेन प्रमीवेत् प्रेरयत् तदा [18]शरीरे वातादिजन्य. कश्चित् [19]कम्परूपो रोग[19] उत्पद्येत ॥ [20]शिरसाऽभ्यनुज्ञानेन शीर्षक्तिमान् शिरोरोगवान् भवेत् । तूष्णीम् [21]अवस्थाने यज्ञ असप्रवृत्त· सम्यक् [22]प्रवर्तितो न [23]भवेत् । तस्मात् ‘प्रतिष्ठ’ इति अनया वाचैवाभ्यनुज्ञान परिशिष्यते । तथा सति यज्ञस्य मन्त्ररूपाया वाचि [24]आश्रितत्वात् [25]तद्योग्यादाश्रयाद्यज्ञ प्रयच्छति ॥

देव इति ॥ यदुक्तं सूत्रकारेण – “ब्रह्मन् प्रस्थास्याम इत्युच्यमाने देव सवितरेतत् ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीँ प्रतिष्ठेति प्रसौति” ( आपश्रौ ३·२०·८ ) इति, सोऽयं शाखान्तर आम्नातो मन्त्र , तस्यायमर्थः – हे सवितर्देव, यदेतत् प्रस्थास्याम [26]इत्यनुज्ञापन तदेतत् [27]ते तवाग्रे[27] अध्वर्यु प्राह तस्मात् त्वं प्रसुव च प्रयज च । बृहस्पति·

---

१५ ङ–हस्ताग्रे चालनेन, ङ१–हस्ताग्रचालनेन । १६. ङ–अनुजानाति । १७ आ–इत्येतया । १८ ङ हो१–‘शरीरे’ नास्ति । १९–१९ आ.हा–कम्परोग । २० आ–°नुज्ञाने । २१. ङ ङ१–आस्थाने । २२ आ ङ–प्रवृत्त । २३. ङ ङ१– भवति यज्ञम् । २४ आ–श्रितत्वात् । २५. ङ ङ१–°श्रयादेव यज्ञम् । २६ ग्र–इत्युच्यमानानुज्ञापनम् । २७–२७. आ–तव ।

आश्राव्याऽऽह दे॒वान् य॒जेति॑ ब्रह्मवा॒दिनो॑ वदन्तीष्टा दे॒वता॒ अथ॑ कत॒म ए॒ते दे॒वा इति॒ छन्दा॒ꣳसीति॑ ब्रूयाद्गायत्री त्रि॒ष्टुभं॒ (३) जग॑तीमित्यथो॒ खल्वा॑हुर्ब्राह्म॒णा वै छन्दा॒ꣳसीति॒ ताने॒व त॑द्यजति

---

आ॒श्राव्येत्या॑ - श्राव्य॑ । आ॒ह॒ । दे॒वान् । य॒ज॒ । इति॑ । ब्र॒ह्म॒वा॒दिन॒ इति॑ ब्रह्म - वा॒दिनः॑ । व॒द॒न्ति॒ । इ॒ष्टा । दे॒वता॑ । अथ॑ । क॒त॒मे । ए॒ते । दे॒वाः । इति॑ । छन्दा॑ꣳसि । इति॑ । ब्रू॒या॒त् । गा॒य॒त्रीम् । त्रि॒ष्टुभ॑म् (३) । जग॑तीम् । इति॑ । अथो॒ इति॑ । खलु॑ । आ॒हु॒ः । ब्रा॒ह्म॒णाः । वै । छन्दा॑ꣳसि । इति॑ । तान् । ए॒व । तत् । य॒ज॒ति॒ ।

---

'आश्राव्य' इत्यादिरनूयाजविधिः । 'ब्रह्मवादिनः' इत्यादिभिः पर्यनुयोगः । 'छन्दांसि' इत्युत्तरम् । गायत्रीमित्यादि । 'देवान् यज' इत्यनेन एकवाक्यत्वात् द्वितीया । [v]अथो अपि [v]खलु [v]आहुः पुरानिदः [v]ब्राह्मणाः [v]छन्दांसि [v]इति, तद्दर्शनसिद्धित्वात् तेषाम् । तस्मात् ब्राह्मणान् [v]एव अनूयाजैः [v]यजति इति ।

---

एवात्र ब्रह्मा। हे बृहस्पते, स त्वं यज्ञं पाहि [28] यज्ञपतिं मनुष्यब्रह्मरूप-[28] मामपि पाहि। हेऽध्वर्यो, यत् त्वयोक्तं तत् ॐ तथाऽस्तु अनूयाजान् यष्टुं प्रस्थानं कुर्विति। तस्यैतस्य [29]शाखान्तरोक्तस्य [30]मन्त्रस्य भागान् व्याचष्टे – 'देव सवितरेतत् ते प्राऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्यै' इति ॥

आश्राव्येति ॥ यदुक्तं सूत्रकारेण- "औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सङ्क्रम्य प्रान्तोऽग्रेणाऽऽघारसम्भेदं प्रतीचोऽनूयाजान् यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान् यजेति प्रथमं सम्प्रेष्यति यजयजेतीतरौ" (आपश्रौ ३ ५ १) इति, तत्राऽऽश्रावणपूर्वकं प्रथमयागसम्प्रैषं विधत्ते— 'आश्राव्याऽऽह देवान् यजेति' इति ॥

ब्रह्मवादिन इति ॥ अथ पूर्वोत्तरपक्षाभ्यामनूयाजार्थं देवतासद्भावं [31]साधयति— 'ब्रह्मवादिनो
८ वदन्तीष्टा देवता अथ कतम एते देवा इति छन्दांसीति ब्रूयात् गायत्रीं त्रिष्टुभं जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दांसीति तानेव तद्यजति' इति ॥ या [v]देवता अग्निप्रजापत्यादयो यष्टव्यास्ता सर्वाः पुरोडाशादिभिरिष्टाः [v]इष्टा । [v]अथ यान् देवान् यष्टुमयमध्वर्युः प्रयतते [32]ते [v]देवाः [v]कतमे ? न त्ववशिष्टाः [33]कश्चिदेवाः सन्तीति पूर्वः पक्षः । अत्र [34]सिद्धान्तः – [v]छन्दांसि अवशिष्टानि [v]इति उत्तरं [v]ब्रूयात्, [v]गायत्रीं [v]त्रिष्टुभं [v]जगतीं च यष्टुमध्वर्यो [35]यजेति । अपि [36]वान्ये तत्र विशेषम् [v]आहुः– छन्दसां ब्राह्मणैरभेदत्वात् [v]ब्राह्मणाः एव छन्दोरूपा [v]इति । [37]तस्मात् ब्राह्मणान् [v]एव अध्वर्युः [v]यजति इत्युत्तरम् । ब्राह्मणजात्यभिमानी [38]योऽस्ति स एवानूयाजदेवतेति[39] तात्पर्यार्थ ॥

---

२८. ङ होर-यज्ञपति मनुष्य तं ब्रह्मणम् । २९. ग.होर-शाखान्तर° । ३० अ इ उ ची ना पा हा-'मन्त्र' नास्ति । ३१ आ-दर्शयति । ३२ ट-'ते' नास्ति । ३३ ट-केचन देवा । ३४ होर-सिद्धान्ते, ग.-सिद्धान्तो । ३५ ट ग.होर प्रवरः । ३६ होर-यान्ये । ३७ ट र ग. होर-न्ते । ३८-३९ ङ-वै ऽयमेव एवात्र देवोऽत्र, हर-योऽयमस्ति स एवात्र देवोऽत्र ।

देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्
यदनूयाजान् यजत्यग्निमेव तत् समिन्द्धे

---

देवानाम् । वै । इष्टा । देवता । आसन् । अथ । अग्नि । न । उदिति । अज्वलत् । तम् । देवा । आहुतीभिरित्याहुति-भि । अनूयाजेष्वित्यनु-याजेषु । अन्विति । अविन्दन् । यत् । अनूयाजानित्यनु याजान् । यजति । अग्निम् । एव । तत् । समिति । इन्द्धे । ५

---

देवाना वा इत्यादि । गतम् ।

---

देवानामिति ॥ अथानूयाजान् विधत्ते–'देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् त देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान् यजत्यग्निमेव तत् समिन्द्धे' इति ॥ पुरा कदाचिद्देवा याग कृतवन्तस्तत्राग्निप्रतापयादयो यदा देवै इष्टा तदा तद्यागादूर्ध्वमाहुत्याधारभूत अग्नि [39]प्रज्वलित न अभूत् । तत देवा अनूयाजेषु प्रविश्य [40]निलीन [41]तम् अग्निमन्विष्याऽऽहुतिभिर्लब्धवन्त । तस्मात् अनूयाजान् यजेत्, तेन अग्निम् एव प्रज्वालितवान् भवति ॥

[42]एषा चानूयाजाना मन्त्रास्तदीये मन्त्रकाण्ड एवाऽऽम्नाता –"देव बर्हि । वसुवने वसुधेयस्य वेतु । देवो नराशꣳस । वसुवने वसुधेयस्य वेतु । देवो अग्नि स्विष्टकृत् । सुद्रविणा मन्द्र कवि । सत्यमन्माऽऽयजी होता । होतुर्होतुरायजीयान् । अग्ने यान् देवानयाट् । याꣳ अपिप्रे । ये ते होत्रे अमत्सत । ताꣳ ससनुषीꣳ होत्रा देवगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभू । वसुवने वसुधेयस्य नमोवाके वीहि" (तैब्रा ३ ५ ९) इति ॥ देवं द्योतनशील बर्हिर्नामक यदग्निस्वरूप तदेतद्वसुधेयस्य वेतु । [43]आज्यं वसुरूप यदेतदग्नावाधेयं [43] तदेतत् [44]भक्षयतु । किमर्थम्? [45]वसुवने [46]वसुनो धनस्य वनन भजनं वसुवस्तस्मै, यजमानस्य [47]धनप्राप्त्यर्थमित्यर्थ । एव नराशसनामकेऽप्यग्नौ योजयितव्यम् । [48]यस्तु स्विष्टकृन्नामकोऽग्नि सोऽयं सुद्रविणा शोभनधन मन्द्रो हर्षणशील, कविर्विद्वान्, सत्यमन्मा सत्यमनन, आयजी शास्त्रीयया मर्यादया यष्टा, होता देवानामाह्वाता । होतुर्होतुरायजीयाँल्लोके यो यो होता [49]अस्ति तस्मात् सर्वस्मादतिशयेन [50]शास्त्रीयमर्यादामनुल्लङ्घ्य यष्टा । हेऽग्ने, ईदृशस्त्व यान् देवानयाट् इष्टवानसि, याश्च देवानपिप्रे प्रीणितवानसि, ये च देवास्ते तव होत्रे होतृकृत्ये [51] अमत्सत यजने [51] अमाद्यन् हृष्टवन्त, दिवि स्थितेषु देवेषु ससनुषा हविर्दत्तवती देवगमा देवानेव गच्छन्ती ता होत्रा होतृक्रियामिममस्मदीय यज्ञ [52]प्रत्येरय [53]आभिमुख्येन प्रापय, अस्मदीये यज्ञे सर्वदेवतुष्टिकरीं होतृक्रिया त्वमनुतिष्ठेत्यर्थ । हेऽग्ने, त्व स्विष्टकृद्धोता चाभूर्यदस्माभिरिष्ट तच्छोभन त्वया कृत तादृशो होमस्य कर्ताऽभू । अतो नमोवाके यज-

---

३९ –अ इ उ जो ना पा हा–प्रज्वालित, ड–'प्रज्वलित' नास्ति । ४० ड–लीनम् । ४१. आ–'तम्' नास्ति । ४२ आ उ–एतेषाम् । ४३–४३ अ इ उ जो ना हा–आह्वय यदेत°, ग्र. हो१–आज्यवस्तुरूप यदेत°, ड१–आज्य वस्तुरूप यदेत° । ४४ क ड हो१–भजताम् । ४५ अ इ उ जो ना पा हा–'वसुवने' नास्ति । ४६ ड–'वसुन' नास्ति । ४७ ड ड१ ग्र हो१–धनप्राप्तये । ४८ आ क ड–'यस्तु' नास्ति, अ इ उ जो ना पा हा–अग्नि । ४९ आ–तस्मात्, ड–'अस्ति' नास्ति । ५०. आ–°मर्यादानुल्लङ्घनेन । ५१–५१. हो१–यजमाने अमत्सत, भृ–यजने अमत्सत । ५२ आ क–एरय, हा–प्रेरय । ५३. अ इ उ पा–आभिमुख्ये ।

मानस्य नमस्कारोक्तौ सत्यां वसुवने धनस्य संभजनाय वसुधेयस्य [54]वीहि अस्माबाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय ॥

तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः [55]साध्याः अनूयाजाः प्रपञ्चिताः ॥

अथ प्रस्तरप्रहरणाङ्गभूतः सूक्तवाको व्याख्यातव्यः । सूक्तवाकस्यानूयाजानन्तरभावित्वं बौधायनेन दर्शितम्– 'अनूयाजानां प्रथमं यजति देवं बर्हिर्वसुवने वसुधेयस्य वेत्विति देवो नराशंसो वसुवने वसुधेयस्य वेत्विति द्वितीयं देवो अग्निः स्विष्टकृदिति तृतीयमनवानमनूयाजान् यजतीति ब्राह्मणमुत्तमे वाऽमत्सतेति व्यनिति यदा जानाति [56]सूक्तवाकाय सूक्ता ब्रूहीति[56] तदा सूक्तवाकमन्वाहेदं द्यावापृथिवी इति प्रतिपद्य'' इति । सोऽयं सूक्तवाकस्य प्रथमो भागो मन्त्रकाण्ड [57]एवमाम्नातः– ''इदं द्यावापृथिवी भद्रमभूत् । आर्ध्म सूक्तवाकम् । उत नमोवाकम् । ऋध्यास्म सूक्तोच्यमग्ने । त्वꣳ सूक्तवागसि । उपश्रितो दिवः पृथिव्योः । ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगये जीरदानू । अत्रस्नू अप्रवेदे । उरुगव्यूती अभयकृतौ । वृष्टिद्यावा रीत्यापा । शंभुवौ मयोभुवौ । ऊर्जस्वती च पयस्वती । च सूपचरणा च स्वधिचरणा च । तयोराविदि'' (तैब्रा ३.५.१०) इति ॥ हे द्यावापृथिवी, इदमीदृशं भद्रं [58]कल्याणमभूत् । कीदृशमिति तदुच्यते । ते वयं सूक्तवाकमार्ध्म, श्रद्धालुरयं यजमानः सम्यगनेन हविर्दत्तम् [59]इत्यादीनि वाक्यानि सूक्तानि तेषां सूक्तानां देवैर्मनुष्यैः [60]वा वचनं[60] वाकस्तद्यथा भवति तथा समृद्धिं गता. [61]स्मः । अथवा ''अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत'' (तैब्रा ३.५.१०) इत्यादीनि सूक्तानि तेषां वचनमत्र यथा भवति तथा वयमृद्धिं [62]गताः । अपि च 'नमो देवेभ्यः' इति 'उक्तिर्नमोवाकः, स यथा भवति तथा वयमृद्धिं प्राप्ताः । हेऽग्ने, त्वया सूक्तोच्यं यजमानः [63]सम्यक् हविर्दत्तवानित्येतादृशं सूक्तं वक्तव्यं, तेन वयमृध्यास्म समृद्धिं प्राप्ता भूयास्म । [64]यथा त्वं द्यावापृथिव्योरुपश्रितोऽवस्थितो [65]भूत्वा सूक्तवागसि सूक्तं वक्तुं क्षमोऽसि । हे यजमान, तव संबन्धिन्यस्मिन् यज्ञे द्यावापृथिव्यावोमन्वती रक्षणवत्यौ स्ताम् । [66]कीदृश्यौ द्यावापृथिव्यौ[66] ? शंगये [67]सुखस्य प्रापयित्र्यौ[67] । जीरदानू [68]वृष्ट्यादिद्वारेण जीवनप्रदात्र्यौ[68] । अत्रस्नू भयरहिते । अप्रवेदे शत्रुमर्दीयाना दोषाणाम् [69]अज्ञापयित्र्यौ । उरुगव्यूती प्रभूततृणोदकयुक्तत्वेन विस्तीर्णगोप्रचारेण, अभयंकृता-वस्मात्स्वभयस्य कर्त्र्यौ, वृष्टिद्यावा वृष्टेः प्रकाशयित्र्यौ । रीत्यापा रीतेः सन्मार्गवृत्तिप्रकारस्य प्रापयित्र्यौ, शंभुवौ रोगाद्यनिष्टशान्तेः प्रापयित्र्यौ । मयोभुवावन्नपानादिसुखस्य प्रापयित्र्यौ । युवयोर्मध्ये द्यौरियमूर्जस्वती वृष्टिरूपरसवती, पृथिवीयं पयस्वती तृणोदकद्वारा [70]बहुलगोक्षीरादियुक्ता । तथेयं द्यौः सूपचरणा [71]देवाधिवासस्थानत्वेन सुष्ठुपचरितव्या । इयं पृथिवी [72]स्वधिचरणा [73]अस्माभिः सुखेनाधिश्रित्य चरितु[73] शक्या । तयोर्द्यावापृथिव्योराविदि आज्ञायां सत्याम्, अग्निरिदं हविरजुषतेत्यनेन वक्ष्यमाणेनान्वयः ॥

---

५४. ह१–श्रेरिति । ५५. अ.आ ह ठ.जो.पा हा–प्रछिदा । ५६–५६. आ.हा–सूक्तवाकानन्तर्या इति, क.ह हो१–सूक्तवाकानन्तर्याऽनुब्रूहीति । ५७. ह१–एवं समाम्नातः । ५८. क.ह.ह१ गे हो१–कल्याणमल्पमभूत् । ५९. आ ह–इत्यादि° । ६० गे–वाचनम् । ६१. ह–स्म । ६२. ह–प्राप्ताः । ६३. ह१–उक्तौ नमो° । ६४ आ–गमृदम् । ६५ क ह ह१ गे हो१–यस्मात् । ६६ क–अभूः ; ह.हो१–अभूः स्यम् । ६७–६७. आ–कीदृशे (शौ), हो१–कीदृशौ । ६८–६८ –अ.ह.उ.प. हा–सुखस्य प्रापयित्री । ६९. ह.ह१.गे.हो१–चिरंजीवयित्र्यौ । ७०. हो१–अभिभवित्र्यौ । ७१. आ–बहुक्षीरा° । ७२. ह.ह१–देवाधि° । ७३. अ.ह उ.जो.ना.पा.हा–स्वधिचरणा भूः । ७४–७४ अ–सुखेनाधिश्रित्य, ह–सुखेनाधिश्रितम् (?) ।

एतदुवै नामाऽऽसुर आसीत् स एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेत(४) दु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुरं यज्ञस्याऽऽशिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिषं गमयत्यार्ध्मे सूक्तवाकमुत नमोवाकमित्याहेदमराल्स्मेति वावैतदाहोपश्रितो

एतदु । वै । नाम । आसुर । आसीत् । स । एतर्हि । यज्ञस्य । आशिषमित्या - शिषम् । अवृङ्क्त । यत् । ब्रूयात् । एतत् (४) । उ । द्यावापृथिवी इति द्यावा - पृथिवी । भद्रम् । अभूत् । इति । एतदुम् । एव । आसुरम् । यज्ञस्य । आशिषमित्या शिषम् । गमयेत् । इदम् । द्यावापृथिवी इति द्यावा - पृथिवी । भद्रम् । अभूत् । इति । एव । ब्रूयात् । यजमानम् । एव । यज्ञस्य । आशिषमित्या शिषम् । गमयति । आर्ध्मे । सूक्तवाकमिति सूक्त - वाकम् । उत । नमोवाकमिति नम - वाकम् । इति । आह । इदम् । अरा स्म । इति । वाव । एतत् । आह । उपश्रित इत्युप - श्रित ।

'एतदुवै' इत्यादि सूक्तवाकविधि । 'एतदु द्यावापृथिवी भद्रमभूत' इति शाखान्तरीय पाठो निन्द्यते । अस्मिन् 'एतदु 'नाम 'आसुर यज्ञफलमात्मीयमकरोत् । तस्मादेतदुशब्दम् उच्चारयन् गतमेव यज्ञफल 'गमयेत् । तस्मात् 'इद द्यावापृथिवी' 'इति ब्रुवन् अस्य कर्मण पतिं 'यजमानम् 'एव यज्ञफल प्रापयति ।

इदमराल्स्मेत्यादि । सूक्तवाकनमोवाकयो ऋद्धया वयमिदानीं ससिद्धा 'इति अयमस्याभिप्राय इति दर्शयति । द्यावापृथिव्योर्हीति । तदधीनसिद्धित्वात् । आशिषमेवेति । 'ओमवन्ती अस्मद्रक्षण

एतद्विति ॥ अस्य सूक्तवाक्यस्य प्रथमवाक्य शाखान्तरेऽन्यथा पठितम् – "एतदु द्यावापृथिवी भद्रमभूत्" इति, तदिद दूषयित्वा स्वशाखापाठ प्रशसति — 'एतदुवै नामाऽसुर आसीत् स एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुर यज्ञस्याऽऽशिष गमयेदिद द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिष गमयति' इति ॥ [७५]एतदुनामा कश्चिद् 'आसुर 'आसीत् । 'स कस्यचिद्यज्ञे[७५] एतस्मिन् सूक्तवाककाले समागत्य 'आयुरा शास्ते । सुप्रजास्त्वमा शास्ते' (तैब्रा ३ ५ १०) इत्यादिकाम् 'आशिष यजमानसबन्धिनीं विनाश्य [७६]स्वसबन्धिनीमकरोत् । तस्मात् 'एतदु द्यावापृथिवी' 'इति यदि होता पठेत् तदाऽऽसुरस्यैवाऽऽशी प्राप्ति स्यात् । अत शाखान्तरपाठ परित्यज्य 'इद द्यावापृथिवी भद्रम्' 'इति 'एव पठेत् । तथा सति यजमानस्यैवाऽऽशी - प्राप्तिर्भवति ॥

आर्ध्मेति ॥ सूक्तवाकनमोवाकशब्दयो क्रियाविशेषणत्व दर्शयति – 'आर्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमराल्स्मेति वावैतदाह' इति । 'इद द्वय यथा भवति तथा समृद्धि प्राप्ता 'इति एव 'एतत् मन्त्रवाक्य ब्रूते ॥

७५–७१ ड१–एतदुनामक कश्चिदासुर कस्यचिद्यज्ञे, ड२–एतदुनामक कश्चिदसुर कस्यचित् राज , श्र–एतदुनामक कश्चिदसुर कस्यचिद्यज्ञस्य । ७६ अ इ उ पा–स्वय सबन्धिनीम् ।

दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी (५) स्तामित्याहाऽऽशिषमेवैतामा शास्ते यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमा शास्ते न प्रमायुको भवति

दिवः । पृथिव्योः । इति । आह । द्यावापृथिव्योरिति द्यावा - पृथिव्योः । हि । यज्ञः । उपश्रित इत्युप श्रितः । ओमन्वती इत्योमन् - वती । ते । अस्मिन् । यज्ञे । यजमान । द्यावापृथिवी इति द्यावा - पृथिवी (५) । स्ताम् । इति । आह । आशिषमित्या शिषम् । एव । एताम् । एति । शास्ते । यत् । ब्रूयात् । सूपावसानेति सु उपावसाना । च । स्वध्यवसानेति सु अध्यवसाना । च । इति । प्रमायुक इति प्र - मायुकः । यजमानः । स्यात् । यदा । हि । प्रमीयत इति प्र - मीयते । अथ । इमाम् । उपावस्यतीत्युप अवस्यति । सूपचरणेति सु उपचरणा । च । स्वधिचरणेति सु अधिचरणा । च । इति । एव । ब्रूयात् । वरीयसीम् । एव । अस्मै । गव्यूतिम् । एति । शास्ते । न । प्रमायुक इति प्र मायुकः । भवति ।

वयौ द्यावापृथिव्यौ स्ताम् इति एताम् । यद्ब्रूयात् इत्यादि । सुष्ठु इमामुपेत्यावस्य निलीयन्ते प्रजा इति सूपावसाना पृथिवी, सुष्ठु इमामधिरुह्यावसन्तीति स्वध्यवसाना द्यौः । व्यत्ययेनाधिकरणे "आतो युच" (पा ३ ३ १२८) । "चित" (पा ६ १ १६३) इत्यन्तोदात्तत्वम् । यद्वा भावे ल्युटि तदन्ते प्रजा इति सूपावसाना पृथिवी । अनो बहुव्रीहौ "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम्[3] ॥

यद्वा हीत्यादि ॥ [3]मृत्युर्हि पृथिवीमुपेत्यावस्यतीति । [4]एवमिमं शाखान्तरीयं पाठं निन्दित्वा पाठान्तरं दर्शयति 'सूपचरणा च' इत्यादि । सुष्ठु इमामुपेत्य चरन्ति जन्तव इति

उपश्रित इति ॥ यज्ञस्याग्निरूपेण [77]पृथिव्या फलरूपेण दिवि चाऽऽश्रितत्व प्रसिद्धमित्येतद्दर्शयति 'उपश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित' इति ॥

ओमन्वतीति ॥ रक्षणवत्यौ स्ताम्' [78]इत्येतादृगाशीरत्र विवक्षितेति दर्शयति– 'ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तामित्याहाऽऽशिषमेवैतामा शास्ते' इति ॥

यदिति ॥ शाखान्तरपठितम् [79]अवसानशब्द दूषयित्वा स्वपाठं प्रशंसति— 'यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै गव्यूतिमा शास्ते न प्रमायुको भवति' इति ॥ 'यदा पुरुषो

३ तै३ त्रि ७ हो–मृत्युभि , मै४–मृता हि । ४ मै हो–एवमिदम् ।

७७ अ १ ३ उ पा हो१–पृथिव्या । ७८ हो–इत्येतादृश्येवात्र । ७९ हो–उपाय° ।

तयो॑रा॒विद्य॒ग्निरि॒दꣳ ह॒विर॑जुप॒तेत्या॑ह॒ या अया॑क्ष्म (६)
दे॒वता॒स्ता अरी॑रधा॒मेति॒ वावैतदा॑ह॒

तयो॑ । आ॒विदी॑यो॒ विदि॑ । अ॒ग्नि । इ॒दम् । ह॒वि । अ॒जु॒षत॒ । इति॑ । आ॒ह । या ।
अया॑क्ष्म (६) । दे॒वता॑ । ता । अरी॑रधाम॒ । इति॑ । वाव । ए॒तत् । आ॒ह ।

सूपचरणा पृथिवी । सुष्ठु इमामधिरुह्य चरन्तीति स्वधिचरणा द्यौ । "छन्दसि गत्यर्थेभ्य" (पा ३ ३ १२९) इति युच्, बहुव्रीहिर्वा । वरीयसीम् उरुतरा गव्यूति गवा सुखसचार स्थान द्यावापृथिव्यात्मक यजमानाय आशास्ते । "गोर्यूतौ छन्दसि" (पा ६ १ ७९ वा २) इत्यवादेश । "ऊतियूति°" (पा ३ ३ ९७) इति क्तिनि यूतिशब्दो निपातित । विस्तृत त्वान्नावगृह्यते ॥

तयोराविदीत्यादि ॥ तयो द्यावापृथिव्यो आविदि आभिमुख्येन लाभे सति अग्नि इद हवि अजुषत असेवत, आमीय च महत् तेज अवीवृधत अवर्धयत्, ज्याय प्रशस्त

म्रियते तदानीं पर्यङ्कशयनादिपरित्यागेन इमा भूमिमुपेत्यावसान गच्छति, तस्मात् ताद्दशस्यार्थस्य सूचके सुपावसानशब्दे प्रयुक्ते सति मरणशीलो भवेत् । भूमिविषयकेण स्वधिचरणेतिशब्देन वरीयसीम् अतिबहुलां गव्यूर्ति गोप्रचारभूमिं कामितवान् भवति ॥

सूक्तवाकस्य द्वितीयभागपाठस्तु– 'अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । सोम इदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । प्रजापतिरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । अग्नीषोमाविदꣳ हविरजुषेताम् । अवीवृधेता महो ज्यायोऽक्राताम् । इन्द्राग्नी इदꣳ हविरजुषेताम् । अवीवृधता महो ज्यायोऽक्राताम् । इन्द्र इदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । महेन्द्र इदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्त । अवीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत (तैब्रा ३ ५ १०) इति । आज्यभागदेवोऽयमग्निर्दत्तमिदं हविरसेवत । सेवित्वा च यजमानं वर्धितवान् । तस्य च यजमानस्य अत्यधिक तेज कृतवान् । एव सोमादिषु स्विष्टकृदग्निपर्यन्तेषु योज्यम् । देवताक्रमश्चात्राऽऽवाहननिगदवत् अवगन्तव्य । होत्रेण होमनिमित्तेन होमस्य स्विष्टकृत्त्व कर्तुमित्यर्थ ॥

तयोरिति ॥ तस्यैतस्य मन्त्रकाण्डाम्नातस्य सूक्तवाकमध्यभागस्य तात्पर्यं दर्शयति – 'तयोराविद्यग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह' इति । पूर्वम्

५–५ मै४–महस्तेज ।

८० ङ१–ताद्दशार्थस्य । ८१ हो१–उपाव° । ८२. आ–भवति । ८३ अ–भूमिविशेषेण, इ उ ङ पा –भूमिविषयेण ग्र–भूमिविषयत्वेन । ८४ ङ ङ१ ग्र –'गव्यूर्ति' नास्ति । ८५ आ–'इद' नास्ति । ८६ आ–अधिकम् । ८७ ङ हो१–देवताश्चात्रा°, अ इ उ जो ना पा–देवताक्रम स चात्रा°, हा–योऽत्र देवताक्रम स चात्रा° । ८८ आ हा–तत्र, क–अवगन्तव्य तत्र । ८९ ङ१–स्विष्टत्वम् । ९० ङ१–सूक्तमध्यम° ।

चाकृत कृतवान् । यस्मादेवमग्न्यादिका [v]देवता [v]अयाक्ष्म इष्टवन्तो वय [v]ता [v]अरीरधाम, तेज प्रभृतिभिश्च समृद्धा वयमकार्ष्मेति एतदस्य [6]मन्त्रभागप्रतिपाद्यमिति दर्शयति ॥

---

'आध्मं सूक्तवाकम्' इत्यनेन वय वृद्धि प्राप्ता इति स्वकीयैवाभिवृद्धिरुक्ता । इदानीम् 'अग्निरिद हविरजुषत' इत्यादिभिर्देवताविषया [91]समृद्धिरुच्यते । 'या 'देवता [92]अयाक्ष्म वयमिष्टवन्त 'ता देवता 'अरीरधाम यथा [93]राद्धा [94]भवन्ति [95]तथा 'अकार्ष्म [95] 'इति एतमेवार्थम् अग्निरिदम्' इत्यादिमन्त्रवाक्य ब्रूते ॥

सूक्तवाकस्य चरमभाग एवमाम्नात – "अस्यामृधद्धोत्रायां देवगमायाम् । आशास्तेऽय यजमानोऽसौ । आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरा देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्य धामाऽऽशास्ते । विश्व प्रियमाशास्त । यदनेन हविषाऽऽशास्ते । तदश्यात् तदृध्यात् । तदस्मै देवा रासन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषा । इष्ट च वीत च । उभे च नो द्यावापृथिवी अꣳहसस्पाताम् । इह गतिर्वामस्येद च । नमो देवेभ्य" (तैब्रा ३ ५ १०) इति । अस्या सूक्तवाकपाठपूर्विकाया होत्राया [96]प्रस्तरप्रहरणरूपाया होमक्रियाया [97]देवगमाया देवान् प्राप्नुवत्या सत्यामृधदृध्नोतु । यजमान समृद्धिं प्राप्नोतु । असौ विष्णुरुद्रादिशर्मा यजमान स्वस्याऽऽयु प्रार्थयते, सुप्रजास्त्व शोभनाप त्ययुक्तत्व सजातवनस्या [98]समानजातीयैर्वनन सेव्यत्वमात्मन इच्छतीति व्युत्पत्तिम् अभिप्रेत्य [99]तदीयेच्छा सजातवनस्या[99] इत्युच्यते । [100]उत्तरा देवयज्या कालान्तरभाविनी सेयमिष्टि । भूयो हविष्करण [101]प्रभूतसोमयागादिरूपम् । दिव्य धाम स्वर्गस्थानम् । किं बहुना, विश्व प्रिय [102]यद्य दात्मन प्रिय तत् सर्वमनेन प्रस्तरार्पणेन हविषा यत् फलमाशास्ते [102] तदश्यात् तत्फल भुङ्क्ताम् । तच्च फलमृध्यात् समृद्धमस्य [103]भवतात् । तत् सर्वमस्मै यजमानायाग्न्यादयो [104]देवा रासन्ता [105] साधयन्ताम् । [106]तत्फलमयमग्निर्देवो देवेभ्य सर्वेभ्य आनीय वनते यजमान तद्भागिन करोति । वय च होत्रादयो [107]मानुषा सन्तोऽग्न प्रसादात् [108]संभावितफल मनुष्येभ्य आनयाम इति शेष । किं तद्दैव मानुष च फलमिति [109]तदुच्यते – 'इष्ट च वीत चेति । इष्ट यागनिमित्त स्वर्गसाधन पुण्य यदस्ति तद्दैव [110]वीतम् अशनखाद्यादिरूप यदस्ति [111]तदेतन्मानुषम् । किं [112]च एते द्यावापृथिवी उभे अपि [113]नोऽस्मानꣳहस [114]पापात् फलप्रतिबन्धकात्[114] पाता रक्षताम् । इहास्मिन् कर्मणि वामस्य [115]वननीयस्य धनस्य गति प्राप्तिरस्तु । इद च हविर्देवै स्वीक्रियतामिति शेष । नमस्कार सर्वेभ्यो देवेभ्योऽस्तु ॥

---

६ त३–°प्रतिपाद्यत्वमिति ।

---

९१ आ–समृद्धिरुच्यते । ९२ आ–वयमयाक्ष्म । ९३ आ क–राध्नुवन्ति समृद्धा, अ इ उ जो ना पा हा–राध्नोति समृद्धा, इ हो१–राद्धान्त समृद्धा । ९४ अ इ उ जो ना पा हा–भवति । ९५-९५ उ–तदेवायक्ष्म । ९६ ड१ –°रूप° । ९७ इ–'देवगमाया' नास्ति । ९८ इ–°वननीयत्वम् । ९९-९९ आ–एतत्सजातवनस्या, इ हो१ तदीये वा सजात° । १०० अ इ उ जो ना पा हा–उत्तर° । १०१ ड१–प्रभूत सोम° । १०२-१०२ आ क–यद्यत्सर्वमात्मनाऽनेन हविषा प्रस्तरार्पणेन यजमान (यत्) फलमाशास्ते । १०३ आ इ ड१–भवतु । १०४ आ–'देवा' नास्ति । १०५ इ–साधयन्ता' नास्ति, हो१–राधयन्ताम् । १०६ आ–तत्फलमग्नि° । १०७ ड१–मनुष्या । १०८ अ इ उ पा—संभावितयशं, इ ड१ हो१–सभावित फल जो हा–संभावितयशम् । १०९ ड१–'तदुच्यते' नास्ति । ११० हो१–वीत च खाद्या°, ड१–वीतमशनखाद्यादि° । १११ इ ड१–तन्मानुषम् । ११२ आ–तु । ११३ इ–नोऽस्माकमंहस । ११४-११४ अ इ उ जो पा हा–पापफलप्रतिबन्धकात् इ ड१–फलप्रतिबन्धकात् पापात् । ११५ आ–कमनीयस्य ।

यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽयं यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं गमयत्यायुरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽशिषमेवैतामा शास्ते सजातवनस्यामा शास्त इत्याह

यत् । न । निर्दिशेदिति नि दिशेत् । प्रतिवेशमिति प्रति वेशम् । यज्ञस्य । आशीरित्या शीः । गच्छेत् । एति । शास्ते । अयम् । यजमान । असौ । इति । आह । निर्दिश्येति नि दिश्य । एव । एनम् । सुवर्गमिति सुव गम् । लोकम् । गमयति । आयुः । एति । शास्ते । सुप्रजास्त्वमिति सुप्रजा -त्वम् । एति । शास्ते । इति । आह । आशिषमित्या शिषम् । एव । एताम् । एति । शास्ते । सजातवनस्यामिति सजात वनस्याम् । एति । शास्ते । इति । आह ।

यन्नेति । एतन्नामा अय यजमान [v]आशास्ते इति यदि विशिष्य [v]न निर्दिश्येत तदा [v]यज्ञस्य [v]आशी आशासनीयमायुरादिक यज्ञफल [v]प्रतिवेश पार्श्वस्थ य कश्चित् [v]गच्छेत्, तस्मात् [७]'अय भवदत्तशर्मा [८]'यजमान [v]इति [v]निर्दिश्य [v]एनम् [v]एव स्वर्गं [v]गमयति इति आयुरादि दिव्यधामपर्यन्त विश्व प्रिय प्रापयतीति यावत् ॥

आशिषमेवैतामिति ॥ प्रसिद्धपदार्थके पदे इत्यर्थ । प्राणा वै सजाता इति । समान जन्मान प्राणा [v]सजाता, तेषा [९]वननस्याशासनात् । प्राणा अनन्तरिता [१०]अविनष्टा भवन्ति ।

यदिति ॥ मन्त्रगतेन 'असौ' इति पदेन [११६]यजमानस्य नामनिर्देशो विवक्षित [११७]इत्येतद्दर्शयति – 'यन्न निर्दिशेत् प्रतिवेश यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽय यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्ग लोक गमयति' इति ॥ यद्यत्र [v]न यजमानस्य नाम [v]निर्दिशेत्, यज्ञसबन्धिन्यायुरादिरूपा येयम् [v]आशी सा [v]प्रतिवेश [v]गच्छेत् यजमानप्रतिरूपक [११८]यज्ञशाला प्रविष्ट पार्श्वस्थ य कश्चित् पुरुष प्राप्नुयात् । [११९]असौ [v]इति [१२०]नामनिर्देशे तु [१२०] यजमानमेव स्वर्गं [१२१]प्रापयति । एतमेव नामनिर्देशमभिप्रेत्यान्यत्राऽऽम्नातम् – "यर्हि होता यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयादेमा [१२२]अग्मन्नाशिषो दोहकामा [१२२]" (तैस १ ७.४) इति ॥

आयुरिति ॥ 'आशास्तेऽय यजमान' [१२३]इत्यस्मिन् वाक्ये यदाशासनीय सग्रहरूपेण [१२४]विवक्षित तदेवाऽऽयुरादिवाक्यै प्रपञ्चितमित्येतद्दर्शयति – 'आयुरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽशिषमेवैतामा शास्ते' इति ॥

सजातवनस्यामिति ॥ जीवात्मना सहोत्पन्नत्वात् प्राणा सजातशब्देन विवक्षिता इत्येतत् सजातशब्दाभिधेयै दर्शयति – 'सजातवनस्यामा शास्त इत्याह प्राणा वै सजाता प्राणानेव नान्तरेति' इति ॥

७–८ त्रि–अयमसौ देवदत्त° । ८ तरु ल–इत्यर्थ । ९. मै हो–वनस्याशासनात् । १० र–अनेष्टा , हो–अनिष्टा ।

११६ आ–यजमान° । ११७ आ–इत्याह । ११८ ड ड१–यज्ञशालायाम् । ११९ ड–अत असौ । १२०–१२० आ ड१–नाम निर्दिशेत् । १२१ हो१–प्रापयेत् । १२२–१२२ आ ड–अग्मन् । १२३ ड१–इति । १२४ ड–विवरणीयम् ।

प्राणा वै संजाताः प्राणानेव (७) नान्तरेति तदग्निर्देवो देवेभ्यो
वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य
इति वावैतदाहेह गतिर्वामस्येदं च नमो देवेभ्य इत्याह

---

प्राणा इति प्र - अना । वै । सजाता इति स - जाता । प्राणानिति प्र - अनान् । एव (७) । न । अन्तः । एति । तत् । अग्नि । देवः । देवेभ्य । वनते । वयम् । अग्नेः । मानुषा. । इति । आह । अग्नि । देवेभ्यः । वनुते । वयम् । मनुष्येभ्यः । इति । वाव । एतत् । आह । इह । गति । वामस्य । इदम् । च । नमः । देवेभ्यः । इति । आह ।

---

तदग्निर्देव इत्यादि । तदाशासनीयम् ^v^अग्नि. स्वय ^v^देवः सन् ^v^देवेभ्यः देवसकाशात् वा ^v^वनते अस्मै यजमानाय दातुमुपादत्ते दिव्यान् भोगान् अस्मादुत्पादयति। ^v^वय तु मनुष्या सन्त ^v^मनुष्येभ्य मानुषान् भोगान् यजमानार्थं वनुम अग्नेरस्यैव प्रसादादित्येषोऽर्थः प्रतिपादयितुम् अत्राभिप्रेत इति दर्शयितु ^v^मनुष्येभ्य इति पदोपस्कारेण व्याचष्टे । अथ यदि विज्ञायते- 'अग्निर्देवेभ्यो वनुते वयमग्ने सकाशात् इति' तदा एतावति [11]प्रतिपिपादयिषिते 'देवो मनुष्यान्' इति [12]पदद्वयोपपादनम् [13]अकिंचित्कर स्यात् ॥

---

प्राणैर्वननस्य सभजनस्य प्रार्थ्यमानत्वात् प्राणानामन्तरायं न करोति। एतैश्च प्राणैरितरेऽपि[125] सेवका उपलक्षिताः। अतः पूर्वोक्तं मन्त्रव्याख्यानमविरुद्धम्॥

तदिति॥ देवसकाशान्मनुष्यसकाशाच्च [126]फलसपादनम् अग्नौ होतरि [127]च व्यवस्थितमित्येतादृश [128]मन्त्राभिप्रायं दर्शयति – 'तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाह' इति॥ [129]दिव्या मानुषाश्च [130]भोगाः अत्र[130] विवक्षिता इत्यर्थः॥

इहेति॥ इह कर्मणि हविर्भिरसत्कृता अपि देवा नमस्कारेण सत्कृता भवन्तीत्येतद्दर्शयति- 'इह गतिर्वामस्येदं च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै' इति॥ [131]उभयविधदेवप्रसादात् स्वस्याऽऽर्तिर्न भवति[131]॥

---

११. तं२.ल–प्रतिपिपादयिषतो ; हो–प्रतिपादयिष्यतः । १२. तं२.हो–°द्वयोपादानम्। १३. हो–किञ्चिन्°।

---

१२५. अ इ ह.जो.ना.पा.हा–'अपि' नास्ति। १२६ आ–फल्म्। १२७ आ–'च' नास्ति। १२८ आ–अभिप्रायम्। १२९ हो१–देव्याः। १३०–१३० आ हो१–भोगाः; ग ना–भागाः; ह.हो१–भागा अत्र। १३१–१३१ आ–उभयविधदेवताप्रसादात् स्वस्यार्तिर्न भवेदिति, अ.जो–उभयविधदेवाः प्राप्तभागाः स्वस्यार्तिर्न भवेदिति, मा–उभयविधदेवाः प्राप्ता प्राप्तभागाः स्वस्यार्तिर्न भवेदिति, इ.उ.पा–उभया विधदेवाः प्राप्तभागाः आदारस्यार्तिर्न भवेदिति।

याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै ॥९॥

[ श्रितस्ते प्र त्रिष्टुभमेतद्द्यावापृथिवी या अयाक्ष्म प्राणानेव षट्चत्वारिꣳशच्च । ]

या । च । एव । देवता । यजति । या । च । न । ताभ्य । एव । उभयीभ्य । नम । करोति । आत्मन । अनार्त्यै ॥ ९ ॥

[ शब्रा १ ७ ४, १ ८ २–३ ]

याश्चैवेत्यादि । गतम् । प्रस्ताराख्यमन्त्र [14]"सर्वेभ्य देवेभ्य"[14] क्रियते इति । अनिष्टा देवता आर्तिमस्य नोपादयन्ति ॥

इति द्वितीये षष्ठे नवमोऽनुवाक ॥

अत्र मीमासा ॥ [132]दशमाध्यायस्य चतुर्थपादे चिन्तितम् –

" अनूयाजोऽन्तिमो योऽसौ किमारादुपकारक ।
स्विष्टकृत् सस्कृतिर्वाऽऽद्योऽनूयाजान्तरसाम्यत ॥
[133]स्विष्टकृत्त्वगुणस्यात्र प्रत्यभिज्ञार्थवत्त्वत ।
दृष्टार्थत्वाच्च सस्कारो भवेदन्त्यप्रयाजवत् " ॥ ( जैन्या १० ४ ३१ ३२ ) ॥

दर्शपूर्णमासयोस्त्रयोऽनूयाजा [134]समाम्नाता । तत्र प्रथमद्वितीयानूयाजवत् तृतीयोऽप्यारादुपकारक इति पूर्वपक्ष । अस्ति प्रधानहोमनारिष्ठहोमानन्तरभावी प्राशित्रादिभक्षणात् प्राचीन पुरोडाशादि द्रव्यक स्विष्टकृद्धोम । 'सर्वेषा हविषाम् उत्तरार्धात् सकृत्सकृत् स्विष्टकृतेऽवद्यति' इत्यादिना तदभिधानात्। प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनूयाजेषु तृतीये [135]स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञाऽस्ति, "देवो अग्नि स्विष्टकृत्" ( तैब्रा ३ ५ ९ ) इति [136]तन्मन्त्रपाठात् । सा च पूर्वस्विष्टकृद्देवतास्मरणसस्कारे सत्यर्थवती स्यात् । प्रथमद्वितीययोस्तु नास्ति सेति वैषम्यम् । किंच, सस्कारपक्षे दृष्टार्थस्तृतीय स्यात्– [137]तस्मादन्त्यप्रयाजवदन्त्योऽनूयाज [138]सस्कार [132] ॥

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्–

'प्रस्तर सूक्तवाकेन प्रहरेदिति [139]कालधी ।
अङ्गाङ्गिता वा स्यात् कालोऽनुपतेत्याद्यमन्वयात् ॥
[140]प्रहृतेरिष्टदेवार्थसस्कारत्वात् तदन्वम ।
सपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ' ॥ ( जैन्या ३ २ १२-१३ ) ॥

१४–१४ त३ त्रि प२ मै४ ल हो–सर्वाभ्यो देवताभ्य ।

१३२–१३२ अ इ उ जो ना पा हा–'दशमाध्यायस्य सस्कार' नास्ति । १३३ ड द१ श्र हो१–°गुणस्यात्र । १३४ ड–आम्नाता । १३५ ड–स्विष्टकृत एव गुण° । १३६ आ ड–मन्त्रपाठात् । १३७ क–'तस्मात्' नास्ति । १३८ आ–स्यात् । १३९ जो ना हा–कालगी, ड१–कालविधि । १४० हो१–प्रहृत परिदेवार्थ°, ड–प्रहृते परिदेवार्थ° ।

[ अनूयाजाः सूक्तवाकश्च

दर्शपूर्णमासयोराम्नायते– "सूक्तवाकेन प्रस्तरं प्रहरति" ( द्र आपश्रौ ३·६·६ ) इति ॥ "इदं [१४१]-द्यावापृथिवी" (तैब्रा ३·५·१० ) इत्यादिर्मन्त्रः-[१४१] सूक्तवाकः। तस्मिन [१४२]-मन्त्रेऽग्निः संबोध्यः-[१४२]; "त्वं सूक्तवागसि" (तैब्रा ३·५·१०) इत्याम्नात्। प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेपः। तत्र 'सूक्तवाकेन' इत्येतत्पदं कालं लक्षयति। होत्राऽस्मिन् मन्त्रे पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत्। न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः, पूर्वोक्तप्रैषमन्त्रवदत्रान्वयाभावात्। "अग्निरिदं हविरजुषत। अवीवृधत महो ज्यायोऽकृत" ( तैब्रा ३·५·१० ) इत्यादिकं मन्त्रे पठ्यते। पुरोडाशसेवया [१४३]अभिवृद्धो अग्निः [१४४]अस्मिन् [१४५]यजमाने तेजोबाहुल्यं कृतवानिति तस्यार्थः। न चासौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते ब्रूमः – 'सूक्तवाकेन' इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते। न [१४६]-चात्यन्तमन्वयाभावः। मन्त्रो ह्ययं-[१४६] पूर्वमिष्टान् अग्न्यादिदेवान् [१४७]अनुस्मारयति। प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः। [१४८]अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयात् मन्त्रो विनियुज्यते। ननु प्रहरणं नाम प्रक्षेपमात्रं, न तु देवतोद्देशेन प्रक्षेपः, यजिधातोरश्रवणात्। तथा सति [१४९]देवतानामत्राभावात् [१५०]-तद्द्वाराऽपि नान्वय इति चेत्। मैवम्। देवतानां सद्भावात्-[१५०]। अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या [१५१]प्रस्तरप्रहरणाङ्गत्वं [१५२]बोध्यते। यदि [१५३]प्रहरणेऽग्न्यादयो देवता भवेयुस्तदा [१५४]तत्प्रकाशनेन दृष्टोऽर्थो मन्त्रस्य लभ्येत। ततो देवताप्रकल्पने तदुद्देशपूर्वकस्य [१५५]प्रक्षेपस्य यागत्वं सिध्यति। तस्माद् देवताद्वाराऽस्त्येवान्वयः॥

[१५६]तत्रैवान्यच्चिन्तितम्–

"प्रहृतेरखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा।
समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता न हि॥
[१५७]-दर्शपूर्णिमयोर्देवाननुसृत्य विभज्यताम्।
आख्यां लिङ्गेन बाधित्वा भागे [१५८]-नाम निरुच्यते-[१५८]" ॥ (जैन्या ३·२·१४-१५)॥

पूर्वोदाहृते [१५९]-मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया-[१५९], याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात्। ततः सर्वोऽपि प्रहरणाङ्गमिति चेत्। न। लिङ्गेन समाख्याया बाधितत्वात्। तस्मिन्मन्त्रे पूर्णमासदेवताऽऽम्नाने कस्मिंश्चिद्भागे दृश्यते– "अग्नीषोमाविदꣳ हविरजुषेताम्" इति। भागान्तरे तु दर्शदेवताऽऽम्नानम्– "इन्द्राग्नी इदꣳ [१६०]हविरजुषेताम्" इति, "इन्द्र इदꣳ हविरजुषत" इति, "महेन्द्र इदꣳ हविरजुषत"

---

१४१. इ१–द्यावापृथिवी भद्रमभूत् इत्यादिको मन्त्रः। १४२–१४२. आ.गं–अग्निं संबोध्य। १४३. क–अतिवृद्धः। १४४. अ.इ.उ.क.ड.जो.पा.ना.हा.हो१–स्वस्मिन्; आ.ड–तस्मिन्। १४५. क हा–यजमाने वा। १४६–१४६ अ.इ.उ.पा–°भावस्तन्मन्त्रोऽप्ययं; जो.हा–भावस्तन्मन्त्रो ह्ययं; ना–°भावः मन्त्रो ह्ययम्। १४७ अ.इ.उ पा–स्मारयति। १४८. अ इ.उ.ड.पा.गं.हो१–ततः। १४९ अ.उ पा–देवानामभावात्; इ–देवतानामभावात्; जो.ना हा–देवताना मन्त्राभावात्; क.हो–देवतानां मन्त्रे अभावात्। १५०–१५० अ उ पा–तद्द्वारा अप्रतामन्त्रस्यान्वयो नेति चेन्मैवं देवताना सत्वात् विधिना; ना–तद्द्वाराऽपि नान्वय इति चेन्मैवं देवताना सत्वात्; जो.हा–तद्द्वाराऽपि नान्वय इति चेन्मैवं देवताना सत्वात् विधिना। १५१. ड.गं–'प्रस्तर°' नास्ति। १५२. ड.हो१–विध्यति। १५३. ना–प्रहरणमन्त्रेऽग्न्यादयो। १५४. आ–तत्प्रकाशने। १५५. अ.इ.ना पा–प्रहरणस्य प्रक्षेपात्मना; जो.हा–प्रक्षेपात्मना; उ–'प्रक्षेपस्य' नास्ति। १५६ ड–'तत्रैवान्यच्चिन्तितम्' नास्ति। १५७. क–दर्शपूर्णमयोर्दे°; हा–दर्शपूर्णभागे देवा°; ड इ१.गं. हो१–दर्शपूर्णमयोर्दे°। १५८–१५८. हा–नामभिधाने। १५९–१५९. अ.इ उ.पा–अत्र सूक्तवाके समाख्या कृत्स्नविषया। १६०. क.हा हो१–हविरजुषेताम् अवीवृधेतां महो ज्यायोऽक्राताम्।

(तैब्रा ३ ५ १०) इति च। इन्द्राग्नीन्द्रमहेन्द्रा पुरुषभेदेन दर्शे व्यवस्थिता। तथा सति मन्त्रलिङ्गेन [161]तत्तद्भाग एव तत्काले[161] व्यवतिष्ठते। सूक्तवाकशब्दश्च भागे यौगिकः, सूक्त [162]वदतीति तद् व्युत्पत्तेः। यागकाले तत्तन्मन्त्रेण सम्यगुक्तं देव [163]वदतीत्यर्थः। अत एव ब्राह्मणेन व्याख्यातम्– "अग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह" (तैब्रा ३ ६ १०) इति। [164]अरीरधामाऽऽराधितास्तुष्टाः कुर्मेत्यर्थः। [165]तस्मादय विभज्य विनियुज्यत।

[166]तत्रैव तृतीये चिन्तितम्–[166]

"[167]अग्नीषोमाविद [168]हव्यमजुषेतामितीरितात्।
अपच्छिद्येदमित्यादि सर्वशेषो भवेन्न वा॥
प्रक्रियातो भवेन्नैव प्रक्रियाऽन्तरिता त्रिभिः।
वाक्य [169]ह्यन्तरितं तेन भवेत् प्रकरणाद्बलि"॥ (जैन्या ३ ३ २३ २४)॥

सूक्तवाके श्रूयते– "अग्नीषोमाविदꣳ हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्राग्नी इदꣳ [170]हविरजुषेताम्" (तैब्रा ३ ५ १०) इत्यादि। तत्र देवतावाचकमग्नीषोमादिपदं [171]पौर्णमास्यादिकाले यथादैवतं विभज्य [172]प्रयोज्यमिति पूर्वपादे निर्णीतम्। यत् तु 'इदं हविः' इत्यादिकमवशिष्टं पदजातं तदग्नीषोममन्त्रगतममावास्यायाम् [173]अग्नीषोमपदपरित्यागेन पठनीयम्। [174]एवमिन्द्राग्निमन्त्रगतमपि पौर्णमास्याम् [175]इन्द्राग्निपदपरित्यागेन पठनीयम्। तथा [176]सत्येषां मन्त्रभागानां [177]सर्वशेषत्वबोधको [178]दर्शपूर्णमासप्रकरणपाठोऽनुगृहीत इति प्राप्ते ब्रूमः– [179]अग्नीषोममन्त्रशेषस्येन्द्राग्निपदान्वयाश्रवणात् प्रकरणेन [180]प्रथमं तदन्वयरूपं वाक्यं कल्पनीयम्। तेन च [181]वाक्येन [182]इन्द्रादिप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते। तच्च लिङ्गम् अनेन मन्त्रभागेणेन्द्राग्निविषया क्रियाऽनुष्ठेयेति विनियोजिका तृतीयाश्रुतिं कल्पयति। ततः [183]प्रकरणविनियोगयोर्मध्ये [184]त्रिभिर्व्यवधानं भवति। अग्नीषोमपदान्वयरूपं तु वाक्यं श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते। तस्माद्वाक्येन [185]प्रकरणस्य बाधितत्वात् तत्तच्छेष[185] तत्र [186]तत्र व्यवतिष्ठते[186]॥

---

१६१ जो ह्रा–तत्तद्भागवत् तत्काले ना–तत्तद्भागवान् तत्काले क–तत्तद्भागवान् तत्तत्काले, ड१–तद्भाग एव तत्काले। १६२ अ इ उ पा–वदतीति। १६३ जो ना हा–वदतीत्यर्थः। १६४ अ इ पा–अरारधाम आराधिता सेत्यर्थः। १६५ अ इ पा–तस्मादुभय, उ–'तस्मादय' नास्ति। १६६–१६६ क जो ना हा 'तत्रैव तृतीये चिन्तितम्' नास्ति, ड१–तत्रैव तृतीयपादे चिन्तितम्, ड ह१ ष्ट–तत्रैव तृतीयपादे। १६७–१६७ क जो ना हा–'अग्नीषोमाविद व्यवतिष्ठते' नास्ति। १६८ ड–हविरजु°, ड१ ष्ट–द्रव्यम°। १६९ अ इ उ पा–अन्तरितम्। १७० ड१–हविरजुषेताम् अवीवृधेता महो ज्यायोऽक्राताम्। १७१ अ इ उ पा–°मासादिकाले। १७२ ड१–प्रयोक्तव्यम्। १७३ अ इ उ पा–°षोमपदत्यागेन ष्ट–°षोमीयपदपरित्यागेन। १७४ ड१–°मन्त्रमपि। १७५ ष्ट–इन्द्रादिपद°। १७६ ड१–अप्येषाम्। १७७ अ इ उ पा–°शेषत्वबाधको। १७८ अ इ उ पा–°प्रकरणयागे तु गृह्यते, ष्ट–प्रकरणपाठो गृह्यते ड१–प्रकरणपाठोऽनुगृहीत। १७९ अ इ उ पा–°मन्त्रसमीप इन्द्राग्नीपदा°। १८० अ इ उ ड ह१ पा ष्ट हो१–'प्रथमं' नास्ति। १८१ अ इ उ पा ष्ट हो–'वाक्येन' नास्ति। १८२ ड ड१ ष्ट हो–इन्द्राग्निप्रका°। १८३ आ–°विनियोजकयो°। १८४ अ इ उ पा–प्रधानम्। १८५–१८५ अ उ इ पा हो१–प्रकरण बाधित्वा तत°, ड१–प्रकरणं बाधित्वा तच्छेष। १८६ ड१ ष्ट–तत्रैव।

[187] नवमाध्यायस्य प्रथमपादे [187] चिन्तितम्—

" यजमानो नोहितव्य ऊह्यो वा न हि पूर्ववत् ।
मन्त्र [188] फलप्रधानोऽत ऊह्य [189] सर्वफलित्वत " ॥ (जैन्या ९ १ २१) ॥

दर्शपूर्णमासयो ' सूक्तवाकेन प्रस्तर प्रहरति ' इति प्रहरणकरणत्वेन विनियुक्ते [190] सूक्तवाक मन्त्रे [191] वाक्यमतदाम्नायत– ' अथ यजमान आयुराशास्ते ' ( तै ब्रा ३ ५ १० ) इति । तत्र पूर्वोक्त यज्ञ पतिशब्दवत् सत्रेषु यजमानशब्दो नोहितव्य इति चेत् । [192] न । वैषम्यात् । तथा हि– [193] सर्वत्र प्रकरणे [193] मन्त्रो द्विविध –क्रियाप्रकाशक फलप्रकाशकश्चेति । पूर्वोदाहृतो मन्त्र इडोपाह्वानक्रियाप्रकाशक । " उपहूतꣳ रथन्तरꣳ सह पृथिव्या " ( तै ब्रा ३ ५ ८ ) [194] इत्यनुवाक [195] तदुपाह्वानमन्त्ररूपे सर्वस्मि न्नपि तदवभासात् । " इडोपहूता । उपहूतेडा । उपो अस्माꣳ इडा ह्वयताम् । इडोपहूता । उपहूतेडा । दैव्या अध्वर्यव उपहूता " ( तै ब्रा ३ ५ ८ ) इत्यादिभिरवान्तरवाक्यैरुपाह्वानक्रियाया एव प्राधान्याव भासात् [196] तन्मध्यपतित त्वेकमेव यज्ञपतिवाक्य [197] वृद्धिरूप फल [197] [198] गमयतीति न तस्य स्वार्थो विवक्षित । सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति न तु प्रहरणक्रियाम् । " इद द्यावापृथिवी भद्रमभूत् " ( तै ब्रा ३ ५ १० ) [199] इत्येतस्मिन्ननुवाके सूक्तवाकमन्त्रे [200] सर्वस्मिन्नपि फलावभासात् [200] । " अथ यजमानोऽसौ । आयुराशास्त सुप्रजास्त्वमाशास्ते सजातवनस्यामाशास्त उत्तरा देवयज्यामाशास्ते [201] भूयो हविष्करणमाशास्ते [201] " ( तै ब्रा ३ ५ १० ) इत्यादिभि सर्वैरप्यवान्तरवाक्यै [202] फलस्यैवावभासनात् । तस्माद्विवक्षित फल, फलिनश्च सर्वे यजमाना । तत सर्वेषा फलसिद्धये यजमानशब्दो [203] बहुवचनान्त त्वेन [204] सत्रेऽप्यूहनीय ॥

[205] दशमाध्यायस्य द्वितीयपादे [205] चिन्तितम्–

" सूक्तवाकाशासन स्यान्न वा [206] नित्यप्रवृत्तित ।
स्यान्मैव फलनिर्देशात् फलेच्छाऽध्वना न युज्यते "॥ (जैन्या १० २ २५) ॥

" इद द्यावापृथिवी [207] भद्रमभूत् " ( तै ब्रा ३ ५ १० ) इत्यादि सूक्तवाको होत्रा पठ्यते । तत्रैव [208] 'श्रूयत–" आशास्तेऽय यजमानोऽसौ । आयुराशास्ते [209] 'सुप्रजास्त्वमाशास्त " ( तै ब्रा ३ ५ १० ) इत्यादि । तत्र सूक्तवाकगतो योऽय यजमानाशासनप्रतिपादको [210] मन्त्रभागस्तमस्मिन्यज्ञे होता पठेन्न वेति सशय ।

१८७–१८७ जो ना ग ह हा–नवमस्य प्रथमे, अ इ उ पा द्वितीयस्य तृतीये । १८८–अ इ उ पा–फलप्रधानो वा, ड हा–फल प्रधानोत°, ह१–फल प्रदाय नोत । १८९. अ इ उ जो पा हा हो–°फलत्वत । १९० ड–सूक्तवाक्ये, हो१–सूक्तवाके । १९१ ड हो१–'वाक्यम्' नास्ति । १९२ ड ह१ ग –मैवम् । १९३–१९३ ड–सर्वप्रकरण°, सर्वत्र करण° । १९४ ड–इत्यस्मिन्ननुवाक । १९५ अ इ पा–उपाह्वानरूपे । १९६ क हा–तन्मध्ये पतितम् । १९७–१९७ इ उ – 'वृद्धिरूप फल' नास्ति, क ह१ जो ना ग हा– वृद्धिफलम् । १९८ ड–गमयन्तीति । १९९ ह१–इत्यस्मिन्° । २००–२०० ड–सर्वस्मिन् फलावभासात् । २०१–२०१ आ क–'भूयो हविष्करणमाशास्ते' नास्ति । २०२ ड–°वभासात् । २०३ आ–°न्त्वेन सर्वेषु । २०४ आ क ह१ ग–सत्रेषूहनीय । २०५–२०५ अ इ उ जो ना पा हा ग– दशमस्य द्वितीये । २०६ अ–स्यान्नप्रवर्तित, इ उ पा–स्यान्नप्रवृत्ति । २०७ आ हो१–'भद्रमभूत्' नास्ति । २०८ ह१–पठ्यते । २०९ आ–'सुप्रजास्त्वमाशास्ते' नास्ति । २१० हा–मन्त्र भागस्तस्मिन् यज्ञे, ड जो–मन्त्रभागस्तमस्मिन् यज्ञे, अ इ पा – मन्त्र भागोऽयमस्मिन्यज्ञे, न–'मन्त्रभाग स्तमस्मिन्यज्ञे' नास्ति ।

अस्थियज्ञगततया प्रायणीयादिदिष्टे प्रस्तरप्रहरणमङ्ग, तस्य नित्यत्वात् [211]तस्मिन् विनियुक्तस्य सूक्तवाकमन्त्रस्य [212]नित्यप्रयुक्ततया तद्भागपाठोऽपि स्यादिति पूर्व पक्ष । यथा 'स्वर्गकाम ' इत्यत्र [213]कामियोगेन स्वर्गस्य साध्यताप्रतीते स्वर्गशब्देन फलनिर्देश । एवमाशासनयोगादायुरादिशब्दै फल निर्दिश्यते फलेच्छा चास्थना न युक्ता। तस्मात् तद्भागपाठो [214]बाध्यते ॥

तत्रैवान्यच्चिन्तितम्–

" [215]मृते प्रागायुराशीर्नो स्याद्वा नो मृतिकामनात् [215]।
प्रागर्भवाज्जीवनार्थमायुराशासन भवेत " ॥ (जैन्या १० २ २९) ॥

होत्रा पठितव्ये सूक्तवाक [216]योऽयम् ' आयुरा शास्ते [216] ' इति भागो यजमानविषय स किं सर्वस्वारे यजमानमरणात् पूर्वं वर्जनीय पठितव्यो वेति सशय । मुमूर्षोर्यजमानस्याऽऽयुनिरपेक्षत्वेनार्थ लोपात् [217]वर्जनीय इति पूर्व पक्ष । [218]आर्भवाख्यस्य पवमानस्य स्तूयमानत्व यजमानस्य मरणकाल । [219] तत पूर्वं निजीविषुत्वात् [219]पठनीय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाक ॥

---

२११ अ इ उ पा– अस्मिन् । २१२ इ– प्रवृत्तया, ड१–प्रवृत्ततया । २१३ इ उ पा हो१–
कामियोगे, अ ड१ गृ– कामियोगे । २१४ हो१– विरुध्यते इ–निरुध्यते । २१५-२१५ अ– मृते १५
प्रागायुराशीति स्याद्वा°, उ–प्रागायुराशीति स्याद्वा°, इ– 'मृते प्रागायुराशीति स्याद्वातो भृति°, पा– मृते प्रागायुराशीति स्याद्वा°, २१६-२१६ अ इ उ ड ड१ पा गृ हो१– योऽयमाशास्ते । २१७ अ इ उ
कामनात्' नास्ति ।
पा बाध । २१८ इ–आर्भव° । २१९ ड१ गृ–पठितव्य ।

देवा वै यज्ञस्यं स्वगाकुर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमंब्रुवन्निमं नो यज्ञ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा में यज्ञस्याऽऽशीरसदिति तस्मायदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य

देवाः । वै । यज्ञस्यं । स्वगाकर्तारमिति स्वगा-कुर्तारम् । न । अविन्दन् । ते । शंयुमिति श-युम् । बार्हस्पत्यम् । अब्रुवन् । इमम् । नः । यज्ञम् । स्वगेति स्व-गा । कुरु । इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव । अब्राह्मणोक्त इत्यब्राह्मण-उक्तः । अश्रद्दधान इत्यश्रत्-दधान । यजातै । सा । मे । यज्ञस्य । आशीरित्या-शीः । असत् । इति । तस्मात् । यत् । अब्राह्मणोक्त इत्यब्राह्मण-उक्त । अश्रद्दधान इत्यश्रत्-दधान । यजते । शयुमिति श-युम् । एव । तस्य ।

देवा वै यज्ञस्येत्यादि ॥ [1]असंकरेण हवींषि [2]स्वस्वदेवतायै यो गमयिता स स्वगाकर्ता शयुनामा बृहस्पतिपुत्रोऽभवत् । स [3]देवानाम् । यदेवेत्यादि । 'यजस्व' इति [4]ब्राह्मणेन नोक्तो यो [4]भवति यश्च श्रद्धधानो न भवति तदीयस्य [5]यज्ञस्य या [6]आशीः फल सा ममास्तु [7]इति

अनूयाजा. सूक्तवाक्व्याख्या नवम ईरिताः ॥

अथ दशमे शंयुवाकमन्त्रव्याख्या पत्नीसंयाजाश्च [1]वर्ण्यन्ते ।

देवा इति ॥ तत्र [2]शंयुवाकमन्त्रान् व्याख्यातुम् [3]आदौ प्रस्तौति,– 'देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञं स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्धधानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममेत्यब्रवीत् किं मे प्रजाया इति योऽपगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पांसून्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्र जानादिति तस्माद्ब्राह्मणाय नापगुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति' इति ॥ यस्मै देवाय यत् हविः विहितं तस्य हविषः सांकर्यमन्तरेण [4]तद्देवताप्रापणं स्वगाकरणम् । स्वस्मिन् गतिः प्राप्तिः स्वगा । तस्याः कर्तारं बुद्धिमन्तं कमपि पुरुषं [4]देवाः [5]यज्ञस्य अनुष्ठानवेलायां [6]न अपश्यन् । तदा [5]बृहस्पतिपुत्रः यः शंयुनामकः तं बुद्धिमन्तम् अवेक्ष्य प्रार्थयामासुः – अस्मदीयम् [6]इमं [7]यज्ञम् असांकर्येण तस्य तस्य देवस्य स्वगतं [8]कुरु [9]इति । तदाऽसौ [6]शंयुरत्कोचं याचितवान्–'[7]पुत्रकाम एतेन यज्ञेन यजेत' इत्येतादृशेन [8]विधायकेन [9]ब्राह्मणेनानुक्तः यः कश्चित् [10]स्वेच्छयैव यजते[10] यश्चान्यः श्रद्धारहितो यजते

१. तं३.त्रि.पं२.मै४.लं.हो–असंकरणेन । २. त्रि.पं२.मै४.लं.हो–स्वं स्वं देव°; तं३–स्वस्वं देव° । ३ तं३.मै४–देवतानाम् । ४–४. मै४–ब्राह्मणेनोक्तो न; लं–ब्राह्मणेनोक्तो यो; तं३–ब्राह्मणेनोक्तो यो न ।

१. आ–वर्ण्यन्ते । २. ह१–मन्त्रम् । ३ आ–'आदौ' नास्ति । ४–४. आ–तस्य तस्य देवस्य स्वगां कुर्विति बृहस्पतिपुत्रं शयुनामानं प्रति देवा अब्रुवन् । तदासौ शयुरप्येवं चिन्तितवान्; ह–तस्य तस्य देवस्य स्वगां कुर्विति । तदाऽसौ शयुरप्येवं याचितवान् । ५. ह१–बृहस्पतेः पुत्रः । ६. ह१–शंयुरित्युक्तो यः । ७ ह–एवं कामः । ८. अ आ.ई.उ.जो.ना.पा.हा–'विधायकेन' नास्ति । ९. अ.ई.उ.जो.ना.पा.हा–°नानुक्तः, ह.ह१–°नानुमुक्तः । १०–१०. आ–यजेत स्वेच्छयैव, हा–यजते स्वेच्छयैव ।

**बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममेत्यब्रवीत् किं मे प्रजाया(१) इति योऽपगुराते शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पांसून्त्संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्र जानादिति**

बार्हस्पत्यम् । यज्ञस्य । आशीरित्या-शीः । गच्छति । एतत् । मम । इति । अब्रवीत् । किम् । मे । प्रजाया इति प्र-जायाः (१) । इति । यः । अपगुराता इत्यप-गुराते । शतेन । यातयात् । यः । निहनदिति नि-हनत् । सहस्रेण । यातयात् । यः । लोहितम् । करवत् । यावतः । प्रस्कद्येति प्र-स्कद्य । पांसून् । संगृह्णादिति सं-गृह्णात् । तावतः । संवत्सरानिति सं-वत्सरान् । पितृलोकमिति पितृ-लोकम् । न । प्रेति । जानात् । इति ।

शंयुना वृतम् । अथ देवैस्तथाऽस्त्वित्यनुज्ञाते पुनश्च शयुः अब्रवीत् एतत् मे मम युष्मत्प्रसादात् सपत्स्यते, अथ किं मे प्रजायाः युष्मत्प्रसादेन संपत्स्यते इति ॥ योऽपगुराता इत्यादि ॥ अपगोरणं ताडनोद्योगः । वाक्पारुष्यमित्येके । ब्राह्मणाय तदपत्याय तत्कर्तारं शतनिष्कदण्डेन दुःखयेत् । गुरी उद्यमने तौदादिकः, लेटि आडागमः, "वैतोऽन्यत्र" (पा ३·४·९६) इत्यैकारः । यः निहनत् निहन्यात् ताडयेत् । लेट्यडागमः । गतमन्यत् । करवत् कुर्यात् । पूर्ववदडागमः । लोहितं शरीरात् प्रस्कद्य निपात्य यावतः पांसून् संगृह्णीयात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् मदपत्ये लोहितस्योत्पादयिता । उभयत्र लेटि "इतश्च लोपः°" (पा ३·४·९७) इति लोपः ॥

तयोरुभयोः यज्ञफलं ममास्त्विति वरः । तत आरभ्य तत्फलद्वयं शंयुमेव प्राप्नोति । पुनरपि शंयुरेवमुवाच – तत् एतत् उभयं मम संपन्नं, मदीयायाः पुत्रपौत्रादिरूपायाः प्रजायाः किं दास्यथ इति । ततो देवा अपगोरणादिकर्तृयातना त्वत्पुत्राद्यधीना भवत्विति वरं दत्तवन्तः । अपगोरणं ताडनोद्योगः । तमुद्योगं ब्राह्मणविषये यः करोति तं पुरुषं शतनिष्कदण्डेन यातयात् क्लेशयेत् । यः निहनत् ताडयेत् तं सहस्रनिष्कदण्डेन क्लेशयेत् । यः तु ब्राह्मणशरीरे लोहितं ताडनेन उद्गमयति तत् लोहितं भूमौ पतित्वा यावतः परमाणून् व्याप्नोति तावतः संवत्सरान् अयं पितृलोकं न प्राप्नोति, किं तु यमयातना अनुभवति, तत्सर्वं त्वत्प्रजाधीनमिति वरः । यस्मादुक्तरीत्या ब्राह्मणावि-

५. तै३–इति । ६. पं.२–हननोद्योगः । ७. मै.हो–अडागमः । ८. त्रि.पं२–प्रस्कन्द्य । ९. मै–तावत् । १०. मै४–लोहितं तस्य ।

११. इ,ड१–यज्ञस्य फलं । १२. अ.इ.उ.जो.ना.पा.हा–तु फल° । १३ जो.ना–प्राप्नोतीति देवैरुक्ते । १४. आ–दास्यत । १५. आ–त्वत्पुत्राधीना; अ.इ.उ.पा जो.ना.हा–भवत्पुत्राद्यधीना । १६. जो.ना.हा–अपगुरणं । १७–१७. आ–ग्राहयति । १८. ड१–परमाणून् गृह्णाति; श्रे–परमाणून् संगृह्णाति । १९. ड–'अयम्' नास्ति । २०. अ.इ.उ.जो.ना.पा.हा–अनुभवेत् । २१. अ.इ.उ.जो.ना.पा.हा–प्रजाधीन° ।

तस्माद्ब्राह्मणाय नापं गुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत् स्वगा करोति त(२)च्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति ।

तस्मात् । ब्राह्मणाय । न । अपेति । गुरेत । न । नीति । हन्यात् । न । लोहितम् । कुर्यात् । एतावता । ह । एनसा । भवति । तत् । शंयोरिति शं - योः । एति । वृणीमहे । इति । आह । यज्ञम् । एव । तत् । स्वगेति स्व - गा । करोति । तत् (२) । शंयोरिति शं - योः । एति । वृणीमहे । इति । आह । शंयुमिति शं - युम् । एव । बार्हस्पत्यम् । भागधेयेनेति भाग - धेयेन । समिति । अर्धयति ।

तस्मादित्यादि । गतम् । एतावतेति [९]एतावता अनर्थस्य हेतुना पापेन इत्थंभूतः [१०]भवति ॥

' तच्छंयोरा वृणीमहे ' इत्यादि [०]शंयुवाकमन्त्रव्याख्यानं [११]सुबोधम् ॥

क्षेपादौ प्रत्यवायोऽस्ति तस्मात् तत् [२]न [२]कुर्यात् । करणे [२२]च [२]एतावता[२१] [२३]पूर्वोक्तेन पापेन युक्तो भवति ॥

यस्य शंयुवाकस्य [२४]व्याख्यानायायं प्रस्तावः कृतस्तस्य[२४] शंयुवाकमन्त्रस्य विनियोगं बौधायन आह– " यदा [२५]जानाति [२६]शंयोर्ब्रूहीति तच्छंयुवाकमन्वाह तच्छंयोरावृणीमह [२७]इत्याऽन्तादनुवाकस्य " इति । स चानुवाको मन्त्रकाण्डे समाम्नातः– " तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे " ( तैब्रा ३·५·११ ) इति । तत्तादृशं प्रशस्तं फलं शंयोर्बार्हस्पत्यादावृणीमहे प्रार्थयामहे । किं तत्फलमिति क्रमेणोच्यते– यज्ञाय गातुं यज्ञस्य देवान् प्रति गमनमावृणीमहे । यज्ञपतये यजमानस्य गातुं देवान् प्रति गमनमावृणीमहे । नोऽस्माकं दैवी स्वस्तिर्देवनिमित्तं विघ्नोपशमनं मानुषेभ्यः [२८]च स्वस्तिर्विघ्नोपशमनमस्तु । भेषजं सर्वपापानामौषधमिदं कर्मोर्ध्वं जिगातु [२९]अविघ्नेन समाप्तिं प्राप्नोतु । अस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे च शं सुखमस्तु ॥

तदिति ॥ तमेतस्य मन्त्रस्य पाठं प्रशंसति– ' तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत्स्वगा करोति ' इति ॥ [३०]तत् तेन[३०] मन्त्रपाठेनेमं [३१]यज्ञं तत्तद्देवतागामसांकर्येण [३१]स्वगतं [३]करोति ॥

तदिति ॥ प्रकारान्तरेण पुनः प्रशंसति– ' तच्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति ' इति ॥ [३२]मन्त्रवाक्यपाठे एवास्य दातव्यो [३३]भागस्तत्तुष्टिहेतुत्वात् ॥

० [ संभावितोऽयं पाठः । लिखितपुस्तकेषु, मै-मुद्रित पुस्तके–' सूक्तवाक° ' इति । ] । ११. तै. तै.हो–सुबोधनम् ।

२२. हा–चैतावत्°; क.प–तावता । २३. आ–पूर्वोक्त° । २४–२४. अ.क.उ.ओ.ना.पा.हा–व्याख्याने पापस्मायाः प्रश्नस्तस्य । २५. आ–अनुजानाति । २६. क.हा–शंयोऽनुब्रूहि; क–ट१–तै.हो१–शंयोर्ब्रूहीति । २७. आ.ट–इत्येतदनुवाकस्य । २८. आ–' च ' नास्ति । २९. ट–ट१–निर्विघ्नेन । ३०–३०. आ–तत्तेन; क.' तत् तेन ' नास्ति । ३१. अ.ना–स्वगां; ट–' स्वगो ' नास्ति । ३२. क.ट. ट१.तै.हो१–मन्त्रपाठे । ३३ ट१–भागस्तुष्टेः हेतुत्वात् ।

गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते(३) यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय

---

गातुम् । यज्ञाय । गातुम् । यज्ञपतय इति यज्ञ - पतये । इति । आह । आशिषमित्या - शिषम् । एव । एताम् । एति । शास्ते । सोमम् । यजति । रेतः । एव । तत् । दधाति । त्वष्टारम् । यजति । रेतः । एव । हितम् । त्वष्टा । रूपाणि । वीति । करोति । देवानाम् । पत्नीः । यजति । मिथुनत्वायेति मिथुन - त्वाय । अग्निम् । गृहपतिमिति गृह - पतिम् । यजति । प्रतिष्ठित्या इति प्रति - स्थित्यै । जामि । वै । एतत् । यज्ञस्य । क्रियते (३) । यत् । आज्येन । प्रयाजा इति प्र - याजाः । इज्यन्ते । आज्येन । पत्नीसंयाजा इति पत्नी - संयाजाः । ऋचम् । अनूच्येत्यनु - उच्य । पत्नीसंयाजानामिति पत्नी - संयाजानाम् । ऋचा । यजति । अजामित्वायेत्यजामि - त्वाय । अथो इति । मिथुनत्वायेति मिथुन - त्वाय ।

---

आशिषमिति । प्रतीकग्रहणत्वादस्त्वित्यादि सर्वाऽप्याशीर्गृह्यते ॥

सोमं यजतीत्यादि । पत्नीसंयाजविधिः ॥

जामि वा इत्यादि । याज्यानुवाक्ययोः ऋक्त्वेन वैलक्षण्येन जामित्वाभावः । "आप्यायस्व, सं ते" ( तैब्रा ३·५·१२) इत्यादयो याज्यानुवाक्या वेदितव्याः ॥

---

गातुमिति ॥ आशीःपरत्वं मन्त्रभागस्य [34]दर्शयति– 'गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते' इति ॥

सोममिति ॥ अथ चतुरः पत्नीसंयाजान् विधत्ते– 'सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै' इति ॥

जामीति ॥ [35]एतेषां चतुर्णां पत्नीसंयाजानां प्रत्येकं याज्यानुवाक्ये विधत्ते– 'जामि वा एतद्यज्ञस्य क्रियते यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय' इति ॥ [36]-प्रयाजानां पत्नीसंयाजानां च-[36] [37]-तावद्द्रव्यकृतं वैषम्यं नास्ति,-[37] [38]मन्त्रकृतमपि यदि न स्यात् तदानीमालस्यं भवति, तत्परिहाराय प्रयाजेषु यजुर्भिरिष्टेषु पत्नीसंयाजा ऋग्भ्यां याज्यानुवाक्याभ्यां यष्टव्याः ॥

---

३४. क–प्रशंसति । ३५. ङ–तेषाम् । ३६–३६. अ.इ.उ.ञो.ना.पा.हा–प्रयाजानूयाजाना । ३७–३७. ङ–द्रव्यकृतं वैषम्यं तावन्नास्ति, ह१–द्रव्यकृतं वैषम्यं तावन्नास्ते । ३८. अ इ.उ.ञो.पा.हा–इति अत्रापि ।

ते च याज्यानुवाक्ये क्रमेण मन्त्रकाण्डे (तैब्रा ३ ५ १२) समाम्नाते। तद्विनियोग बौधायनो दर्शयति–'अथ पत्नीसयाजानामा प्यायस्व स त इति सौम्यस्येह त्वष्टारमग्रिय तन्नस्तुरीपमिति त्वष्टुर्देवाना पत्नीरुत ग्ना वियन्तु देवपत्नीरिति देवपत्नीनामग्निर्होता गृहपति स राजा वयमु त्वा गृहपते जनानामिति गृहपते' इति॥

तत्र सोमस्य त्वष्टुश्चान्यत्राऽऽम्नातानां मन्त्राणा प्रतीकान्याम्नायन्ते "आ प्यायस्व स ते। इह त्वष्टारमग्रिय तन्नस्तुरीपम्" (तैब्रा ३ ५ १२) इति॥ "आ प्यायस्व समेतु ते" इत्येषा सोमस्य पुरोनुवाक्या। "स ते पयाꣳसि" इति सोमस्य याज्या। एतदुभय चतुर्थकाण्डस्य द्वितीयप्रपाठके (तैस ४ २ ७) व्याख्यास्यते॥ "इह [39]त्वष्टारमग्रियम्" इत्येषा [39]त्वष्टु पुरोनुवाक्या। "[40]तन्नस्तुरीपमध पोपयित्नु" इत्येषा [40] याज्या। एतच्चोभय तृतीयकाण्डस्य प्रथमप्रपाठके (तैस ३ १ ११) व्याख्यास्यते॥

[41]देवपत्नीना पुरोनुवाक्या दर्शयति– "देवाना पत्नीरुशतीरवन्तु न। प्रावन्तु नस्तुजये वाजसातये। या पार्थिवासो या अपामपि व्रते। ता नो देवी सुहवा शर्म यच्छत" (तैब्रा ३ ५ १२) इति। इन्द्राण्यादयो [42]देवपत्न्यो या सन्ति ता उशतीरस्मद्धित कामयमाना अस्मानवन्तु रक्षन्तु परैरापादितमरिष्ट [43]वारयन्त्वित्यर्थ। किं च, तुजयेऽपत्याय वाजसातये द्रव्यलाभाय नोऽस्मान् प्रकर्षेण रक्षन्तु। न केवल दिवि स्थिता इन्द्राण्याद्या किं तु या पार्थिवास पृथिव्या स्थिता देवपत्न्यो या अप्यन्या अपा व्रते वृष्ट्युदकस्थानत्वेनोपलक्षितेऽन्तरिक्षे वर्तन्ते ता देव्य सर्वा सुहवा सुखेनाऽऽह्वातु शक्या यूय [44]नोऽस्मभ्य शर्म सुख प्रयच्छत॥

तत्रैव याज्यामाह– "उत ग्ना वियन्तु देवपत्नी। इन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु। वियन्तु देवीर्य ऋतुर्जनीनाम्" (तैब्रा ३ ५ १२) इति। अपि च, ग्नाश्छन्दोदेवता गायत्र्यादयो देवपत्न्यो [45]वियन्त्विद हविरश्नन्तु। ग्नाशब्दस्य छन्दोवाचित्व पञ्चमकाण्डे समाम्नातम्– "ग्नास्त्वेत्याह छन्दाꣳसि वै ग्ना" (तैस ५ १ ७) इति। इन्द्रस्य पत्नीन्द्राणी। अग्ने पत्न्यग्नायी। अश्विनो पत्न्यश्विनी। राज्ञ सोमस्य पत्नी राट्। रुद्रस्य पत्नी रोदसी। वरुणस्य पत्नी वरुणानी। एतासामेकैका विज्ञापनामस्मदीयामाशृणोतु। जनीनामिन्द्राण्यादीना य ऋतु कालविशेषो भोजनायोचित तस्मिन् काले वियन्त्वश्नन्तु। सोमत्वष्ट्रो पुरस्ययोर्भुक्तवतो [46]सतो पश्चाद्भुञ्जतामित्यर्थ॥

---

[39]–[39] आ–त्वष्टारमिति। [40]–[40]. आ–तन्नस्तुरीपमिति। [41] अ आ इ उ ओ ना पा हा –देवपत्नी°। [42] इ इ१–देवाना पत्न्यो। [43]. इ हो१–निवार°। [44] आ–नोऽस्माक। [45] हा–वियन्त्विह। [46] ओ ना–'सतो' नास्ति।

अग्नेर्गृहपते पुरोनुवाक्यामाह– "अग्निर्होता गृहपतिः स राजा। विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानाम्। यजिष्ठः स प्रयजतामृतावा" (तैब्रा ३ ५ १२ ) इति। अयमग्निर्देवानामाह्वाता गृहाणां पालकः। स च राजा दीप्यमानस्तादृशो जातवेदा देवानां विश्वा जनिमा सर्वाणि जन्मानि वेद। अपि च, यो जातवेदा मर्त्यानां जन्मानि वेद स जातवेदाः प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये यजिष्ठोऽतिशयेन यष्टृतमः। ऋतावा [47]सत्यवान्॥

तत्रैव याज्यामाह– "वयमु त्वा गृहपते जनानाम्। अग्ने अकर्म समिधा बृहन्तम्। अस्थूरि णो गार्हपत्यानि सन्तु। तिग्मेन नस्तेजसा सꣳशिशाधि" (तैब्रा ३ ५ १२ ) इति। हे गृहपतेऽग्ने, जनानां मध्ये वयमेव त्वां समिधा [48]सदीपनेन बृहन्तमकर्म प्रौढं कृतवन्तः। तस्माद्गार्हपत्यानि गृहपतिना संयुक्तानि कर्माणि [49]नोऽस्माकमस्थूरि सन्तु [50]अक्लिष्टानि भवन्तु। तिग्मेन तीक्ष्णेन वैरिभिरप्रधृष्येण तेजसा त्वमस्मान् संशिशाधि तीक्ष्णीकुरु निर्भयान् कुर्वित्यर्थः॥

मन्त्रकाण्डे [51]पत्नीसयाजयाज्यानुवाक्याभ्याम् उपरिष्टात् इडोपाह्वानम् [52]आज्यप्राशनं [53]चाऽऽम्नातम्। तस्य विनियोगं बौधायनो दर्शयति– 'अथोत्तरामिडामुपह्वयते यथासमाम्नातम्" इति। पाठस्तु– "उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उप मा रथन्तरꣳ सह पृथिव्या ह्वयताम्। उपहूतं वामदेव्यꣳ सहान्तरिक्षेण। उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम्। उपहूतं बृहत् सह दिवा। उप मा बृहत् सह दिवा ह्वयताम्। उपहूताः सप्त होत्राः। उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुः सहर्षभा। उप मा धेनुः सहर्षभा ह्वयताम्। उपहूतो भक्षः सखा। उप मा भक्षः सखा ह्वयताम्। उपहूताꣳ हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयताम्। इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी। ब्रह्म देवकृतमुपहूतम्। दैव्या अध्वर्यव उपहूताः। उपहूता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपत्नीं वर्धान्। उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतेयं यजमाना। इन्द्राणीवाविधवा। अदितिरिव सुपुत्रा। उत्तरस्यां देवयज्यायामुपहूता। भूयसि हविष्करण उपहूता। दिव्ये धामन्नुपहूता। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता। विश्वमस्याः प्रियमुपहूतम्। विश्वस्य प्रियस्योपहूतस्योपहूव" (तैब्रा ३ ५ १३ ) इति। पूर्वोक्तमिडोपाह्वानं यजमानार्थम्। इदं तु पत्न्यर्थम्। अत एव तत्र तत्र स्त्रीलिङ्गप्रयोगः। ब्राह्मणे पत्नीसयाजयाज्यानुवाक्ये विधायेडोपाह्वानमन्त्रस्य पूर्ववद् व्याख्येयत्वादसावत्रोपेक्षितः॥

---

४७ आ शृ हा–सत्यवाक्। ४८ क ङ होः–समिधनेन। ४९ ङः–'नोऽस्माकम्' नास्ति। ५० क ना–अक्षीणानि हा–अश्लिष्टानि अ आ इ ङ पा–अश्लिष्टानि। ५१ क–°याज्यापुरानुवाक्यानाम्, ङ ङः शृ होः–°याज्यानुवाक्यानाम्। ५२ क ङ मू–°प्राशनाय। ५३ क ङ ङः शृ होः–'च' नास्ति।

पुङ्क्तिप्रायणो वै यज्ञः पुङ्क्त्युदयनुः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयुजुः पञ्चमं पुङ्क्तिमेवानु प्रयन्ति पुङ्क्तिमनूद्यन्ति ॥१०॥

[ प्रजायां करोति तत् क्रियते त्र्यस्त्रिंशच्च ]

---

पुङ्क्तिप्रायण इति पुङ्क्ति प्रायण । वै । यज्ञ । पुङ्क्त्युदयन इति पुङ्क्ति उदयन । पञ्च । प्रयाजा इति प्र याजा । इज्यन्ते । चत्वार । पत्नीसयाजा इति पत्नी सयाजा । समिष्टयजुरिति समिष्ट यजु । पञ्चमम् । पङ्क्तिम् । एव । अन्विति । प्रयन्तीति प्र यन्ति । पुङ्क्तिम् । अनु । उदिति । यन्ति ॥ १० ॥

[ यज्ञा १ ९ १ २४-२ २५ ]

---

पङ्क्तिप्रायण इत्यादि ॥ समिष्टयजुषो विधि । प्रायण प्रारम्भ । उदयन समाप्ति । पङ्क्तिपञ्चक प्रायणीय उदयनीयश्च द्वय यस्येति बहुव्रीहि । प्रायणोदयनहेतुत्व [१२] पङक्तेरनुशब्देन द्योत्यते । पङ्क्त्या हेतुना सर्वे [१३]ऋत्विग्यजमाना समीचीन यज्ञ प्रारभन्ते, समीचीन समापयन्ति, [१४]उभयभाजो भवन्तीति । "चादिलोपे विभाषा" ( पा८ १ ६३ ) इति प्रथमा तिङ्विभक्ति न निहन्यते । समासगतिनिघातावुक्तौ ॥

इति द्वितीये षष्ठे दशमोऽनुवाक ॥

---

पङ्क्तिप्रायण इति ॥ अथ समिष्टयजुर्विधिमर्थवादेनोन्नयति– 'पङ्क्तिप्रायणो वै यज्ञ पङ्क्त्युदयन पञ्च प्रयाजा इज्यन्ते चत्वार पत्नीसयाजा समिष्टयजु पञ्चम पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति' । इति ॥ "पञ्चाक्षरा पङ्क्ति" ( तैस ६ १ २ ) इत्यन्यत्र श्रुतत्वादत्र पङ्क्तिशब्देन [५२]पञ्चसख्या लक्ष्यते । सय पङ्क्ति प्रायणे प्रारम्भे यस्य सोऽय [५३]पङ्क्तिप्रायण । [५४]तथा पङ्क्तिरुदयने समाप्तौ यस्य सोऽय [५५]पङ्क्त्युदयन । अत्र दर्शपूर्णमासेष्टौ प्रारम्भे [५६]पञ्च [५७]प्रयाजा [५८]इज्यन्ते, समाप्तौ [५९]पत्नीसयाजा [६०]चत्वार, [६१]समिष्टयजु [६२]पञ्चमम् । तथा सति [६३]पङ्क्तिमम् [६४]एव प्रारभन्ते [६५]पङ्क्तिम् एव [६६]समापयन्ति । तस्मात् 'समिष्टयजुर्जुहुयात्' इति तात्पर्यार्थ । "देवा गातुविद" ( तैस १ १ १३ ) इत्यय मन्त्र इष्टिसपूर्तिकारित्वात् समिष्टयजुरित्युच्यते । स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च ॥

---

१२. तै३–पूर्वोक्तेरनुशब्देन । १३ ए–ऋत्विग्भ्य यज० । १४ त्रि ए– 'उभयभाज' इत्यस्यानन्तर 'शिवा', मे४–उदयनीयभाज ।

---

५४ ग२–पञ्चसन्दोप', ह इ,१–पञ्चमलोप' । ५५ आ–याग । ५६ अ आ इ क जो पा हा–गंरन्दयन्ति ।

अत्र मीमांसा ॥ तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्–

" विप्रायापगुरेतेति [57]क्रत्वर्थो वा[57] पुमर्थता ।
फलवत् क्रतुसांनिध्यात् क्रत्वर्थः पूर्वमन्त्रवत् ॥
यातना परिहारस्य निषेधफलतोचिता ॥
निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यताम् " ॥ ( जैन्या ३·४·१८–१९ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– "यो ब्राह्मणायापगुरेत् तं शतेन यातयात् तस्माद्ब्राह्मणाय [58]नापगुरेत " ( द्र. तैसं २·६·१० ) इति। तत्र यथा पूर्वाधिकरणे ( मीसू ३·४·२०–२२ जैन्या ३·४·१७ ) मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते, एवमत्रापि ब्राह्मणवधनिषेधस्य [59]क्रत्वङ्गत्वमिति चेत्। [60]नैवम्। वैषम्यात्। पूर्वत्र [61]ह्यात्मनि प्राणापानधारणं मन्त्रोच्चारणफलं [62]न संभवति[62] [63]तस्य प्रागेव सिद्धत्वात्[63]। इह [64]त्वपगोरणे शतसंवत्सरयातनामुपन्यस्य [65]अपगोरणनिषेधस्य करणात्[65] यातनापरिहारस्य निषेधफलत्वमुचितम् । तस्मान्निषेधस्य [66]केवलपुरुषार्थतया प्रकरणात् [67]अपकर्षः युक्तः ॥

तत्रैव [68]तृतीयपादे चिन्ततम्—

" संयाजयन्ति जाघन्या पत्नीरित्यपशावुत ।
दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः ॥
जाघनी नाम भागोऽसौ दर्शादौ समवैति हि ।
नोत्कष्टव्यं न [69]संस्कारः साधनत्वात् तृतीयया ॥ " ( जैन्या ३·३·३७·३८ ) ॥

दर्शपूर्णमासप्रकरणे श्रूयते– " जाघन्या पत्नीः संयाजयन्ति " ( आपश्रौ ३·८·१० ) इति। जाघनी पशोः पुच्छम्। [70]पत्नीशब्दोऽयाऽऽहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः। अत एव श्रूयते " पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः " ( तैसं २·६·१० ) [70]इति। तत्र तृतीयाहुतौ [71]देवपत्नीनां[71] देवतात्वात् तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः। तत्र जाघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते। जाघनी च पशौ समवेता न तु दर्शपूर्णमासयोः। अतः प्रकरणादुत्कृष्य पशौ [72]निवेश्यतामिति प्राप्ते ब्रूमः– जाघनीशब्देन पशोर्भागोऽभिधीयते। स च दर्शपूर्णमासयोः पशुयागत्वाभावेऽपि मत्स्यादिना संपादयितुं शक्यते। न चात्र पशौ [73]विद्यमानाया जाघन्याः पत्नीसंयाजैः[73] संस्कार्यत्वं, तृतीयया साधनत्वावगमात्। तस्मान्न प्रकरणादुत्कर्षः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥

---

५७–५७. अ.इ.उ.पा–क्रत्वर्थोऽथ; ड.ड१.गृ–क्रत्वर्थेत। ५८. आ–नापगुरेत्। ५९. अ.आ.इ.उ.क.बो.ना.पा.हा–क्रतावङ्गत्वादिति। ६०. ड.ड१–न। ६१. आ.क–ह्यात्म°। ६२–६२. अ.इ.उ.पा–अविदितस्य; ड.ड१–गृ.हो१–न भवति। ६३–६३. अ.इ.उ.पा–प्रागेव सिद्धत्वात्; क.बो.ना.हा–'तस्य प्रागेव सिद्धत्वात्' नास्ति। ६४. आ.ड.ड१.गृ.हो१–त्वपगोरणे। ६५–६५. आ.क.बो.ट.ड१.ना.गृ.हो१–अपगोरणनिषेधात्। ६६. अ.इ.उ.पा–°पुरुषार्थत्वेन। ६७. ड.ड१.गृ.हो१–उत्कर्षः। ६८. इ.उ.बो.ना.पा.हा–तृतीये। ६९. आ.ड.ड१.गृ–संस्कार्य°। ७०. अ.उ.पा–°शब्दश्चाहुति°। ७१–७१. क–देवपत्नीनामिति तृतीयाहुतौ; हा–इति तत्र तृतीयाहुतौ; अ.इ.उ.प–इति तत्र तृतीयाहुत्या देवपत्नीनां। ७२. क.जो.ट.ड१.बो.ना.गृ–निवेशनमिति। ७३. अ.इ.उ.प–विद्यमानत्वाभावः।

युक्ष्वा हि देवहूतमाः अश्वाः अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥

युक्ष्व । हि । देवहूतमानिति देव - हूतमान् । अश्वान् । अग्ने । रथीः । इव । नीति । होता । पूर्व्यः । सद. ॥

अथ [1]सर्वगेष्टेः सप्तदशसामिधेन्योऽनभ्यस्ताः । 'युक्ष्वा हि' इत्याद्याः सर्वा. गायत्र्यः ॥ [2]तत्र प्रथमा[3]– ['युक्ष्वा हि' इति]; हे 'अग्ने, 'युक्ष्व योजय। छान्दसो लुक् शप, "द्व्यचोऽतस्तिङः" (पा ६·३·१३५) इति संहितायां दीर्घत्वम्। 'देवहूतमान् देवानामाह्वातृतमान् 'अश्वान् व्यापनान् ज्वालासमूहान् । उभयत्रापि "दीर्घादटि समानपादे" (पा ८·३·९) इति रुत्वम्। 'रथी. 'इव यथा रथी रथवान् रथे अश्वान् युङ्क्ते। "छन्दसीवनिपौ" (पा ५·२·१०९ वा २) इति मत्वर्थीय ईकारः। ततस्तथायुक्तज्वालस्त्वं 'पूर्व्यः पुराणः 'होता देवाना यष्टा 'निषदः निषीद। लेटि व्यत्ययेन शपो लुकि अडागमः ॥

दशमे शंयुवाकश्च पत्नीसंयाजकाः [1]श्रुताः ।
या दर्शपूर्णमासाख्या सेष्टिरत्र समापिता ॥

अथैकादशे [2]सर्वगेष्टिहौत्रमन्त्रा अभिधीयन्ते[2]। ननु "सत्यं प्रपद्ये" (तैब्रा ३·५·१) इत्यादिक एको हौत्रकाण्डः। "उभा वामिन्द्राग्नी" (तैसं १·१·१४) इत्यादिरन्यानुवाकात्मकोऽपरः। [3]तयोर्मध्ये "युक्ष्वा हि" [4]इत्यनुवाको [5]न समाम्नातः। तत् कथमस्य हौत्रत्वम्। समाख्ययेति वदामः। यथा तयोः काण्डयोः [6]याज्ञिकानां समाख्यया हौत्रत्वं एवमस्याप्यनुवाकस्येति द्रष्टव्यम्। अत एवाऽऽपस्तम्ब आह– "अग्नये संवर्गाय पुरोडाशमष्टाकपालम्" इत्युक्तं (सत्या) "युक्ष्वा हि देवहूतमानिति पञ्चदश सामिधेनीरन्वाह। नित्यया परिदधाति। कुविदङ्ग नो गविष्टय इति याज्यानुवाक्ये। यस्याजुपद्विद्या हि त इति संयाज्ये" (आपश्रौ १९·२५·९-१३) इति। नित्यया 'आ जुहोत दुवस्यत' (तैब्रा ३·५·२) इत्यनयेत्यर्थः ॥

युक्ष्वा इति ॥ तत्र प्रथमायाः सामिधेन्याः पाठस्तु– 'युक्ष्वा हि देवहूतमाः अश्वाः अग्ने रथीरिव। नि होता पूर्व्यं सदः' इति॥ हे 'अग्ने, त्वं 'देवहूतमान् 'देवानामतिशयेनाह्वातॄन् 'युङ्क्ष्व योजय। हिशब्दः [10]प्रसिद्धवाची। प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः। योजने दृष्टान्तः– 'रथी' 'अश्वान् 'इव इति। रथस्वामी यथा अश्वान् योजयति तद्वत्। किं च त्वं 'पूर्व्यः पुरातनः 'होता होमोत्पादको भूत्वा 'निषदः अस्मिन् यागस्थाने निषीद॥

१. तं२.मै.हो-संवर्गेष्टेः । २-२. तं.३.ख.हो-'तत्र प्रथमा' नास्ति ।

१. आ.क-भिताः । २-२. गृ.हो१- संवर्गेष्टिहोत्रमभिधीयते । ३. ह१.गृ-न तयोरुभयोः ट-तत्र तयोरुभयोः । ४. ह.ट१.गृ-इत्याद्यनुवाकः । ५. ट१.गृ-'न' नास्ति । ६. ह.ट१.गृ-याज्ञिक' । ७. आ.क-देवानामाह्वातृतमान् देवान् । ८. आ.क-'युङ्क्ष्व' नास्ति । ९. ह.क.गो.
१० ना.दा-'प्रसिद्धवाची' नास्ति, हो१-प्रसिद्धार्थवाची ।

उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥
त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥

उत । नः । देव । देवान् । अच्छ । वोच । विदुष्टर इति विदुः-तर ।
श्रत् । विश्वा । वार्या । कृधि ॥
त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो । आहुतेत्या-हुत ।
ऋतावेत्यृत-वा । यज्ञियः । भुवः ॥

अथ द्वितीया– ‘उत न’ इति ॥ हे देव दीप्तिमन्, अग्ने, अस्माकं कर्मणि देवान् अच्छ वोच आभिमुख्येन ब्रूहि भ्रातृव्यानभिभवितुम् । एते सम्यग्यजन्त इति । छान्दसो लिङ्, “निपातस्य च” (पा ६ ३ १३६) इत्यच्छेत्यस्य संहितायां दीर्घत्वम् । विदुष्टर विद्वत्तर । अयस्मयादित्वेन (पा १ ४ २०) भत्वात् सम्प्रसारणम् । किं च विश्वानि वार्याणि वरणीयानि अभिप्रेतानि भ्रातृव्यमरणादीनि श्रत् कृधि सत्यानि कुरु । यथाभिमतसम्पत्ति सत्यम् । करोतेर्लेटि छान्दसः शपो लुक् । “श्रुशृणुपृकृवृभ्य°” (पा ६ ४ १०२) इति धिभावः ॥

तृतीया– ‘त्वम्’ इति ॥ हे यविष्ठ्य युवतम । छान्दसः स्वार्थिको यत् । सहसः बलस्य सूनो मथनप्रभवत्वात् । हे आहुत नियमाभिमुख्येनाहुत । “सुबामन्त्रिते°” (पा २ १ २) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पदादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्व (पा ६ १ १९८), परस्य त्वाष्टमिकमामन्त्रितानुदात्तत्वम् (पा ८ १ १९) । यत् यस्मात् । ऋतावा सत्यवान् यज्ञवान् वा । तस्मादस्माकमपि यज्ञियः यज्ञसंपादनार्हः भुव भव । त्वमेव तथा भवितुमर्हसीति । भवतेर्लेटि शपो लुकि अडागमे “भूसुवोस्तिङि” (पा ७ ३ ८८)

उतेति ॥ अथ द्वितीया– ‘उत नो देव देवाꣳ अच्छा वोचो विदुष्टर । श्रद्विश्वा वार्या कृधि’ इति ॥ अपि च हे देव अग्ने, त्वं विदुष्टर अतिशयेनास्मदभिप्रायं विद्वान् देवान् प्रति अच्छा आभिमुख्येन गत्वा यजमानो हविर्दास्यतीति वोच ब्रूहि । विश्वा वार्या सर्वाणि वरणीयान्यस्मदभिप्रेतानि श्रत् कृधि श्रद्धेयानि विश्वसनीयानि यथा भवन्ति तथा कुरु ॥

त्वमिति ॥ अथ तृतीया–‘त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुव’ इति ॥ हे आहुत हे यविष्ठ्य युवतम, हे सहसः सूनो बलस्य पुत्र, मथनजन्यत्वाद् बलपुत्रत्वम् । हे आहुत देवानामाह्वातः, त्वं ह त्वमेव यत् यस्मात् ऋतावा सत्यवानस्मात् यज्ञिय भुव यज्ञसाधको भव ॥

३ ल–‘अग्ने’ नास्ति । ४ तै१ त्रि मै४ ह्री–अच्छा । ५ तै१–‘विद्वत्तर’ नास्ति । ६ तै१ ल ह्री–कुरुत । ७ मै–°रुति निपातस्य (?) । ८ तै१ ह्री–°प्रभवत्वात् ।

१० आ क–°साधनो ।

अयमुग्निः सहस्रिणो वार्जस्य शतिनुस्पतिः । मूर्धा कुवी रयीणाम् ॥
तं नेमिमृभवो यथाऽऽ नमस्व सहूतिभिः । नेदीयो युज्ञम(१)ङ्गिरः ॥

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ॥
मूर्धा । कविः । रयीणाम् ।
तम् । नेमिम् । ऋभवः । यथा । एति । नमस्व । सहूतिभिरिति सहूति - भिः ।
नेदीयः । यज्ञम् (१) । अङ्गिरः ॥

इति गुणाभावः । "हि च" (पा ८ १ ३४) इति निघाताभावः । ऋतशब्दान्मत्वर्थीयो वनिप्रत्ययः । यज्ञशब्दात् "यज्ञर्त्विग्भ्याम्°" (पा ५ १·७१) इति घः ॥

चतुर्थी– 'अयम् इति' ॥ अयं खलु अग्निः पतिः स्वामी रयीणां सर्वधनानाम्, तस्मादिहैव समिन्धयाम इति । अग्निरिदानीं विशेष्यते– सहस्रिणः शतिनः च शतप्रमाणवतः सहस्रप्रमाणवतश्च वाजस्य अन्नस्य पतिः स्वामी, अत एव मूर्धा प्रधानभूतः कविः क्रान्तदर्शनः । तस्मादयं रयीणां दाताऽस्त्विति भावः । रयीणामित्यत्र "नामन्यतरस्याम्" (पा ६ १ १७७) इति विभक्तेरुदात्तत्वम् ॥

पञ्चमी– ' 'तं नेमिम्' इति ' ॥ हे अग्ने, नेदीयः अन्तिकतमं सदा अस्माकं प्रत्यासन्न अङ्गिरः अङ्गनादिगुणयुक्त तम् इमम् यज्ञम् आनमस्व अस्मान् प्रति प्रह्वीभूतं कुरु । अस्मदभिमतसंपादनोन्मुखं कुरु । सहूतिभिः समानाह्वाने सहायैः सह । यद्वा – नेदीयः अन्तिकतममानमस्व । यथा ऋभवः देवतक्षाणः नेमिं नीयमानम् आवर्तयन्ति

अयमिति ॥ अथ चतुर्थी– 'अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम्' इति ॥ अयं समिध्यमानः अग्निः सहस्रसंख्याकस्य शतसंख्याकस्य च वाजस्य अन्नस्य पतिः अत एव मूर्धा शिरोवदुत्तमः कविः विद्वान् रयीणां धनानां दाता भवतु ॥

तमिति ॥ अथ पञ्चमी– 'तं नेमिमृभवो यथाऽऽ नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिर' इति ॥ हे अङ्गिरः अङ्गसौष्ठवयुक्ताग्ने, समाना हूतिर्देवानामाह्वानं येषामृत्विजां ते सहूतयस्तैः सहूतिभिः युक्तस्त्वं तं यज्ञम् अस्माकं नेदीयः अत्यन्तसमीपं प्रति आनमस्व आनीय वशं कुरु । तत्र दृष्टान्तः – ऋभवः नेमिं यथा इति । यथा देवतक्षाणो रथचक्रस्य नेमिमानीय स्ववशत्वेन परिभ्राम्यमाणां कुर्वन्ति तद्वत् ॥

९. हो–सर्वधातूनाम् । १० तै३ ल हो–विभक्त्यु° । ११–११. त३ मै मै४ ल हो–तमिति । १२–१२ हो–°युक्तमिदं यजमानः स्यास्मात् प्रतिबिम्बित ।

११ आ क हो–इध्यमानः । १२–१२. क द१–शतसंख्यावत सहस्रसंख्यावत । १३–१३ क–याजिनोऽन्नस्य । १४ आ क–शिरोवदुद्यत । १५ क द१ ग२ हो१–विद्वान् तादृश । १६ अ र ओ पा हा–तादृशोऽग्ने । १७ क युक्तः तादृश त्वं । १८ आ क–समीपं । १९ आ.क–'नेमिं' नास्ति । २० क हो१–'तद्वत्' नास्ति ।

**तस्मै॒ नू॒नम॒भिद्य॑वे वा॒चा वि॑रूप॒ नित्य॑या । वृष्णे॑ चोदस्व सुष्टु॒तिम् ॥**
**कमु॑ ष्वि॒दस्य॒ सेन॑या॒ऽग्नेरपा॑कचक्षसः । प॒णिं गोषु॑ स्तरामहे ॥**

तस्मै॑ । नू॒नम् । अ॒भिद्य॑व॒ इत्य॒भि - द्य॒वे । वा॒चा । वि॒रू॒पेति॒ वि - रू॒प॒ । नित्य॑या ।
वृष्णे॑ । चो॒द॒स्व॒ । सु॒ष्टु॒तिमिति॑ सु - स्तु॒तिम् ॥
कम् । उ॒ । स्वि॒त् । अ॒स्य॒ । सेन॑या । अ॒ग्नेः । अपा॑कचक्षस॒ इत्यपा॑क - च॒क्ष॒सः ।
प॒णिम् । गोषु॑ । स्त॒रा॒म॒हे॒ ॥

तद्यज्ञमानगयेति । [13]अन्तर्भावितण्यर्थस्य व्यत्ययेनात्मनेपदम् । " यथेति [14]"पादान्ते " ( फि ८५ ) इति यथेत्यस्य निघातः ॥

षष्ठी– ' तस्मै ' इति । नूनम् इति पादपूरणे । हे अग्ने विरूप नानारूप, तस्मै यज्ञैराधनीयाय अभिद्यवे अभिगतदीप्तये वृष्णे वर्षित्रे इन्द्राय इन्द्रार्थं वाचा नित्यया वैदिक्या ऋगादिरूपया सुष्टुतिं शोभनां स्तुतिं शोभनस्तुतिक वा यज्ञं चोदस्व प्रेरय पुनः पुनः प्रवर्तय । यद्वा–आमीक्ष्ण्य नित्यत्वं, यथा नित्यप्रहसित इति; पुनः पुनः प्रवर्तमानया वाचा सुष्टुतिं प्रवर्तयेति । यथा पुनः पुनः स्तुवीत यजमान. तथा धनादिना समृद्ध कुर्विति । [15]सुष्टुतिशब्देन *गतिसमासे* " मन्क्तिन्व्याख्यान° " ( पा ६.२.१५१ ) इत्यादिना उत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ छान्दसं पत्वम् । कश्चिदाह– तस्मै यजमानाय हविषां वर्षित्रे पुनः पुनः यज्ञ [16]प्रवर्तयेति ॥

सप्तमी– ' कमु ष्वित् ' इति ॥ कम् इति प्रश्ने, उ इत्यवधारणे, स्वित् इति वितर्के । [17]अस्य अग्नेः अपाकचक्षसः अनल्पदर्शनस्य प्रवृद्धज्ञानस्य सेनया बलसपत्त्या कमेव

**तस्मा इति** ॥ अथ षष्ठी– ' तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ' इति ॥ हे विरूप विविधरूपयुक्ताग्ने, अभिद्यवे सर्वतो द्योतमानाय वृष्णे [21]कामानां वर्षयित्रे तस्मै यष्टव्याय देवाय नित्यया वैदिकमन्त्ररूपया वाचा अस्माभिः क्रियमाणां सुष्टुतिं शोभनां स्तुतिं नून चोदस्व सर्वथा प्रेरय तदग्रे कथयेत्यर्थः ॥

**कमिति** ॥ अथ सप्तमी– ' कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ' इति ॥ पाकोऽल्पः । चक्षो ज्ञानम् । अपाकं [22]चक्षो [23]यस्यासावपाकचक्षाः [24]सर्वज्ञ इत्यर्थः । सर्वं जानतः अस्य अग्नेः सेनया परिचारकजनेन सह गोषु गवादिद्रव्यविषये कम् उ पणिं स्तरामहे स्वित् कं नाम व्यवहारमाच्छादयामः । [25]एतदीयं परिचारकजनं[25] वर्जयित्वा न कोऽपि व्यवहारोऽस्माभिः कर्तुं शक्यते । तस्मात् सर्वमपि व्यवहारमस्यानुग्रहेणैव कुर्म इत्यर्थः ॥

१३ तै३.मै.ल हो–अन्तर्भावितन्य । १४ मै.तै२.हो–पदान्ते । १५. तै.३तै–सुष्टुशब्देन । १६. तै–प्रवर्तयति । १७. हो–' अस्य ' नास्ति ।

२१. अ.आ.इ ओ.ड.पा–काम्यानां । २२. हो१–' चक्षो ' नास्ति । २३. ड.इ१–°चक्षाः । २४. इ–सर्वज्ञस्य । २५–२५. इ–एतदीयपरिवारकजनम् ।

मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्नियाः ॥
मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत् ॥

मा । नः । देवानाम् । विशः । प्रस्नातीरिति प्र स्नातीः । इव । उस्राः । कृशम् । न । हासुः । अघ्नियाः ॥

मा । नः । समस्य । दूढ्यः । परिद्वेषस इति परि द्वेषसः । अंहतिः । ऊर्मिः । न । नावम् । एति । वधीत् ॥

उ खलु पणिं साव्यवहारिकं क्रयविक्रयादानभोगादिलक्षणं गोषु गवादिधनविषयेषु स्तरामहे छादयाम । न किञ्चिदपि, सर्वमपि व्यवहारं कुर्म एव । पण व्यवहारे, औणादिक इप्रत्ययः, स्तृणातेर्विकरणव्यत्ययेन शप्, खिदित्यस्य छान्दसं षत्वम् ॥

अष्टमी 'मा न' इति ॥ देवानां हविर्व्यवहारिणां यजमानानां संबन्धिन्यः विशः प्रजा ऋत्विजो वा नः अस्मान् मा हासुः मा त्याक्षुः, प्रस्नातीः प्रस्नाय प्रस्नुताः उस्राः गाः इव अहन्तव्याः अघ्नियाः । यद्वा अघ्निया इति गवां नाम । उस्राः क्षीरादिदानेन जगतां वासयित्र्यः । कमिव ? कृशं न वत्समिव, प्रस्नुतस्तन्यं हि गावो वत्सकं विशेषेण न जहति । एवम् अस्मान् मा हासिषुरिति । उभयोपमार्थीयाऽपि वाक्यार्थोपमा भवतीयुपमेतत् ॥

नवमी– 'मा न' इति ॥ समस्य सर्वस्यापि दूढ्यः दुर्धीयः । पृषोदरादिः । परिद्वेषसः सर्वतो द्वेषणशीलस्य भ्रातृव्यस्य अंहतिः अभिभवः नः अस्मान् मा वधीत्

मेति ॥ अथाष्टमी–'मा नो देवानां विश प्रस्नातीरिवोस्राः । कृशं न हासुरघ्नियाः' इति ॥ देवानां संबन्धिन्यः विशः वाणिज्यकारिण्यः प्रजाः नः अस्मान् मा हासुः नैव परित्यक्तवत्यः । का इव ? प्रस्नातीः प्रस्नुतवत्यः उस्राः क्षीरादिप्रदानेन वासहेतवः अघ्नियाः इव गाव इव । कमिव ? कृशं न अल्पवयस्कं वत्समिव । यथा क्षीरपूर्णस्तनयुक्ता गावः शिशुं वत्सं न त्यजन्ति तद्वदित्यर्थः ॥

मेति ॥ अथ नवमी– 'मा न समस्य दूढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत्' इति ॥ समस्य अस्माभिः समानस्य दूढ्यः दुर्धियः परिद्वेषसः सर्वतो द्वेषं कुर्वतः शत्रोः अंहतिः अस्मासु कृतो द्रोहः नः अस्मान् आ समन्तात् मा वधीत् । का केव ? नावम् ऊर्मिः न । यथा नद्यां गच्छन्तीं नावमूर्मिर्न विनाशयति तद्वद्वैरिकृतो द्रोहोऽस्मान् मा विनाशयतु । सर्वशब्दपर्यायो वाऽयं समशब्दः, सर्वस्य वैरिणो द्रोहो मा विनाशयतु ॥

१८ त३ त्रि पर ल हो–व्यवहारकम् । १९–१९ तै३–गोष्ठगवादिधनविषयम् । २० मै४–तत् । २१ हो–एवम् । २२ मै हो–तृणाते मै४ ल–स्तृणोते । २३–२३ ल–प्रस्नाति प्रस्नुता । २४ मै४–प्रस्नाता । २५ तै३–इति । २६ त३ मै–किमिव । २७ तै३ त्रि मै४ ल हो–°स्तया । २८ मै ३–माम् । २९ मै हो–हासु । ३० तै३ मै ल हो– 'न' नास्ति ।

२६ आ क–संबन्धिन । २७ उ हो१–मैव । २८ आ–प्रस्नुता । २९ इ१–व्यवहारहेतवः । ३० आ–किमिव । ३१ क जो हा– 'समस्य' नास्ति । ३२ आ क–नाशयति । ३३ इ२ हा१–द्वेषिणः ।

**नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैर(२)मित्रमर्दय ॥**
**कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥**

नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः । अमैः । (२) । अमित्रम् । अर्दय ॥
कुवित् । स्विति । नः । गविष्टय इति गो - इष्टये । अग्ने । संवेषिष इति सं - वेषिष । रयिम् ।
उरुकृदित्युरु - कृत् । उरु । नः । कृधि ॥

[31]माऽस्मानवधिषुः । Vनात्र दुर्बला Vऊर्मिः इव । कश्चिदाह– समस्य समानस्य [32]दूढ्यः मत्सरिण । समानमन्यत् ॥

दशमी– 'नमस्ते' इति ॥ हे Vअग्ने, Vनमः, Vते तव खलु Vओजसे बलाय Vकृष्टयः मनुष्याः Vगृणन्ति शब्दयन्ति । [33]तवैव बलं स्तुवन्ति यजमानादयः । अत त्वम् Vअमित्रम् अस्माकमपकारिणं शत्रुम् Vअमैः अमनैः रोगादिभिः [34]Vअर्दय मारय । अमेरित्रप्रत्यय (उ ६२३) । अन्यत्र पचाद्यचि ( पा ३·१·१३४ ) [35]वृषादिः ( पा ६·१·२०३ ) द्रष्टव्यः ॥

एकादशी– 'कुवित् सु' इति ॥ हे[36] Vअग्ने, Vनः अस्माकं Vरयिं धनं Vसु Vसंवेविषः सुष्ठु समन्तात् । प्रापय । Vकुवित् इति निपातो भूयिष्ठमित्यस्यार्थे वर्तते । [37]विष्लृ व्याप्तौ । लेटि "लेटोऽडाटौ" (पा ३·४·९४) "सिब्बहुलं लेटि" ( पा ३·१·३४ ) इति [38]सिप् प्रत्ययः[39] । इत्यडागमः । Vगविष्टये गावश्च इष्टयश्च गविष्टि, तदर्थं तत्साधनानि कर्माणि मे स्युरिति । इदानीं [40]तत्प्रापित लिङ्गव्यत्ययः छान्दसः, नुमभावो [41]वा छान्दसः । [42]उत्तमबहुलधनं प्रापयेति । बहुतरं कुर्वित्याशास्ते– Vउरुकृत् उरुणो [43]बहुनो धनस्य कर्तः, न हि त्वमल्पं कर्तुं जानासि ।

नम इति ॥ अथ दशमी– 'नमस्ते अग्न ओजसे गृणन्ति देव कृष्टय । अमैरमित्रमर्दय' इति ॥ हे Vदेव Vअग्ने, Vकृष्टयः मनुष्याः Vते तव Vओजसे बलाय Vनमः Vगृणन्ति [34]नमस्कारवाचिनं शब्दं प्रयुञ्जते यजमानादयस्त्वदीयं बलं [35]नमस्कुर्वन्तीत्यर्थः । अतस्त्वम् Vअमित्रम् अस्माकमपकारिणम् [36]Vअर्दय मारय, Vअमैः रोगादिभिः ॥

कुविदिति ॥ एवं दश सामिधेनीरुक्त्वा पुरोनुवाक्यामाह– 'कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि' इति ॥ हे Vअग्ने, त्वं Vनः अस्माक Vरयिं धनं Vकुवित् बाहुल्यं यथा भवति तथा सुष्ठु Vसंवेषिषः [37]सम्यग्व्याप्तमकरोः । किमर्थम् ? Vगविष्टये गोभिः सहितेष्टिर्गविष्टिस्तदर्थम् Vउरुकृत् प्रभूतकारी [38]त्वं Vनः [39]अस्मदीयं [40]कर्मफलम् Vउरु Vकृधि प्रभूतं कुरु ॥

३१. मै४.हो–अस्मान् मा वधिष्ट । ३०. तं३.मै४.ल हो–दुर्धियः । ३३. तं३–तथैव । ३४. तं३.लं–'अर्दय' नास्ति । ३५. त्रि–पृषोदरादिः । ३६. तं३.मै–'हे' नास्ति । ३७. तं३.मै.ल हो–निर । ३८–३८. तं३.मै.ल.हो–'सिप् प्रत्यय.' नास्ति । ३९. मै–'वा' नास्ति । ४०. मै४–उक्तं बहु धनं । ४१. तं३.मै.ल.हो–तत्प्रापितम् । ४२. मै४–बहु° ।

३४. ट–°वाचकं । ३५. ट१.–स्तुवन्ती° । ३६. हा–मर्दय । ३७. ट–सम्यग्व्याप्तिमकरो. । ३८. ट.ट१.ग२.हो१–'त्वं' नास्ति । ३९. आ.क–अस्माकं । ४०. ग२–फलम् ।

मा नो॑ अ॒स्मिन् म॑हाध॒ने परा॑ वर्ग्भार॒भृद्य॑था । सं॒वर्गं॒ सꣳ र॒यिं ज॑य ॥
अ॒न्यम॒स्मद्भि॒या इ॒यम॑ग्ने॒ सिष॑क्तु दु॒च्छुना॑ । वर्धा॑ नो॒ अम॑व॒च्छवः॑ ॥

मा । न॒ । अ॒स्मिन् । म॒हा॒ध॒न इति॑ महा - ध॒ने । परेति॑ । व॒र्क् । भा॒र॒भृदिति॑ भा॒र - भृत् । य॒था ।
सं॒वर्ग॒मिति॑ स - वर्ग॑म् । समिति॑ । र॒यिम् । ज॒य ॥
अ॒न्यम् । अ॒स्मत् । भि॒यै । इ॒यम् । अ॒ग्ने॒ । सिष॑क्तु । दु॒च्छुना॑ । वर्ध॑ । न॒ः । अम॑व॒दित्यम॑ - व॒त् । शव॑ ॥

पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। नः अस्माकं धनम् उरु कृधि बहुतर कुरु । सामर्थ्यातिशयो गम्यते। "नश्च धातुस्थोरुषुभ्य " ( पा ८·४·२७ ) इति नसो णत्वम्, "क करत्करति° " ( पा ८·३·५० ) इति सत्वम्। करोतेर्लेट्, पूर्ववच्छपो लुक्, विभावश्च ॥

द्वादशी– ' मा न ' इति ॥ उक्त महत्तर धन देहीति तत्र महाधने त्वया अस्मिन् दीयमाने इत्थ कर्तव्यम् । भारभृदिति । मा परावर्क् मा परानैषी· । यथा महान्त भार वोढु समर्थो भार न इति न किंचित् परावर्जयति महान्तमपि भारमानयति । एव त्वयाऽपि कर्तव्यम् । वृजेर्लेटि " मन्त्रे घस° " ( पा २·४·८० ) इति च्लेर्लुक् । किं च– संवर्गम् सवृज्य सवृज्य देये धनराशौ पुन· पुन समानीय महान्त धनराशिं सजय सम्यक् जित्वा आनय । वर्जेराभीक्ष्ण्ये णमुल् ( पा ३ ४·२२ ) । छान्दसो वा घमुन् ॥

त्रयोदशी– ' अन्यम् ' इति ॥ हे अग्ने, अस्मत् अस्मत्त अन्यं शत्रुम् इय दुच्छुना दौर्गत्य दुर्भिक्ष नरकादिरूपा या पीडा सिषक्तु सेवताम् । सचेर्लोटि " बहुल छन्दसि "

मेति ॥ अथ याज्यामाह- ' मा नो अस्मिन् महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय ' इति ॥ नः अस्मभ्यं त्वया दत्ते अस्मिन् महाधने मा परावर्क् पराभवकारणं वर्जनं विनाशनं मा कुरु । तत्र दृष्टान्तः – भारभृत् यथा इति । लोके यथा भारवाही बलीवर्दादिर्द्रव्यादिकं न नाशयति तद्वत् । किं च, संवर्गं संवृज्य सवृज्य देये धनराशौ पुनः पुनः समानीय रयिं संजय प्रभूतं धनं सम्यक् प्रापय ॥

अन्यमिति ॥ तत्रैव विकल्पितां याज्यामाह- ' अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः ' इति ॥ हे अग्ने इयं दुच्छुना रोगरूपा दारिद्र्यरूपाऽनेकरूपा या पीडा अस्मत्

४३–४३. मै–उत्तमं महत्तमम् । ४४. मै४–अस्मभ्यम् । ४५. मै४.ट–पराजैषीः । ४६. हो–परावयति । ४७. [ शुद्धीकृतोऽयं पाठ· । मै–पुस्तके ' मजेर्लेटि ' इति पाठ· । स चानुपयोगादाकर-ग्रन्थविरोधाच्च परिहरणीयः । ] । ४८–४८. मै हो–सवृज्य ।

४१. आ–याज्या । ४२–४२. आ–सवृज्य सवृत्य, हो१–संवृत्य सवृत्य, ट१–' संवृज्य सवृ'य ' नास्ति । ४३. ग.हो१–रोगदारिद्र्यरूपा ।

यस्याजु॑षन्न॒मस्वि॑नः॒ शमी॒मदु॑र्मखस्य वा ।
तं घेद॒ग्निर्वृ॒धाऽवति ॥

यस्य॑ । अजु॑षत् । न॒म॒स्विनः॑ । शमी॑म् । अदु॑र्मखस्येत्यदुः॑-मखुस्य । वा ।
तम् । घ । इत् । अ॒ग्निः । वृ॒धा । अ॒व॒ति ॥

( पा २·४·७६ ) इति शपः श्लुः ; इन्द्र चाभ्यासस्य । मियै भयार्थं यथाऽसौ भीतः पलायेत । नः अस्माकं तु शव बलं वर्धय । अमवत् अमसाधनः भ्रातृव्यक्षयो येरतद्वत् वल वर्धय । "अणावकर्मकात्°" इति (पा १·३·८८) परस्मैपदम् । "छन्दस्युभयथा" ( पा ३·४·११७ ) इति शप आर्धधातुकत्वाण्णिलोपः, "द्व्यचोऽतस्तिङः" ( पा ६·३·१३५ ) इति संहितायां दीर्घत्वम् ॥

चतुर्दशी– 'यस्य' इति ॥ यस्य नमस्विनः अन्नवतः पुरोडाशादिहविःसंपादिनो यजमानस्य शमीं कर्म अजुषत् सेवते प्रीतो भजते । कीदृशस्य अदुर्मखस्य अविगुणयज्ञस्य, तमेवाग्निः वृधा वर्धनेन अवति तर्पयति । प्रवृद्ध वा रक्षति । घेदिति पादपूरणे । केचिदाहुः– नमस्विनो नमस्कारशीलस्य वा अविगुणयज्ञस्य वा कर्मेति विकल्पार्थो वाशब्द इति । घेति पादपूरणे, इदित्यवधारणे ॥

अन्यं सिपक्तु अस्मत्तो व्यतिरिक्तं वैरिणं संबध्नातु । किमर्थम्? मियै भीत्यर्थम् । यथा पीडया वैरी भीतः पलायते तथा पीडां प्राप्नोतु । नः अस्माकं शवः वर्धे बल वर्धय । किंवत्? अमवत्, यथा वैरिणः अमः रोगो वर्धेत तद्वत् ॥

यस्येति ॥ अथ स्विष्टकृतः पुरोनुवाक्यामाह– 'यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधाऽवति' इति ॥ दुष्टोऽङ्गविकलो मखो यज्ञो दुर्मखः । न विद्यते दुर्मखो यस्य यजमानस्य सोऽयमदुर्मखः, सम्यगनुष्ठितयज्ञ इत्यर्थः, तस्य, नमस्विनः भक्त्या नमस्कुर्वतः यस्य यजमानस्य शमीं सुखकरीमाहुतिम् अजुषत् अग्निः असेवत । अदुर्मखस्य सम्यगनुष्ठायिनः वा यस्य यजमानस्य शमीमजुषत् तं घेत् तमेवोभयं नमस्कुर्वन्तं सम्यगनुतिष्ठन्तं वाऽयम् अग्निः वृधा धनादिवर्धनेन अवति रक्षति ॥

४९. तै१.मै–आमसाधनम्; हो–अमसाधनम् ।

५४. आ.क–'सिपक्तु' नास्ति । ५५–५५. क.ह१.मै.हो१–सा पीडा तं । ४६. अ.भा.ई. ५५ ४७. आ–°वाक्या । ५७. क.ह१–'अन्य' नास्ति । ४८. आ–°द्दर१° । उ.क.मो.पा.हा–किं तत् । ४७–४७ आ–यस्य वैरिणामभो रोगो वर्धितः । ५१. ट–°मयसिध्यम् । ५२. ह१–'सम्यगनुतिष्ठन्तं' नास्ति ।

परेस्या अधि (३) संवतोऽवेरा॒ᳶ अ॒भ्या तेर । य॒त्राहम॒स्मि ताᳶ अव ॥
वि॒द्मा हि ते पु॒रा व॒यमग्ने पि॒तुर्यथाऽवसः । अधा ते सु॒म्नमीमहे ॥

परेस्या । अधीति (३) । सुव॒त इति स व॒तः । अवरान् । अ॒भि । एति । त॒र ।
यत्र । अ॒हम् । अस्मि । तान् । अ॒व ॥
वि॒द्म । हि । ते । पु॒रा । व॒यम् । अग्ने । पि॒तुः । यथा । अवस ।
अध । ते । सु॒म्नम् । ई॒महे ॥

पञ्चदशी– 'परस्या ' इति ॥ [ Vपरस्या ] Vसवत संगते Vअधि उपरि परमे सक्षेपे तिष्ठन् । "उपसर्गाच्छन्दसि° " ( पा ५ १ ११८ ) इति वतिः । Vअवरान् अपकृष्टानप्यस्मान् Vअभ्यातर आभिमुख्येन, मर्यादया च तर तारय दुःखात् । वनोतेः संपदादित्वात् ( पा ३ ३ १०८ वा ९ ) क्विप् । परस्मात् संवननीयात् लोकादुपरि वर्तमानः त्वं अवरानस्मान् अभ्यातर आभिमुख्येनागच्छ । तथा कृत्वा Vयत्र Vअहम् Vअस्मि कुले ग्रामे जनपदे वा काले वा Vतान् तत्स्थानपि सर्वान् Vअव रक्ष तर्पय वा । रुत्वानुनासिकौ ( पा ८ ३ १,९ ) उक्तौ ॥

षोडशी– 'विद्म ' इति ॥ हे Vअग्ने तस्मात् Vते तव Vपुरा पूर्वमेव Vवयं जानीमः । ⁵⁰कथमिव? Vअवसः अभिगन्तव्य ⁵⁰ पितरमिव त्वां वयं जानीमः, ⁵¹क्रमागतो रक्षकः त्वमस्माकं पितुरेव ते वयं जानीमः । पुत्रद्वेपितव्याभृत्यर्थमिदम् । Vअध अत एव कारणात् Vते त्वामेव Vसुम्नं सुखम् Vईमहे याचामहे । "द्व्यचोऽतस्तिङः " ( पा ६ ३ १३५ ) इति, "निपातस्य च " ( पा ६ ३ १३६ ) इति उभयत्रापि दीर्घत्वम् ॥

परस्या इति ॥ तत्रैव विकल्पितां पुरोनुवाक्यामाह– 'परस्या अधि संवतोऽवराᳶ अभ्या तर । यत्राहमस्मि ताᳶ अव ' इति ॥ सम्यग्वनुते "देवान् भजते यस्यां क्रियायां"⁵³ सा क्रिया संवत्, 'परस्याः 'संवत 'अधि उत्कृष्टाया अस्या इष्टेरधिष्ठानम् 'अवरान् निकृष्टानप्यस्मान् 'अभ्यातर आभिमुख्येनाऽऽगत्य दुःखानि ⁵⁴नाशय । ⁵⁵'यत्र येषु बन्धुषु 'अहम् 'अस्मि 'तान् बन्धूनपि ⁵⁶–⁵⁶अव रक्ष⁵⁶ ॥

विद्मेति ॥ अथ स्विष्टकृतो याज्यामाह– 'विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे ' इति ॥ हे 'अग्ने, ⁵⁷'हि यस्मात् 'पुरा 'वयं 'ते तव 'अवसः रक्षणं 'विद्म ⁵⁸जानीमः । कथमिव? 'पितुः 'यथा, ⁵⁹"लोके पुत्रा यथा पितुः पालनं जानन्ति"⁵⁹ तद्वत् । ⁶⁰'अध तस्मात् कारणात् 'ते 'सुम्नम् 'ईमहे त्वया संपादितं सुखं प्राप्तुम् ॥

५०–५० मै४–कस्येव पितुरिव अवस चितव्य पुत्र । ५१ ल हा–अवगत ।

५३–५३ आ क–भजते यस्यां । ५४ ह द १ शै,हो १–तारय । ५५ आ क–'यत्र' नास्ति । ५६–५६ क हा–मारक्ष । ५७ आ क–'हि' नास्ति । ५८ आ–ज्ञातवन्तः ; ह–जानीम । ५९–५९ आ–लोके पुत्रा यथा पितुः पालनं जानन्ति, द १–पितुः पालनं जानाति । ६० अ ह उ को ना पा हा शै– अथ ।

य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः । अग्ने पुरो रुरोजिथ ॥
सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥

य । उग्रः । इव । शर्यहेति शर्य - हा । तिग्मशृङ्ग इति तिग्म - शृङ्गः । न । वंसगः ।
अग्ने । पुरः । रुरोजिथ ॥
सखाय । समिति । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ।
वर्षिष्ठाय । क्षितीनाम् । ऊर्जे । नप्त्रे । सहस्वते ॥

सप्तदशी– 'य ' इति ॥ हे अग्ने यः त्वम् उग्र उद्गूर्णबलतया उग्र इव भवसि । शर्यहा । छान्दस कर्तरि कृत्यः, "तत्र साधु " ( पा ४·४ ९८ ) इति वा यत् । शर्याणां हिंसकानां हन्ता शर्यहा । तिग्मशृङ्ग न तीक्ष्णशृङ्गः तीक्ष्णज्वालः तिग्मशृङ्ग इव । वंसग वननीयानि वनानि गच्छति वनसगः । वननीयेषु वनेषु सक्त इति वा वंसग । पृषोदरादित्वादिष्टस्वरूपलाभः । एव मृगवत् सौम्यस्वभाव. उग्रस्वभावश्च त्व पुर असुराणां पुरी मेघान् वा रुरोजिथ अभाङ्क्षी । छान्दसो हः । भ्रातृव्याणां हन्ता, वृष्ट्युत्पादनेन वा सर्वाभिमतकारी ॥

अथास्यामेनेष्ट्या पुरोऽनुवाक्या– 'सखाय ' इत्यनुष्टुप् ॥ हे सखायः समानख्याना ऋत्विग्यजमाना व युष्मदर्थं युष्माक श्रेयोऽर्थम् अस्मासु अग्नये वर्षिष्ठाय प्रवृद्धतमाय क्षितीनां

य इति ॥ अथात्र तिस्र ऋच उपहोमार्थाः । तत्रेय प्रथमा– 'य उग्र इव शर्यहा तिग्मशृङ्गो न वंसग । अग्ने पुरो रुरोजिथ ' इति ॥ हे अग्ने, य त्वम् उग्र इव क्रूरो राजेव शर्यहा शर्याणां हिंसकानां हन्ता, तिग्मशृङ्ग न तीक्ष्णशृङ्गो मृग इव, वंसग, वनानि वनानिता सर्वाणि वसग, दावाग्निरूपो भूत्वा वनेषु निषसीदर्थं । तादृशस्त्व पुर रुरोजिथ शत्रूणां पुराणि अर्दितवानसि ॥

सखाय इति ॥ अथ द्वितीया– 'सखाय सं व सम्यञ्चमिषं स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते इति ॥ हे सखाय, परस्परसख्ययुक्ता ऋत्विग्यजमाना, व युष्माकं सम्यञ्चम् इषं समीचीनम् अपि अभीष्टार्थम् [ अपि ] संपादयतु । सर्वाभिमुखप्रागोस्याचेष्टितं हेय अत्यादन । यूप च अग्नये स्तोम स्तोत्रं संपादयत । कीदृशायाग्नये । क्षितीनां निवासहेतूनां मध्ये वर्षिष्ठाय वृद्धतमाय, ऊर्जे नप्त्रे बलस्य न पातयित्रे विनाशनमकुर्वते, सहस्वते बलवते ...

५२. तै३.मै–'वा ' नास्ति । ५३ तै१ क्षि,ए हो–वनसग ।

६१. क हा–'वनानि ' नास्ति । ६२ ह१,ग्रं–दावाग्नि भूत्वा । ६३, आ,ग्रं–निषीदति । ६४ क हा–भर्जितवान्; ह हो१–जितवान्, ह१–भञ्जितवान् । ६५. ह,ह१–'अपि ' नास्ति । ६६. ह, ह१–सर्वाभिमुखोपगमनेच्छया । ६७ ह१–उदाहृत । ६८. ह१–तादृशायाग्नये । ६९ ह–'न ' नास्ति । ७०. भ ह ड क ना श–पातयित्रे, क,ग्रं,हो१–पातयित्रे ।

परस्या अधि (३) संवतोऽवराः॒ अभ्या तर । यत्राहमस्मि ताः॒ अव ॥
विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः । अधा ते सुम्नमीमहे ॥

परस्या । अधीति (३) । सुवत इति स यत । अवरान् । अभि । एति । तर ।
यत्र । अहम् । अस्मि । तान् । अव ॥
विद्म । हि । ते । पुरा । वयम् । अग्ने । पितु । यथा । अवस ।
अध । ते । सुम्नम् । ईमहे ॥

पञ्चदशी 'परस्या' इति ॥ [ [v]परस्या ] [v]सवत सगते [v]अधि उपरि परमे सङ्घे तिष्ठन् । "उपसर्गाच्छन्दसि॰" (पा ५ १ ११८) इति वति । [v]अवरान् अपकृष्टानस्मान् [v]अभ्यातर आभिमुख्येन, मर्यादया च तर तारय दु खात् । वनोते सपदादित्वात् (पा ३ ३ १०८ वा ९) क्विप् । परस्मात् सवननीयात् लोकादुपरि वर्तमान त्व अवरानस्मान् अभ्यातर आभिमुख्येनागच्छ । तथा कृत्वा [v]यत्र [v]अहम् [v]अस्मि कुले ग्रामे जनपदे वा काले वा [v]तान् तत्स्थानपि सर्वान् [v]अव रक्ष तर्पय वा । रुत्वानुनासिकौ (पा ८ ३ १,९) उक्तौ ॥

षोडशी– 'विद्म' इति ॥ हे [v]अग्ने तस्मात् [v]ते तव [v]पुरा पूर्वमेव [v]वय जानीम । [५०]कथमिव? [v]अवस अभिगन्तव्य [५०] पितरमिव त्वा वय जानीम, [५१]क्रमागतो रक्षक त्वमस्माक पितुरेव ते वय जानीम । पुत्रद्वेपितव्यावृत्त्यर्थमिदम । [v]अध अत एव कारणात् [v]ते वामेन [v]सुम्न सुखम् [v]ईमहे याचामहे । "द्व्यचोऽतस्तिङ" (पा ६ ३ १३५) इति, "निपातस्य च" (पा ६ ३ १३६) इति उभयत्रापि दीर्घत्वम् ॥

परस्या इति ॥ तत्रैव विकल्पिता पुरोनुवाक्यामाह– 'परस्या अधि सवतोऽवराः॒ अभ्या तर । यत्राहमस्मि ताः॒ अव' इति ॥ सम्यग्वनुते "देवान् भजते यस्या क्रियाया[५२]" सा क्रिया सवत्, 'परस्या 'संवत 'अधि उत्कृष्टाया अस्या इष्टेरधिष्ठानम् 'अवरान् निकृष्टानप्यस्मान् 'अभ्यातर आभिमुख्येनाऽऽगत्य दु खानि [५४]नाशय । [५५]यत्र येषु बन्धुषु 'अहम् 'अस्मि 'तान् बन्धूनपि [५६] 'अव रक्ष[५६] ॥

विद्मेति ॥ अथ स्विष्टकृतो याज्यामाह– 'विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवस । अधा ते सुम्नमीमहे' इति ॥ हे 'अग्ने, [५७]हि यस्मात् 'पुरा 'वयं 'ते तव 'अवस रक्षणं 'विद्म [५८]जानीम । कस्येव? 'पितु 'यथा, "लोके पुत्र यथा पितु पालन जानाति[५९]" तद्वत् । [६०]'अध तस्मात् कारणात् 'ते 'सुम्नम् 'ईमहे त्वया सपादित सुख प्राप्तुम ॥

५०–५० मै४–कस्येव पितुरिव अवस वितव्य पुन । ५१ ल ह्ा–अवगा ।

५२–५२ आ क–भजते यस्या । ५४ ङ द१ शै हो१–तारय । ५५ आ क–'यत्र' नास्ति । ५६–५६ क ह्ा–आरक्ष । ५७ आ क–'हि' नास्ति । ५८ आ–शातवन्त ; ङ–जानीम । ५९–५९ आ–लोके पुत्र यथा पितु पालन जानन्ति द१–पितु पालन जानाति । ६० अ इ उ ओ ना पा ह्ा शै– अथ ।

प्रजापते॒ स वे॑द॒ सोमा॑पूषणे॒मौ दे॒वौ ॥११॥
[ यज्ञसमर्धि वृषलैकाग्नविंशतिर्थं । ]

प्रजापत इति प्रजा पते । स । वेद ।
सोमापूषणेति सोमा पूषणा । इमौ । देवौ ॥११॥
[ कास ७ १७ ]

"य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत्" (तैस २ ४ ४) इत्यस्या पुरोऽनुवाक्या– 'प्रजापते न त्वत्' इति त्रिष्टुप्॥ व्याख्यातेय– "सोमस्य त्विषिरसि" (तैस १ ८ १४) इत्यत्र। इह त्वस्या प्रतीक गृह्यते। हे प्रजापते, त्वदन्य एतानि विश्वानि जातानि भुवनानि परिभूव सर्वतो व्याप्नोति। तस्माद्यत् कामयमाना ते जुहुम नय तत् तथैवास्माकम् अस्तु। वय रयीणा पतय स्याम इति॥

तत्रैव याज्या– 'स वेद पुत्र ' इति जगती॥ इयमपि– "हिरण्यगर्भ" (तैस २ २ १२) इत्यत्र व्याख्याता। प्रतीकग्रहणमिदमस्या। स एव प्रजापति पुत्र भूत्वा पितर मातर च वेद पुत्रभावेन वर्तते। स एव सूनु सोता यजमानश्च भवति। स एव पुनर्भव पुन पुन क्रियमाणो यागश्च भवति। स एव द्या स्वर्ग च और्णोत् स्वतेजसा आच्छादयति, स एव विश्वानि भूतजातानि अभवत्, आऽभवत् व्याप्नोति स एवेति॥

"य पशुकाम स्यात् तस्मा एत सोमापौष्ण गार्मुत चरु निर्वपेत्" (तैस २ ४ ४) इत्यस्य पुरोऽनुवाक्या– 'सोमापूषणा जनना रयीणाम्' इति त्रिष्टुप्॥ इय च व्याख्याता "अग्नाविष्णू महि" (तैस १ ८ २२) इत्यत्र। प्रतीकग्रहणमस्या अप्यत्र। सोमापूषणौ रयीणा धनाना जनना जनयितारौ द्यावापृथिव्योश्च जनयितारौ। विश्वस्य भूतस्य जातस्य

प्रजापत इति॥ "य प्रजाकाम स्यात् तस्मा एत प्राजापत्य गार्मुत चरु निर्वपेत्", "य पशुकाम स्यात् तस्मा एत सोमापौष्ण गार्मुत चरु निर्वपेत्" (तैस २ ४ ४) इत्यनयोर्याज्यानुवाक्या प्रतीकानि दर्शयति– 'प्रजापते स वेद सोमापूषणेमौ देवौ' इति॥ 'प्रजापते न त्वदेतान्यन्य' इति प्रथमस्य हविष पुरोनुवाक्या। सा च 'सोमस्य त्विषिरसि' (तैस १ ८ १४) इत्यनुवाके व्याख्याता। 'स वेद पुत्र पितरम्' इत्येषा याज्या। सा च "हिरण्यगर्भ आपो ह यत्" (तैस २ २ १२) इत्यस्मिन्ननुवाके व्याख्याता। पशव्यस्य हविष "सोमापूषणा जनना' इति पुरोनुवाक्या। "इमौ देवौ जायमानौ' इति याज्या। एतदुभयम् "अग्नाविष्णू महि" (तैस १ ८ २२) इत्यस्मिन्ननुवाके व्याख्यातम्॥

६१ मै४ ल हो–पुत्रभावेन। ६२ मै४–मीयमान। ६३ न–भूतानि जातानि। ६४ तै२ –भवन्ति। ६५ तै२ हो–जननौ। ६६–६६ मै पे४–भवत तस्य।

७३ इ द१–इत्युभयोर्याज्यापुरोनु'। ७४ इ द१–जनना रयीणाम्।

जातमात्रावेव vगोपौ [६७]पालकौ । एव महानुभावाविमौ vदेवाः [६८]vअकृण्वन् कृतवन्तः अमृतत्वस्य vनाभिं नहनभूतौ देवाः कृतवन्तः ॥

अथ तत्रैव याज्या– 'इमौ देवौ जायमानौ' इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता (तैस १·८·२२)। प्रतीकमेव गृह्यते । vइमौ vदेवौ सोमापूषणौ vजायमानौ एव vजुषन्त, सर्वे देवाः vइमौ देवौ vतमांसि अजुष्टानि अप्रियाणि vगूहता जातमात्रावेव छादितवन्तौ। vआभ्या vपक्वम् उदकं संवत्सरव्रतम् vआमासु vउस्रियासु रश्मिषु vइन्द्रः वृष्ट्यर्थं [६९]vजनत् जनयति पक्वं करोति ॥

इति द्वितीये षष्ठे एकादशोऽनुवाकः ॥

अत्र विनियोगसंग्रहः –

संवर्गेष्टौ सामिधेन्यो दश तिस्रस्तु याज्यकाः ।
संयाज्यास्तिस्र उदिता उपहोमास्त्रयो मताः ॥
प्रयासये द्वय योज्यं गार्मुते प्रथमे भवेत् ।
सोमेमौ तद्द्वितीये स्युस्त्रयोविंशतिरीरिताः ॥ इति ॥

अत्र मीमांसा ॥ तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—
"वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः ।
अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥
[७५]हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वत. ।
निर्बाधं चान्यवत् [७६]तच्च तेनात्र विनियोजकम्" ॥ (जैन्या ३·३·१५–१६)॥

[७७]याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहननिर्वापादयो यजुर्वेदे । [७८]आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे । [७९]एतस्यैते धर्मा इति नियामकस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छत इति चेत्। मैवम्। हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यानेन नियतिर्बोध्यते। न च समाख्यानस्य बाधकं किंचित् पश्यामः। तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावात् [८०]श्रुतिलिङ्गादिषट्कवत् प्रमाणेन[८०] समाख्यानेन धर्मा व्यवस्थाप्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः ॥

---

६७. तं३.मे४.लं.हो–गोपत्री; मै–'पालकौ' नास्ति । ६८. मै–'अकृण्वन्' नास्ति । ६९. तं३.लं.हो–'जनत्' नास्ति।

---

७५. अ आ.इ उ.पा–हौत्रकादि; गं–होतृत्वादि, ह१–हौत्रादित्यादि । ७६. ह–तत्र । ७७. अ.इ.उ पा–°पाठे ये; क.हा–°पाठादयो ये; हो–°पादयोः; ह–पाठ्योः; ह१–°वाक्यायागादयो । ७८. अ–आज्यस्तोत्रादयः; जो.ना.हा–आज्यस्तोत्रपृष्ठादयः । ७९. ह–अस्यैते, ह१–तस्यैवैते । ८०–८०. ह१–°षट्कप्रमाणाख्यानेन ।

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥
त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥

उशन्तः । त्वा । हवामहे । उशन्तः । समिति । इधामहि ।
उशन् । उशतः । एति । वह । पितॄन् । हविषे । अत्तवे ॥
त्वम् । सोम । प्रचिकित इति प्र चिकित । मनीषा । त्वम् । रजिष्ठम् । अन्विति । नेषि । पन्थाम् ।
तव । प्रणीतीति प्र-नीती । पितरः । न । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ॥

महापितृयज्ञे सामिधेनी एकैव त्रिरुच्यते– 'उशन्त' इत्यनुष्टुप् ॥ उशन्तः कामयमाना पितॄन् त्वा हवामहे आह्वयाम । तानेव कामयमानास्त्वा समिधीमहि सम्यग्दीपयाम । त्वमपि तान् पितॄन् उशन् आ वह । कीदृशान्? उशतः हविरत्तुं कामयमानान्, हविषे अत्तवे हविर्भोक्तुम् । तुमर्थे 'तवेन्' (पा ३ ४ ९) प्रत्ययः । कर्मणि सम्प्रदानत्वाच्चतुर्थी ॥

सोमबर्हिषदग्निष्वात्तकव्यवाहनानां क्रमेण द्वे द्वे एव पुरोऽनुवाक्ये एकैकस्य उत्तरा याज्या सर्वास्त्रिष्टुभः । विशेषो वक्ष्यते–'त्वꣳ सोम' इति ॥ हे सोम त्वं प्रचिकित प्रकर्षेण ज्ञात । निगया

एकादशे तु कथितं सर्वौषध्यादि हौत्रकम् ।
द्वादशे 'पितृयज्ञस्य हविषा हौत्रमुच्यते ॥१॥

उशन्त इति ॥ कल्पः – "एकां सामिधेनीं त्रिरन्वाहोशन्तस्त्वा हवामह इत्येताम्" (आपश्रौ ८ १४ १८) इति । पाठस्तु– 'उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन् हविषे अत्तवे' इति ॥ हेऽग्ने, वयम् उशन्तः पितॄन् कामयमानास्त्वामाह्वयाम । पुनरपि पितॄन् उशन्तः त्वा समिधीमहि । त्वमपि कामयमान कामयमानस्य यजमानस्य पितॄन् आवह । किमर्थम्? हविषे अत्तवे हविर्भोक्तुम् ॥

त्वमिति ॥ कल्पः – "द्वे पुरोनुवाक्ये अन्वाहार्यमुक्त्वा प्रणौत्यपरामुक्त्या प्रणौति । त्वꣳ सोम प्रचिकित इत्येता आम्नाता भवन्त्येका याज्या" (आपश्रौ ८ १५ १३-१६) इति । तत्र प्रथमां पुरोनुवाक्यामाह– 'त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः' इति ॥ हे सोम, त्वं मनीषा मनीषया अस्मदीयया बुद्ध्या प्रचिकित प्रकर्षेण ज्ञात । किं च, त्वं रजिष्ठं पन्थाम् अत्योदकमपूर्वां रञ्जकं मार्गम् अनुनेषि अनुक्रमेण

१ मै-तवे । २ तै१ ल-°तइव्य° । ३ मै मे॰ हो-'एव' नास्ति ।

१ इ-°यज्ञस्य° । २ आ-त्वा । ३ इ१-त्वमसि । ४ क-कामयमान । ५ न-'यजमानस्य' नास्ति । ६ क इ१ आवह वह । ७ आ इ-त्वदीयया । ८ इ१-निन्त । ९-९ अ आ इ ३ प-रजिष्ठ यमता क ञा इ१-रजिष्ठ यमत्र कपूर्वां ग-रजिष्ठमनोदक° । १० आ-अनुक्रमेण ।

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा (१) नः ॥

त्वया । हि । न । पितर । सोम । पूर्वे । कर्माणि । चक्रु । पवमान । धीरा । वन्वन् । अवात । परिधीनिति परि धीन् । अपेति । ऊर्णु । वीरेभि । अश्वै । मघवेति मघ-वा । भव (१) । न ॥

छान्दस द्विर्वचनम्, यङ्लुकि वा अभ्यासनिकाराभाव, "गतिरनन्तर" (पा ६ २ ४९) इति गते प्रकृतिस्वरत्वम्। 'चिक' इति वा धात्वन्तर द्रष्टव्यम्। मनीषा मनीषावद्भि । यद्वा–विशिष्टया मनीषया व्यभिचाराभावात्। "सुपा सुलुक°" (पा ७ १ ३९) इति विभक्तेराकार । किं च त्व रजिष्ठम् ऋजुतर पथा पन्थानम्। ऋजुशब्दादिष्ठनि "विभाषर्जो श्छन्दसि" (पा ६ ४ १६२) इति रेफ । यद्वा– रज उदकम् अतिशयेन तद्वान् रजिष्ठ । रज शब्दात् इष्ठन्। "विन्मतोर्लुक्" (पा ५ ३ ६५), "टे" (पा ६ ४ १४३) इति टिलोप । ईदृश पन्थानम् अनुनेषि अनुक्रमेण प्रापयसि। नयतेर्लेटि शपो लुक्। किं च हे इन्दो सोम, तव प्रणीती प्रणीत्या परिचरणेन पुरस्कारेण वा। "सुपा सुलुक्°" (पा ७ १ ३९) इति तृतीयाया पूर्वसवर्णदीर्घत्वम्। अस्माक पितर पूर्वेषु देवेषु रत्न रमणीय हविरन्नम् अभजन्त धीरा धीमन्त । मत्वर्थीयो रप्रत्यय ॥

त्वया हीति ॥ हे सोम, न अस्माक पूर्वे पितर त्वया खलु हेतुना त्वत्प्रसादेन कर्माणि ज्योतिष्टोमादीनि पितृयज्ञादीनि वा चक्रु कृतवन्त । धीरा । गतम्। हे पवमान शोधक, तस्मात् कारणात् अस्माकमपि त्व वन्वन् अस्मान् सभजन् अवात

प्रापयसि। हे इन्दो, तव [11]प्रणीती प्रणीत्या परिचरणेन न अस्माक पितर देवेषु मध्ये स्थित्वा धीरा सन्तो रत्न रमणीय हवि अभजन्त ॥

त्वयेति ॥ द्वितीया पुरोनुवाक्यामाह– 'त्वया हि न पितर सोम पूर्वे कर्माणि चक्रु पवमान धीरा । वन्वन्नवात परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा न ' इति ॥ हे पवमान शोधक सोम, हि यस्मात् न अस्माक पूर्वे पितर त्वया अनुगृहीता कर्माणि चक्रु, तस्मादिदानीं धीरा तिष्ठन्ति। त्वमपि अवात वायुमनपेक्ष्य ज्वलनेन अस्मदीयहवि वन्वन् सभक्षयन् परिधीन् परिधिवत् सर्वतोऽवस्थितान् प्रतिबन्धकान् अपोर्णु निराकुर। कै साधनै, वीरेभि युद्धकुशलै अश्वै । तथा न अस्मदर्थं मघवा धनवान् भव ॥

४. ल–रजम् (१)। ५ मै–°र्लिटि (१)। ६ ल–सोमे। ७ मै–मै४–असाकम्।

११ क हा–'प्रणीती' नास्ति। १२ आ क–परिसरन्तो समाप्ति १३ ४–ज्वलन। १४ अस्मदीयं हवि । १५ ग्र–सभजन्।

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥

त्वम् । सोम । पितृभिरिति पितृ भि । संविदान इति सं-विदान । अन्विति । द्यावापृथिवी इति द्यावा-पृथिवी । एति । ततन्थ । तस्मै । ते । इन्दो इति । हविषा । विधेम । वयम् । स्याम । पतय । रयीणाम् ॥

भ्रातरहित स्वयमेव ज्वलन् । यद्वा अकार [8]उपमायाम्, अथ वायुसदृश, दीर्घकारित्व सादृश्यम् । [9]परिधीन् परितः धारयितॄन् आत्मन प्रतिबन्धॄन् [9]अपोर्णु अपानुद प्रतिबन्धकापनोदेन शीघ्र मागच्छ । रुत्वानुनासिकावुक्तौ (पा ८ ३ १ ९) । वीरेभि विक्रान्तै [9]अश्वै शीघ्रमागच्छेति । ततश्चागत्य [9]न अस्माक [9]मघवा धनवान् [10]भव । अस्मभ्य [11]धन दातु हस्ते गृहाण । यद्वा–हविषा [12]धनेन तद्वान् भव । "छन्दसीवनिपौ" (पा ५ २ १०९ वा २) इति मत्वर्थीयो [13]वनिप्प्रत्यय । "द्व्यचोऽतस्तिङ" (पा ६ ३ १३५) इति भवशब्दस्य संहितायां [14]दीर्घत्वम् ॥

त्व सोमेति ॥ हे सोम, त्व पितृभि पूर्वैरस्माकीनै सविदान ऐकमत्य गत इत्थ वयमस्मै कुर्म इति [15]द्यावापृथिवी अनु आततन्थ अनुक्रमेण दीप्त्या । अततेः "बभूथाततन्थ°" (पा ७ २ ६४) इति निपात्यते । हे इन्दो, तस्मै तादृशाय ते तुभ्य हविषा विधेम परिचरेम तदर्थम् आततदीप्तिर्भव । प्रयोजन च ब्रूम वय रयीणा धनाना पतय स्याम भूयास्मेति हविषा विधेम त्वाम्, त्व च द्यावापृथिवी दीप्त्या आततन्थ पितृभिश्च सविदानो भव इति । "समो गम्यृच्छि°" (पा १ ३ २९) इति सिद्धेरात्मनेपदम् ॥

त्वमिति ॥ अथ याज्यामाह– 'त्वꣳ सोम पितृभि संविदानोऽनु द्यावापृथिवी आ ततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम्' इति ॥ हे सोम, त्व पितृभि सविदान [16]ऐकमत्य गत [17] अनु क्रमेण द्यावापृथिवी आततन्थ आतते व्याप्ते कृतवानसि । हे इन्दो [17]हे सोम[17], तस्मै ते तादृशाय तुभ्य हविषा विधेम परिचरेम । त्वत्प्रसादात् वय धनाना पतय स्याम ॥

इत्थ "सोमाय पितृमते पुरोडाशꣳ षट्कपालꣳ निर्वपति" (तैस १ ८ ५) इत्यस्यानुवाक्या-द्वय याज्या चेति मन्त्रत्रयमुक्तम् ॥

८ तरे–उपमानम् । ९ ल–प्रबद्धान । १० तरे ल–'भव' नास्ति । ११ ल–ज्वलनम् । १२ तरे ल–°यतेन । १३ तर हो–विनिप्रत्यय । १४ मै–दीर्घ । १५ मै मै४–द्यावापृथिव्यौ ।

१६ आ क–सविद प्राप्त । १७ क भू–'हे सोम' नास्ति । १८ आ क–'निर्वपति' नास्ति ।

अ॒ग्नि॒ष्वा॒त्ताः पित॒र॒ एह ग॑च्छत॒ सदः॑सदः सदत सु॒प्र॒णी॒त॒यः ।
अ॒त्ता ह॒वीꣳषि॒ प्रय॑तानि ब॒र्हि॒ष्यथा॑ र॒यिꣳ सर्व॑वीरं दधातन ॥

अ॒ग्नि॒ष्वा॒त्ता इत्य॒ग्नि स्वा॒त्ता । पि॒त॒र॒ । एति॑ । इ॒ह । ग॒च्छ॒त॒ ।
सदः॑ सद॒ इति॒ सदः॑ सदः॒ । स॒द॒त॒ । सु॒प्र॒णी॒त॒य॒ इति॒ सु - प्र॒णी॒त॒यः॒ ॥
अ॒त्त । ह॒वीꣳषि॑ । प्रय॑ता॒नीति॒ प्र य॒ता॒नि॒ । ब॒र्हि॒षि॑ ।
अथ॑ । र॒यिम् । सर्व॑वीर॒मि॒ति॒ सर्व॑-वी॒र॒म् । द॒धा॒त॒न॒ ॥

अग्निष्वात्ता इति जगती ॥ हे अग्निष्वात्ता , अग्निष्वेव हवन्ते [16]ये हविषा भोक्तार [17]आस्वादनिबद्धभावा । आमन्त्रिताद्युदात्तत्वम् ( पा ६ १ १९८)। हे पितर , इह कर्मणि आगच्छत, हे सुप्रणीतय सुखपरिचरणा , सद सद आत्मीयमात्मीय सदन सदत सीदत। सीदति प्राप्तिकर्माऽयमिदानीम्। यद्वा- ' सुपा सुलुक्° '' ( पा ७ १ ३९) [18]इति सप्तम्या लुक् । सद सद [18] सदम्सिदसि सीदत। विकरणव्यत्ययेन श । ततश्च अत्त अश्नीत हवींषि पितरो बर्हिषद । ब्राह्मण च ये च यज्वान । ते पितरो बर्हिषद ''(तैब्रा १ ६ ९) इति ॥

आमन्त्र्यन्ते – हे बर्हिषद पितर, ऊती ऊत्या गमनेन अर्वाक् [19]अस्मान् प्रत्यभिमुखा भूत्वा। "ऊतियूति° '' (पा ३ ३ ९७) इत्यादिना उदात्त क्तिन्निपातित , "सुपा सुलुक्° ''(पा ७ १ ३९) इति तृतीयाया पूर्वसवर्ण , " उदात्तस्वरितयोर्यण ° '' (पा ८ २ ४)

**अग्निष्वात्ता इति ॥** अथ " पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् " (तैस १ ८ ५) इत्येतस्य प्रथमा पुरोनुवाक्योच्यत। यद्यपि पाठक्रमेण तृतीयमिद हविस्तथाऽपि लिङ्गस्य बलवत्त्वात् तत्र विनियोगो द्रष्टव्य ॥ पाठस्तु–' अग्निष्वात्ता पितर एह गच्छत सद सद सदत सुप्रणीतय । अत्ता हवींꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीर दधातन ' इति ॥ [19]अन्यत्र " ये वा अयज्वानो गृहमेधिन ते पितरो ऽग्निष्वात्ता '' (तैब्रा १ ६ ९) इति श्रुतत्वाद्यागमकृत्वैव प्रेत्य पितृलोक [20]प्राप्ता अग्निष्वात्ता , शोभना प्रणीतिरसत्कृता परिचर्या येषा ते सुप्रणीतयस्तथाविधा हे पितर इह कर्मणि आ गच्छत। सद सद तत्तदात्मीय स्थान सदत प्राप्नुत। [22]अस्मिन् बर्हिषि यज्ञे प्रयतानि प्रयत्नेन सपादितानि हवींꣳषि अत्त भक्षयत। अथ अनन्तर रयिं [23]धनं सर्वेषु वैदिककर्मसु वीर कुशलो य पुत्रस्तादृश पुत्र च दधातन संपादयत॥ [24]अथ द्वितीया पुरोनुवाक्या याज्या [25]चेत्युभय " ये अग्निष्वात्ता " (तैब्रा २ ६ १६) इत्यादिक कौकिल्या सौत्रामण्यामाम्नातमतस्तत्रैव व्याख्यास्यते ॥

१६ त्रि प २ ए हो–हे । १७ त ३ ए–आश्वासनि° । १८–१८ त ३– ' इति सद सद ' नास्ति । १९ ए अस्मान् ।

१९ आ क–अत्र । २० ह– ' पितर ' नास्ति । २१ आ–गता । २२ गृ–तस्मिन् । २३ आ– ' धनम् ' नास्ति । २४ ह १–अत्र । २५ अ आ इ उ क ओ ह १ पा गृ हा–चेत्युभयमाम्नात तच्च ।

बर्हिषदः पितर ऊत्यर्वागिमा
वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा-
स्मभ्य९(२) शं योररपो दधात ॥

बर्हिषद इति बर्हि - सद. । पितरः । ऊती । अर्वाक् ।
इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । एति । गत । अवसा । शंतमेनेति शं - तमेन ।
अथ । अस्मभ्यमित्यस्म - भ्यम् (२) । शम् । यो. । अरपः । दधात ॥

इति ततः परस्याकारस्य संहितायां स्वरितत्वम् । इमानि हव्यानि हवींषि । उभयत्र "शेश्छन्दसि°" (पा ६·१·७०) इति लोप· । युष्मदर्थं ^V^चकृम कुर्मो वयम् । "अन्येषामपि दृश्यते" (पा ६·३·१३७) इति संहितायां दीर्घत्वम् । तानि यूय ^V^जुषध्व सेवध्वम् । तिङ परत्वात् न निहन्यते (द्र. पा ८·१·२८) । तदर्थं ^V^ते च यूयम् ^V^आगत आगच्छत । लोटि "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । ^V^अवसा प्रीत्या ^V^शंतमेन सुखतमेन मनुष्यादिप्रीति ^V^अथ ^V^अनन्तरमागत्य हवींषि च सेवित्वा ^V^अस्मभ्य ^V^शं ^V^यो. च ^V^अरप. अपाप उभय लोकाविरुद्ध ^V^दधात दत्त आपत्तापशमनं रोगाणा नाशन यावन भयाना पृथक्करणमागामिनो निरोध. । यौतेरसुनि गुणे अवादेशाभावश्छान्दसः ॥

बर्हिषद इति ॥ अथ "पितृभ्यो बर्हिषद्भ्यो धानाः" (तैब्रा १·८·५) इत्यस्य प्रथमां पुरोनुवाक्यामाह— 'बर्हिषदः पितरः ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आ गतावसा शंतमेनाथास्मभ्यं शं योररपो दधात' इति ॥ बर्हिषि यज्ञे सीदन्तीति [26]बर्हिषदः । "ये वै यज्वानः । ते पितरो बर्हिषदः" (तैब्रा १·६·९) इति [27]अन्यत्र श्रुतत्वात्[27] यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषद. । तादृशा हे [V]पितरः, [V]अर्वाक् अर्वाचीनानामस्माकम् [V]ऊती रक्षा भवद्भिः कर्तव्येति शेष । [V]वः युष्मदर्थम् [V]इमा [V]हव्या एतानि हवींषि [V]चकृम अतस्तानि [28]जुषध्वम् । [V]ते हविर्जुष्टवन्तः [29]यूयं [V]शंतमेन सुखतमेन [V]अवसा [29]रक्षणेन [V]आगत आभिमुख्येनास्मान् [31]प्राप्नुत । [V]अथ [32]अनन्तरं अस्मभ्यं [V]शं सुखं [V]योः दुःखवियोगम् [V]अरपः पापराहित्य च [V]दधात दत्त[29] ।

26. आ.क–बर्हिषदः । अपापि । 27–27. आ.क–उक्तत्वात् । 28. अ.आ.इ.उ.क.जो ना.प. ज्ञ– ...हा–जुष्ध्वमिति । 29–29. आ.क–यूयमवसा रक्षणेन शंतमेन सुखतमेनास्माननागत्य तदभिमुखमागच्छतेत्यर्थः । अथास्मभ्यं प्रथममन्ते च शं सुखं दुःखवियोगं नापेप पापराहित्यं च दधात दत्त । 30. ग.हो१–रक्षण-निमित्तेन । 31. ग.हा१–प्राप्नुवत । 32. इ.इ१–ग.हो१–अनन्तरं नः ।

आऽहं पितृन्त्सुविदत्रां२ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः ॥

एति । अहम् । पितृन् । सुविदत्रानिति सु-विदत्रान् । अवित्सि ।
नपातम् । च । विक्रमणमिति वि-क्रमणम् । च । विष्णोः ।
बर्हिषद इति बर्हि-सदः । ये । स्वधयेति स्व-धया । सुतस्य ।
भजन्त । पित्वः । ते । इह । आगमिष्ठा इत्या-गमिष्ठाः ॥

आऽहमिति ॥ सुविदत्रान् शोभनवेदनान् सुष्ठु व(वि?)न्दन्तीति सुविदत्राः । विदेः कर्तृप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् । अहं तान् आऽवित्सि आभिमुख्येन लब्धवानस्मि । विन्दतेर्लुङि "लिङ्सिचावात्मनेपदेषु" (पा १·२·११) इति कित्त्वम् । किं च— विष्णोः यज्ञात्मनः नपात च विक्रमण च आवित्सीत्येव, तेषामेव प्रसादान्नपातनमभ्रेषः कर्माङ्गानाम् । ण्यन्तात् क्विपि नञ्समासे "नभ्राण्नपात्°" [पा ६·३·७५] इति नलोपाभावो निपात्यते । विविध संक्रमणं विक्रमणं विश्लिष्टकर्मनिष्पत्तिः । विशिष्टफलप्राप्तिहेतुत्वं वा कर्मणः । कस्मादेवमुच्यते इत्याह— ये बर्हिषदः पितरः स्वधया अन्नेन सह सुतस्य सोमस्यान्न सोम च भजन्त अभजन्त यज्वान इति यावत् । "बहुलं छन्दस्यमाङ्योगेऽपि" (पा ६·४·७५) इत्यडभावः । ते पितरः इह अस्मिन् कर्मणि पित्वः पिन्वन्ति आगमिष्ठाः । "सुपां सुलुक्°" (पा ७·१·३९) इति सप्तम्याः स्वादेशः । अतिशयेन गन्तारः । "तुश्छन्दसि" (पा ५·३·५९) इत्यागन्तृशब्दादिष्ठन्प्रत्ययः, "तुरिष्ठेमेयःसु" (पा ६·४.१५४) इति लोपः ॥

एति ॥ अथ तत्रैव द्वितीया पुरोनुवाक्या—'आऽहं पितृन्त्सुविदत्राः२ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः' इति ॥ अहं यजमानः सुविदत्रान् मदीयां भक्तिं सुष्ठु जानतः पितृन् अपि आऽवित्सि आभिमुख्येन लब्धवानस्मि । विष्णोः व्यापिनोऽस्य यज्ञस्य नपातं विनाशाभावं विक्रमणं विशेषेण प्रवृत्तिं च लब्धवानस्मि । ये पितरः बर्हिषदः सन्ति ते इह अत्र कर्मणि आगमिष्ठाः अतिशयेनाऽऽगताः । आदरपूर्वकमागत्य पित्वः प्रीतिं भजन्तः प्राप्नुवन्तः । केन साधनेन? सुतस्य स्वधया सोमसमानस्य हविषः स्वादुत्वेन ॥

३०. तै३–'विक्रमण' नास्ति ।

३३. हो१–आवेदिषम्, ड–अवेदि । ३४–३४ आ.क.तं.ड हो१–सन्तः । ३५. ड.हो१–'अत्र' नास्ति । ३६ ड ह१.२८–पूर्वं समागत्य । ३७ आ क–प्राप्नुवन्तु । ३८–३८. ड.हो२–तेन साधनेन सोमस्य स्वधया सोमसमानस्य । हविषः स्वादुत्वेन । अथ पितरः बर्हिष्येषु यागाः ।

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥
उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं (३) य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

उपहूता इत्युप हूता । पितर । सोम्यास । बर्हिष्येषु । निधिष्विति नि धिषु । प्रियेषु । त । एति । गमन्तु । ते । इह । श्रुवन्तु । अधीति । ब्रुवन्तु । ते । अवन्तु । अस्मान् । उदिति । ईरताम् । अवरे । उदिति । परास । उदिति । मध्यमा । पितर । सोम्यास । असुम् (३) । ये । ईयु । अवृका । ऋतज्ञा इत्यृत - ज्ञा । ते । न । अवन्तु । पितर । हवेषु ॥

उपहूता ये [21]पितर अस्मिन् कर्मणि अस्माभिरुपहूता सोम्यास सोमार्हा । "सोममर्हति॰" (पा ४ ४ १३७) इति यप्रत्यय । बर्हिष्येषु यागसम्बन्धिषु । भवे, साधौ (पा ४ ३ ५३, ४ ४ ९८) वा य । सनिधिषु निधायन्ते इति निधय हवींषि । "उपसर्गे घो कि" (पा ३ ३ ९२), तेषु निमित्तेषु सप्तमी । प्रियेषु इष्टतमेषु ये [22]आहूता आगमन्तु आगच्छन्तु । "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (परि ३५) इति छन्दमान । अत इह कर्मणि अस्मप्रयुक्ता स्तुती श्रुवन्तु शृण्वन्तु । "बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक । अधिब्रुवन्तु त अस्मान् [23]पक्षपातेन वा अस्मान् आधिक्येन ब्रुवन्तु साधुकृत्तमैभिरिति । अवन्तु चास्मान् पितरस्ते ॥

उदीरतामिति ॥ उदीरताम् उदीर्णा भवन्तु उद्गच्छन्तु । ईर गतौ, आदादिक । "आत्मनेपदेष्वनत" (पा ७ १ ५) इत्यदादेश । अवरे [24]अपरे अधस्तात् स्थिता पृथिवी

उपहूता इति ॥ [21]अथ तत्रैव याज्यामाह– 'उपहूता पितर सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु त अवन्त्वस्मान्' इति ॥ 'सोम्यास' सोम्या अस्मदनुग्रहपरा 'पितर 'बर्हिष्येषु' 'प्रियेषु यागार्हेषु तृप्तिकरेषु [22]'निधिषु निधिमत्सु हविःषु निमित्तभूतेषु 'उपहूता अस्माभिराहूता 'ते पितर 'आगमन्तु आगच्छन्तु । आगत्य च [23]'ते 'इह अस्मिन् कर्मण्यस्माभि प्रयुक्ता स्तुती 'श्रुवन्तु [23]'शृण्वन्तु । श्रुत्वा च 'अधिब्रुवन्तु 'साधुतरो यजमान इत्यादरेण कथयन्तु । [23]'तत ईदृशा [24] पितर 'अस्मान् 'अवन्तु ॥

उदीरतामिति ॥ 'अत्रैवोपहोमार्थामित ऋचस्तासु प्रथमामाह– 'उदीरतामवर उत्परास उन्मध्यमा पितर सोम्यास । असु य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु' इति ॥ त्रिविधा

21 त्रि ल–पितर आहूता, तः–पितर उपहूता । 22 मे॰–आहुता । 23 ॰–दनेन । 24 मे–'अपरे' नास्ति ।

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥

इदम् । पितृभ्य इति पितृ भ्य । नम । अस्त । अद्य । ये । पूर्वास । ये । उपरास । ईयु ।
ये । पार्थिवे । रजसि । एति । निषत्ता इति नि सत्ता ।
ये । वा । नूनम् । सुवृजनास्विति सु वृजनासु । विक्षु ॥

स्थिता वा निकृष्टा वा परास परा उत्कृष्टा उच्छ्रितस्थानस्थिता वा ते च पितर उदीरता, मध्यमा च पितर उदीरता, सोम्यास सोमार्हा । "सोममर्हति" (पा ४ ४ १३७) इति य । ये असु प्राण हेतुत्वेन वारकत्वेन ईयु प्रविष्टा अवृका बाधक स्वभावरहिता । कुक वृक आदाने, इगुपधलक्षण क (पा ३ १ १३५) । ऋतज्ञा ऋतस्य सत्यस्य यज्ञस्य वा ज्ञातार, ते तथा महानुभावा न अवन्तु रक्षन्तु प्रीणयन्तु वा हवेषु आह्वानेषु अस्मान् तृप्यन्तु वा अस्मद्यज्ञेषु ॥

इदमिति ॥ इद नम अन्न प्रणामो वा पितृभ्य अस्तु अद्य अस्मिन् कर्मणि । केभ्य ? ये पूर्वास ईयु पूर्वमेव स्वर्गं गता ये च उपरास ईयु उपरिभूतास्तेषा समीपभूता अन्तरिक्षस्था तेषा वा कुले अन्तरिक्षे स्थिता ये च पार्थिवे रजसि लोके आनिषत्ता आनिषण्णा सन्त । "पृथिव्या ञाञौ" (पा ४ १ ८५ वा २) इति स्वार्थिको ञ । यद्वा– पृथिवीसम्बन्धिनि लोके स्थिता । नूनम इति पादपूरणे । ये वा सुवृजनासु

पितर उत्तमा मध्यमा अधमाश्चेति । यथाविधि श्रौत कर्मानुष्ठाय पितृत्व प्राप्ता उत्तमा । स्मार्तकर्ममात्रपरा मध्यमा । तत्रापि कैश्चित् सस्कारैर्विकला अधमा । एतदेवाभिप्रेत्य "ये अग्निदग्धा येऽनग्निदग्धा" (तैब्रा ३ १ १) इत्यादिर्मन्त्र आम्नात । तेषु अवरे निकृष्टा उदीरताम् उत्तम हवि प्राप्नुवन्तु, परास उत्तमा पितर उदीरताम् । मध्यमा पितरश्च उदीरताम् । ते सर्वेऽप्यस्मद्विषये सोम्यास सोम्या अनुग्रहपरा सन्तु । ये पितर अवृका वृकवदरण्यश्ववदस्मासु हिंसाम कुर्वन्त ऋतज्ञा अस्मदनुष्ठित यज्ञ जानन्त असुम् अस्मत्प्राणम् ईयु रक्षितु प्राप्ता ते पितर हवेषु अस्मदीयाह्वानेषु न अस्मान् अवन्तु ।

इदमिति ॥ अथ द्वितीया– 'इद पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयु' । 'ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु' इति ॥ पूर्वास यजमानोत्पत्ते पूर्वमुत्पन्ना

२५. मे ल–°स्थानस्था । २६ पर–सोम्या । २७ हो–'अद्य' नास्ति । २८ हो– याद । २९–२९ ल–पूर्ववत् । ३०–३० ल–अन्तरिक्षस्था ।

४८–४८ आ हा यथाविध श्रौत, उ–यथा विविधश्रौत, अ इ क ग पा–यथा विधिधं श्रौतं ड–यथाविधि श्रुतं, इ१–तथाविधश्रौत° । ४९–४९ ड–कर्मानुष्ठातृत्वम्, इ१–कर्मानुष्ठाय पितृत्वम् । ५०–५० इ१– 'स्मार्तकर्ममात्रपरा मध्यमा' नास्ति । ५१ आ क–केचित् । ५२ ड हो१–°विहीना । ५३ आ क °ष्वस्मिन् विषये ।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥

अध । यथा । नः । पितरः । परासः । प्रनासः । अग्ने । ऋतम् । आशुषाणाः ।
शुचि । इत् । अयन् । दीधितिम् । उक्थशासः इत्युक्थ शासः ।
क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥

शोभनधनासु ^v^ऋषु प्रजासु कर्मशीलासु निषण्णा । यद्वा–उपरास उपरणशीला निवृत्तिप्रधाना पार्थिवे पृथिव्या भवे रजसि कर्मणि पुण्यापुण्यात्मके व्यामिश्रे निषण्णा सुवृजनासु शोभनधनासु कर्मशेषधनासु धार्मिकेषु अपापासु प्रजासु निषण्णा तेभ्य सर्वेभ्यो नमोऽस्त्विति ॥

अधेति ॥ ^v^अध अत एव कर्मसामर्थ्यात् अस्माक ^v^परास पूर्वे ^v^पितर ^v^प्रत्नास ततोऽपि पूर्व पितर, हे ^v^अग्ने, ^v^ऋत सत्य यज्ञ वा ^v^आशुषाणा अश्नुवाना । अश्नोते छान्दसे लिटि रूपम्, तत्र क्वसुकानचोश्छान्दस समावेश । अयस्मयादित्वेन भत्वात् (पा १ ४ २०) द्वयो सम्प्रसारणम् (पा ६ ४ १३१) । यद्वा–द्विविकरणत्व लिटि व्यत्ययेन भवति, उप्रत्यय । ते च ^v^शुचि शुद्ध स्थानम् । ^v^इत् इति अवधारणे । *शुच्येव स्थान यथा ^31^^v^अयन् आगच्छन् ^v^दीधिति स्थान तद्योगात् ताच्छब्द्यम् । ^v^उक्थशास उक्थै स्तोत्रै । यमप्रत्यय ॥

ज्येष्ठभ्रातृपितृपितामहादय ^v^ये ^v^ईयु पितृलोक प्राप्ता । ^v^ये चान्ये ^v^उपरास ^54^यजमानजननादुपर्युपरि कनिष्ठभ्रातृस्वपुत्रादय ईयु पितृलोक प्राप्ता । ^v^ये अप्यन्ये ^v^पार्थिवे पृथिवीसम्बन्धिनि ^v^रजसि रजोगुण कार्येऽस्मिन् कर्मणि ^55^आनिषत्ता हवि स्वीकर्तुमागत्योपविष्टा । ^v^ये ^v^वा ^v^केचिदन्ये बन्धुवर्गरूपा पितरो बहुबन्धुरूपासु ^v^विक्षु प्रजासु आनिषत्ता श्राद्धादिस्वीकारायाऽऽगत्योपविष्टा । यादृशीषु विक्षु? ^v^सुवृजनासु वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजन धन, शोभन वृजन यासां ता सुवृजनास्तादृशीषु धनसमृद्धया श्राद्धादिकर्मपरास्वित्यर्थ । तेभ्य ^56^सर्वेभ्य ^v^पितृभ्य ^v^अद्य अस्मिन् कर्मणि ^v^इद ^v^नम ^v^अस्तु अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥

अधेति ॥ अथ तृतीया– 'अधा यथा न पितर परास प्रत्नासो अग्न ऋतमाशुषाणा । शुचीदयन् दीधितिमुक्थशास क्षामा भिन्दन्तो अरुणीरप व्रन्' इति ॥ हे ^v^अग्ने, ^v^अध अधस्तादतीते काले ^v^न अस्माक ^v^पितर ^v^ऋतम् ^v^आशुषाणा यज्ञमश्नुवाना ^v^शुचि ^v^इत् शुद्धमेव स्थान यथा येन प्रकारेण ^v^अयन्

*–* नि ल हो–'शुच्येव स्थानम् पितरस्तेषाम्' नास्ति । 31. मै४–आयन् ।

५४ ह ४१–८ हो–°जनन उप° । ५५ आ–आनीता । ५६ आ–ये चान्ये । ५७ आ–सौम्य उक्तेभ्य ।

यद॑ग्ने (४) कव्यवाहन पि॒तॄन् यक्ष्यृ॑ता॒वृधः॑ ।
प्र च॑ ह॒व्यानि॑ वक्ष्यसि दे॒वेभ्य॑श्च पि॒तृभ्य॒ आ ॥

यत् । अ॒ग्ने॒ (४) । क॒व्य॒वा॒ह॒नेति॑ कव्य - वा॒ह॒न॒ । पि॒तॄन् । यक्षि॑ । ऋ॒ता॒वृध॒ इत्यृ॑त - वृधः॑ ।
प्रेति॑ । च॒ । ह॒व्यानि॑ । व॒क्ष्य॒सि॒ । दे॒वेभ्य॑ । च॒ । पि॒तृभ्य॒ इति॑ पि॒तृ - भ्य॒ । आ ॥

यदिति अनुष्टुप् ॥ हे अग्ने कव्यवाहन हविषो वाहक, यत् यस्मात् पितॄन् ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितॄन् यक्षि यजसि। "बहुलं छन्दसि" ( पा २·४·७३ ) इति शपो लुक्। तस्मात् त्वमेव हव्यानि प्रवक्ष्यसि प्रवहसि देवेभ्य च पितृभ्यः च। आकार· समुच्चये। तस्मादेवं महानुभाव त्वामेव वय यजाम इति ॥

त्वमिति ॥ हे अग्ने जातवेदः जाताना वेदित प्रजावेदित, त्वम् ईडित स्तुत, अवाट् हव्यानि। वहेश्छान्दसो लुङ्। ततश्च तानि सुरभीणि कृत्वा पितृभ्यः प्रादाः प्रदेहि स्वधया अन्नेन सहैव। तत ते पितरः तानि प्रयतानि शुद्धानि हवींषि अक्षन् अदन्तु।

प्रासवन्तः दीधितिं दीप्यमानां पितृरूपां देवताम् उक्थशासः शस्त्रैः शंसन्तो वयमपि [58]तथैव [59]छन्दमेव स्थानं प्राप्ताः स्म इति [60]शेषः। कीदृशाः पितरः? परासः अस्मत्त उत्कृष्टाः [61]पितृपितामहप्रपितामहादयः प्रत्नासः पुरातनाः पित्रादिभ्योऽपि पूर्वभाविनः। किं च [62]ते पितर[62] क्षाम क्षयहेतुं स्वकीयं क्षुदुपद्रवं भिन्दन्तः [63]अन्नेन हविषा [64]नाशयन्तः अरुणीः तेजोरूपा [65]दीप्ताः प्राप्य अपव्रन् फलप्रतिबन्धकं [66]प्रावरणमपावृर्वन् ॥

यद्दिति ॥ अस्मिन् [67]महापितृयज्ञकर्मणि शाखान्तरेऽन्यदपि हविर्द्वयं विहितम्– 'अग्नये कव्यवाहनायैकं यमायाङ्गिरस्वते पितृमते द्वितीयम्' [68]इति। अत एव सूत्रकार आह– "अथैषाम्। सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपाल पितृभ्योऽग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते" ( आपश्रौ ८·१३·१६ ) इति। तत्र कव्यवाहनस्य प्रथमां पुरोनुवाक्यामाह– 'यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः। प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ' इति ॥ कव्यं वहतीति कव्यवाहनः [69]पित्र्योऽग्निः। अत एवाऽन्यत्र श्रुतम्– "त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणाꣳ सहरक्षा असुराणाम्" (तैस २·५·८) इति ॥ कव्यस्य [70]पित्र्यस्य हविषो वाहक हे अग्ने, यत् यस्मात् कारणात् ऋतावृधः यज्ञवर्धकान् पितॄन् यक्षि यजसि तस्मादेव कारणात् त्वं देवेभ्यः पितृभ्यः च हव्यानि [71]प्र च वक्ष्यसि[71] पुनः पुनः प्रवर्तत: परमपि हविर्वहनं करिष्यसि ॥

५८. इ.हो१–'तथैव' नास्ति। ५९. आ–उच्चमेव। ६०. आ.क–'शेषः' नास्ति। ६१. आ.क.इ.द१.ग१–पितृपितामहादयः। ६२–६२. आ.क–'ते पितरः' नास्ति। ६३. इ.द१–अनेन। ६४ द१–विनाशयन्तः। ६५. अ.आ इ.उ.क.जो.ना.पा हा–'ताः' इ.ग१–दीप्तीः। ६६. आ.क–अपमरावृण्वन्। ६७. आ–इद (विदो) पितृ°; द१–महापशोपितृ°। ६८. इ.द१–'इति' नास्ति। ६९. आ.क–पितृभ्योऽग्निः। ७०. हो१–पित्रियस्य, आ.–भव्य। ७१–७१. आ.क–प्रावक्ष्यसि।

त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि ।
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
याꣳश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति (५) ॥

त्वम् । अग्ने । ईडित । जातवेद इति जात वेद । अवाट् । हव्यानि । सुरभीणि । कृत्वा ।
प्रेति । अदा । पितृभ्य इति पितृ भ्य । स्वधयेति स्व-धया । ते । अक्षन् ।
अद्धि । त्वम् । देव । प्रयतेति प्र यता । हवीꣳषि ।
मातली । कव्यै । यम । अङ्गिरोभिरित्यङ्गिर -भि । बृहस्पति । ऋक्वभिरित्यृक्व भि । वावृधान ।
यान् । च । देवा । वावृधु । ये । च । देवान् ।
स्वाहा । अन्ये । स्वधयेति स्व-धया । अन्ये । मदन्ति (५) ॥

अदेश्छान्दसो "लुङ्सनोर्घस्लृ" (पा २ ४ ३७) इति घस्लादेश, "मन्त्रे घस°" (पा २ ४ ८०) इति च्लेर्लुक्, "घसिभसोर्हलि च" (पा ६ ४ १००) इत्युपधालोप । देव, त्वम् अपि तानि हवींषि अद्धि भक्षय सततमस्मानुपकारिण कुर्विति भाव ॥

वावृधान इति ॥ प्रत्येक कव्यादिभि सपद्यते । मातलिना तद्वानिन्द्रो मातलि (ली)। छान्दस इनिर्व्रीह्यादिवद्द्रष्टव्य (पा ५ २ ११६)। स कव्यै कव्यवाहिभि पितृभि सह वावृधान वर्धमान । शप श्लु, ताच्छीलिकश्चानश् । यम पितृराज, स अङ्गिरोभि पितृविशेष सह वावृधान । बृहस्पति ऋक्वभि मन्त्रवद्भि स्तुतिमद्भिर्वा पितृविशेषै सह वावृधान ।

त्वमिति ॥ द्वितीया पुरोनुवाक्यामाह–'त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादा पितृभ्य स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि' इति ॥ जात सर्वं वेत्तीति जातवेदास्तथाविध हे अग्ने, त्वम् ईडित यजमानेन स्तुत सन्तदीयानि हव्यानि सुरभीणि सुगन्धीनि कृत्वा अवाट् वहन् कृतवानसि । कृत्वा च पितृभ्य प्रादा । ते च पितर स्वधया स्वधाकारेण प्रत्तं हव्यम् अक्षन् अदन्तु । हे देव, त्वम् अपि प्रयता प्रयत्नसम्पादितानि हवींषि अद्धि भक्षय ॥

मातलीति ॥ अथ याज्या– 'मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधान । याꣳश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयाऽन्ये मदन्ति' इति ॥ मातलिरिन्द्रस्य सूतस्तद्वानिन्द्रो मातली । स च कव्यै कव्यभागिभि पितृभि सह वावृधान वर्धमानो भवति । यमश्च अङ्गिरोभि पितृविशेषै सह वर्धमानो भवति । बृहस्पतिश्च ऋक्वभिः ऋक्प्रतिपाद्यै पितृविशेषै सह वर्धमानो भवति । तत्र देवा इन्द्रादय यान् कव्यभागादीन् पितॄन् वावृधु वर्धयन्ति, ये च कव्यभागादय पितर इन्द्रादीन् देवान् वर्धयन्ति, तेषां मध्ये अन्ये इन्द्रादय स्वाहा मदन्ति स्वाहाकारेण तृप्यन्ति । अन्ये पितर स्वधया स्वधाकारेण तृप्यन्ति ॥

७२ आ–जगद्देति । ७३ आ क–'इन्द्राद्य' नास्ति । ७४ आ क ग–'अन्य' नास्ति । ७५ आ–तृप्यन्ति ।

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥
अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥

इमम् । यम । प्रस्तरमिति प्र - स्तरम् । एति । हि । सीद ।
अङ्गिरोभिरित्यङ्गिरः भिः । पितृभिरिति पितृ - भिः । संविदान इति सं विदान ॥
एति । त्वा । मन्त्राः । कविशस्ता इति कवि शस्ताः । वहन्तु । एना । राजन् । हविषा । मादयस्व ।
अङ्गिरोभिरित्यङ्गिरः भिः । एति । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व ।
विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । एति । निषद्येति नि - सद्य ॥

" छन्दसीवनिपौ " ( पा ५·२·१०९ वा २ ) इति वनिप्प्रत्ययः, अयस्मयादित्वेन पदत्वात्कुत्व, भत्वाज्जश्त्वाभाव । Vयान् Vच पितॄन् Vदेवाः Vवावृधुः वर्धयन्ति । व्यत्ययेन परस्मैपदम्, तुजादित्वादभ्यासस्य दीर्घत्वम् ( पा ६ १ ७ ) । Vये Vच पितरः Vदेवान् वावृधुरिति । ये च तत्र Vअन्ये एके देवा पितॄणा वर्धयितार स्वाहाकारेण Vमदन्ति मोदन्ताम् । अथ Vअन्ये एके पितर Vस्वधया स्वधाकारेण मदन्तीत्येव । माद्यतेर्व्यत्ययेन शः ॥

इममिति ॥ हे पितृराज, Vइमम् Vप्रस्तर प्रस्तीर्णमाश्रमम् Vआसीद Vअङ्गिरोभि. पितृविशेषै Vसंविदानः ऐकमत्य गच्छन् । तत आसीदन्त त्वा कविशस्ताः कविभिर्मेधाविभि. आस्माकीनै ऋत्विग्भि. शस्ता Vमन्त्रा Vआवहन्तु प्राप्नुवन्तु । तत Vएना अनेन Vहविषा Vराजन् राजनशील, Vमादयस्व । मद तृप्तियोगे, चौरादिकः ॥

अङ्गिरोभिरिति ॥ हे Vयम, Vअङ्गिरोभि सह Vआगहि आगच्छ । पूर्ववत् शपो लुक् । Vयज्ञियेभिः यज्ञार्हैः Vवैरूपैः विविधकर्मरूपसबन्धिभि , वैरूपसामप्रियैर्वा । यद्वा–स्वार्थिकोऽण् ।

इममिति ॥ अथाङ्गिरस्वतो यमस्य प्रथमां पुरोनुवाक्यामाह–' इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ' इति ॥ हे 'यम, 'अङ्गिरोभिः एतन्नामकैः 'पितृभिः 'संविदानः ऐकमत्यं ⁷⁶प्राप्तः 'इमं 'प्रस्तर प्रस्तीर्णं यज्ञविशेषम् 'आसीद आगत्योपविश । 'हि यस्मादुपविशसि तस्मात् 'कविशस्ताः विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता. 'मन्त्राः त्वाम् 'आवहन्तु । हे 'राजन, 'एना अनेन 'हविषा तुष्टः 'मादयस्व यजमान ⁷⁷हर्षयस्व ॥

अङ्गिरोभिरिति ॥ अथ द्वितीयां पुरोनुवाक्यामाह–' अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ' इति ॥ हे 'यम, 'वैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा 'यज्ञियेभिः यज्ञयोग्यैः 'अङ्गिरोभिः सह 'आ गहि आगच्छ । आगत्य च 'इह 'मादयस्व यजमानं हर्षय । 'यः 'ते तव 'पिता विवस्वानस्ति त 'विवस्वन्तम् अस्मिन् यज्ञे 'हुवे आह्वयामि । स च 'बर्हिषि 'अस्मिन् 'यज्ञे 'आनिषद्य आगत्योपविश्य यजमानं हर्षयतु ॥

७६ क.ख१.ग१.ङ१–प्राप्त· । ७७. क–हर्षय ।

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे (६) स्याम ॥१२॥

[ भवास्मभ्यमसु यदग्ने मदन्ति सौमनस एकं च ]

[ समिधश्चक्षुषी प्रजापतिराज्यं देवस्य स्फ्यं ब्रह्मवादिनोऽङ्गिरसस्त्रयो मनुः पृथिव्या
पशवोऽग्नीधे देवा वै यज्ञस्य युक्ष्वोशन्तस्त्वा द्वा॰ -शः । ]

[ समिधो याज्या तस्मान्नाभागꣳ हितमन्वित्याह प्रजा वा आहेत्याह युक्ष्वा हि संततिः ]

[ समिधं सौमनसे स्याम । ]

[ वायव्यं प्रजापतिरादित्येभ्यो देवा विश्वरूप समिधः षट् । ]

[ मैस ४·१०·६; १४·१६ ]

---

अङ्गिरसः । नः । पितरः । नवग्वा । अथर्वाणः । भृगवः । सोम्यासः ।
तेषाम् । वयम् । सुमताविति सु-मतौ । यज्ञियानाम् । अपीति । भद्रे । सौमनसे (६) । स्याम ॥१२॥

---

विरूपैः विविधरूपैः सह [v]इह कर्मणि [32][v]मादयस्व । अथ [v]य तव [v]पिता त [v]निविस्वन्तं [v]हुवे आह्वयामि । स अपि [v]अस्मिन् [v]यज्ञे आगत्य [v]बर्हिषि [v]निषद्य मादयताम् ॥

अङ्गिरस इति ॥ [v]अङ्गिरस पितृविशेषा अस्माकं च [v]पितरः [v]नवग्वा अभिनवगमनाः आगमने अभिनवा इव प्रिया । क्विपि "ऊङ् च गमादीनाम्" (पामा ६ ४·४० ) इत्यूकार. । आगमनमायातु उपसर्गयो स्वस्थानविनिमय. वा बहुव्रीहौ । नवग्वा [v]अथर्वाण च [v]भृगवः च पितृविशेषाः प्रशस्ताः [v]सोम्यास. सोमार्हा. येऽप्येवविधा महानुभावा पितर । [v]तेषां [v]यज्ञियाना यज्ञार्हाणा [v]सुमतौ शोभनाया मतौ सानुग्रहायां [v]वय [v]स्याम भूयास्म । [v]अपि च [v]भद्रे भजनीये कल्याणे [v]सौमनसे सौमनस्यहेतुके तत्प्रदानहेतुके सर्वाभिमतसिद्धिरूपे

---

अङ्गिरस इति ॥ अथ याज्यामाह– 'अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यास. । तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ' इति ॥

अङ्गिरोनामका अथर्वनामका भृगुनामकाश्च [v]नः अस्माकं [v]पितरः [v]नवग्वाः [78]'अभिनवागमनयुक्ताः [79]'तदा तदा'[79] नूतनवत् प्रीतिजनका इत्यर्थः । ते च [v]सोम्यासः, सोममर्हन्तीति'[80] सोम्याः । [v]यज्ञियानां [v]तेषां [v]सुमतौ अनुग्रहयुक्तायां [81]'बुद्धौ [v]वयं [v]स्याम सर्वदा तिष्ठेम । [v]अपि च [v]सौमनसे सौमनस्यकारणे [v]भद्रे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥

---

३२. मै४–'मादयस्व' इत्यस्यानन्तरं 'मोदयस्व' ।

---

७८. द.हो१–नवागमन°; द१–अभिनवगमन° । ७९–७९. द.हो१–तथा । ८०. आ.फ–'इति' नास्ति । ८१. द१–प्रबुद्धा ।

कल्याणे च [v]स्याम इति। येऽत्र अविनियुक्ता मन्त्राः ते लिङ्गेन क्वाप्यनुरूपे कर्मणि विनियोक्तव्याः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे षष्ठे प्रश्ने द्वादशोऽनुवाकः ॥

समाप्त षष्ठ· प्रपाठक· द्वितीयकाण्डश्च ॥

[३३]एष निष्पाप(व)के शाके कुशिकान्वयजन्मना।
भट्टभास्करमिश्रेण ज्ञानयज्ञ. प्रकीर्तित [३३]॥

अत्र विनियोगसंग्रहः –

"उशन्तः सामिधेन्येका पितृयज्ञे महत्यसौ।
त्वं सोमेत्यनुवाक्ये [८२-]द्वे पितृमत्सामके तथा[-८२]॥
त्वं याज्याऽग्निष्वेति मन्थेऽनुवाक्या प्रथमा भवेत्।
बर्हिद्वे अनुवाक्ये [८३]तु याज्यैका बर्हिषद्यजौ ॥
उपहोमा उदीरेति [८४]त्रयस्तत्रैव यागके।
कव्यवाहनयागे तु यदग्ने तिस्र ईरिताः ॥
पुरोनुवाक्ये द्वे तत्र याज्यैका याम्ययागके।
इमं पुरोनुवाक्ये द्वे याज्यैका पूर्ववन्मता ॥
अन्तिमे ह्यनुवाकेऽस्मिन मन्त्राः सप्तदशेरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठः प्रपाठकः ॥

इति [८५-]श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन[-८५] माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयः काण्डः समाप्तः ॥

---

३३-३३. मै मै४–'एष निष्पाप(व)के शाके कुशिकान्वयजन्मना ॥ भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः ॥' नास्ति।

---

८२. ड–तत्र याज्यैकाया तथा। ८३. ड–हि। ८४. आ,क–त्रयस्त्र्यत्रयागके। ८५. ड–श्रीमद्-विद्यायोगेन्द्राज्ञादियीरबुक्कमहीपस्य आज्ञाधुरंधरेण।

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ८ | भ्रना | भ्रुना |
| ४० | ४ | इ॒दम॑भवद्रु॒प॑॰ | इ॒दम॑भूवद्रु॒प॑॰ |
| ८२ | ३ | परि॑ज्मेति | परि॒ज्मेति |
| १३३ | २ | स्यु(३)रिती॰ | स्यु॒(३)रिती॰ |
| १३५ | १२ | इती॑ द्वे-द्वे | इ॒ति द्वे-द्वे |
| २०९ | १ | पुरो॒डाश॑॰ | पु॒रो॒डाश॒॰ |
| २६९ | ४ | ॰न्द्रियाव॑र्ती॰ | ॰न्द्रि॒याधृ॒ती॰ |
| ४४९ | ३ | ॰द॒क्षिणा॒र्ध्ये॑ | ॰दक्षि॒णा॒र्ध्ये॑ |

## टिप्पणी

१२९ तमे पृष्ठे चतुर्थपङ्क्तौ सं॑मी॒युरिन्द्र॑मे॒व इति संहिता पाठः, एकादश्या पङ्क्तौ च स॒मी॒युरिति॑ सम्-ई॒यु इति पदपाठश्च मैसूरावृत्तिमाश्रित्य स्वीकृतौ। आनन्दाश्रम मुद्रित पुस्तके सातवळेकर संपादित संहितापुस्तके अन्येषु लिखितपुस्तकेषु च सं॑मि॒युरिन्द्र॑मे॒व इति संहितापाठोऽस्ति वेबरमुद्रित पुस्तकेऽपि sam-iyur इत्येव पाठोऽस्ति। कुम्भकोणम्-आवृत्तौ च स॒मि॒युरिति॑ सम् इ॒यु इति पदपाठः स्वीकृतो दृश्यते।

कल्याणे च [४]स्याम इति । येऽत्र अविनियुक्ता मन्त्राः ते लिङ्गेन क्वाप्यनुरूपे कर्मणि विनियोक्तव्याः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
द्वितीये काण्डे षष्ठे प्रश्ने द्वादशोऽनुवाकः ॥

समाप्तः षष्ठः प्रपाठकः द्वितीयकाण्डश्च ॥

[३२]एष निष्पाप(व)के शाके कुशिकान्वयजन्मना ।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः[३३] ॥

अत्र विनियोगसंग्रहः –

" उशन्तः सामिधेन्येका पितृयज्ञे महत्यसौ ।
त्वं सोमेत्यनुवाक्ये [८२]द्वे पितृमन्नामके तथा[८२] ॥
त्वं याज्याऽग्निष्वेति मन्येऽनुवाक्या प्रथमा भवेत् ।
बर्हिर्द्वे अनुवाक्ये [८३]तु याज्यैका बर्हिषद्यजौ ॥
उपहोमा उदीरेति [८४]त्रयस्तत्रैव यागके ।
कव्यवाहनयागे तु यदग्ने तिस्र ईरिताः ॥
पुरोनुवाक्ये द्वे तत्र याज्यैका यास्ययागके ।
इमं पुरोनुवाक्ये द्वे याज्यैका पूर्ववन्मता ॥
अन्तिमे ह्यनुवाकेऽस्मिन् मन्त्राः सप्तदशेरिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयकाण्डे षष्ठः प्रपाठकः ॥

इति [८५]श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा-
परिपालकेन[८५] माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
द्वितीयः काण्डः समाप्तः ॥

---

३२-३३. मै.मै४–' एष निष्पाप(व)के शाके कुशिकान्वयजन्मना ॥ भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रकीर्तितः ॥ ' नास्ति ।

---

८२. ब–तत्र याज्यैकाया तथा । ८३. ब–हि । ८४. आ,ब–त्रयस्त्र्यग्रयागके । ८५. ब–श्रीमद्-विद्यतीर्थेन्द्रराजादिवीरबुक्कमहीपालस्य आज्ञाधुरंधरेण ।

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ८ | ध्रया | ध्रुया |
| ४० | ४ | इदर्मभयद्वयं९ | इदर्मभूयद्वय९ |
| ८२ | ३ | परिंज्मेति | परिज्मेति |
| १३३ | २ | स्यु(३)रिती° | स्युु(३)रिती° |
| १३५ | १२ | इतिं द्वे-द्वे | इति द्वे-द्वे |
| २०९ | १ | पुरोडार्श° | पुरोडाश° |
| २६९ | ४ | °न्द्रियार्वती° | °न्द्रियावती° |
| ४४९ | ३ | °दक्षिणार्ध्यं | °दक्षिणाध्यं |

## टिप्पणी

१२९ तमे पृष्ठे चतुर्थपङ्क्तौ संमीयुरिन्द्रंमेव इति संहिता-पाठ; एकादश्या पङ्क्तौ च समीयुरितिं सम्-ईंयु इति पदपाठश्च मैसूरावृत्तिमाश्रित्य स्वीकृतौ। आनन्दाश्रम-मुद्रित पुस्तके सातवळेकर संपादित संहितापुस्तके अन्येषु लिखितपुस्तकेषु च संमियुरिन्द्रंमेव इति संहितापाठोऽस्ति वेबरमुद्रित पुस्तकेऽपि sam-iyúr इत्येव पाठोऽस्ति। कुम्भकोणम्-आवृत्तौ च समियुरितिं सम् इयु इति पदपाठ स्वीकृतो दृश्यते।